अवपुर्वृजनं दिवं सुरा-
रिपदं देवपथो घनाश्रयः ।
भपथो सुरिसाव्ययं [!] सुवर
नीरे चाकाशविहायसी उभे ॥ २ ॥

मातृ[ता]शब्दगुणः क्लीबं द्यौदिवौ स्त्रियौ ।
त्रिषु तारकितं व्योम यदि संततरातारकम् ॥ ३ ॥

देवपथप्रतिकृतौ [!] पुंसि देवपथो भवेत् ।
यदभ्रमिव तत्राभ्यमभ्रियं त्वभ्रसंभवम् ॥ ४ ॥

उदवाह-बलाहक-मेघ-घन-
स्तनयि[18a]त्नु-सरण्यु-नभःकरिणः ॥
नुदनुर्मुदिरो वनजो गगन-
ध्वज-वारिध्वजाम्बुद-वारिमुचः ॥ ५ ॥

जीमूतोऽभ्रचरो गडेर-सरटौ धाराधरः कंधरो
नभ्राडभ्र-तमाल-सानुग-नभो-धूमाश्च धूमोद्भवः ।
पर्जन्यो गडयन्तकः सलिलभृत्तद्वत्तडित्वान्मरुद्-
दारुः पुंसि पयोधसाभ्रमयुगे स्त्रीपुंसयोर्वार्मसि[ः] ॥ ६ ॥ ७ ॥

घनाघनो वर्षुकोऽसावुदमेघोऽथ[?]मेघ्यं मेघभवे ।
कादम्बिनी मेघमाला स्यात्काली कालिका च सा ॥ ८ ॥

पुष्करावर्त-शङ्खाङ्ग-कालकान्ति-जलप्लवाः ।
ताडित्वनं सुचां वंशे मेघध्वान्ते तु दुर्दिनम् ॥ ९ ॥

वार्दलं च द्वयोर्गर्जः परिघोषो घनध्वनिः ।
स्तनितं रसितं क्लीबे समे गर्जितगर्जने ॥ १० ॥

---

575 A स्त्रियौ ॥ ३१
576 A °रितं १
578 A तत्राभ्य १ मभ्रियं २
582 B धूमभवा° for वारिध्वजा°
585 For lines 585-6, B subst.:
पर्जन्यो गडयित्नुवच्च गदयित्न्वभोभृतो वायुदा-
र्वभोवाहनवार्मसी च गडयंतः स्यात्तडित्वान्दरः ।,
followed by पयोधाः शब्रि[द्रि]र्दर्भ च कंदो
१९ क्षौ स दु वर्षुकः (corrupt).
586 A वामसि ॥ २२
587 A मेघ्यं १; For line 587, B subst. :-
घनाघनोभ्रंलिहाभ्रंकषौ दृष्तदादिषु ।
उदमेघो घनानिभ [!] मेघ्यं तु मेघजम् ।
589 A °वर्ते १ शङ्खाङ्ग १; °कान्ति १; °प्लवाः १
590 B चतुर्धांशु-for ताडित्वनं; वंशो for वंशे
591 B गर्जा for गर्जः; गर्जिः पुंसि for परिघोषो
592 A °गर्जने ७

शम्पा सम्पा विद्युदम्भोदवल्ली
सौदाम्नी सौदामिनी ह्रादिनी च
सौदामन्याकालिकाकालिकी स्यात्
सर्जूर्वीणा च छटाभा तडिच्च ॥ ११ ॥
क्षणप्रभा च क्षणिका चञ्चला च शतह्रदा ।
ऐरावत्यशनिर्ह्रादे वृष्टिः स्त्री वर्षमस्त्रि[18b]याम् ॥ १२ ॥
वर्षप्रमाणे सति गोःपदादि–
पूर्योऽव्ययं गोःपदपूरमत्र ।
स्याद्गोःपदप्रं च तडागपूरं
तथा तडागप्रमनव्ययं च ॥ १३ ॥
................नलः पुंसि तदन्तरम् ।
रंहसा प्रोच्चलद्वारिनिःस्वने घर्घरो नरि ॥
आसारो घनधारः स्याद्वर्षो वर्षोपले पुनः ।
पयोघनो रोधरङ्कुस्तोयडिम्भो घनोपलः ॥ १४ ॥
मेघास्थि वीजोऽब्धिकफः करका स्यान्निलिङ्गका ।
पृष्वा तु स्यात्स्त्रियां धाराङ्कुर-शीकर-सीकराः ।
वातास्तमप्यथावर्षेऽवग्राहोऽवग्रहमथ ।
अन्तर्द्धिर्व्यवधिः पुंसि स्त्र्यन्तर्धा व्यवधाऽपिधा ॥ १५ ॥
अपिधानं पिधानोऽस्त्री तिरोधानापवारणे ।
स्थगनं व्यवधानं च छादनं स्त्री तिरोहितिः ॥ १६ ॥
स्त्री दिग्दिशा ककुप्काष्ठा हरिदाशाथ सा यदि ।
तत्क्षणं रविणा भुक्ता भवेदङ्गारिणी तदा ॥ १७ ॥
आसन्नगमना भानोः सा भवेच्च प्रधूमिता ।
रविणाधिष्ठिता दग्धा दिश्यं तु त्रिषु दिग्भवे ॥

598 A °शनि २०; वर्षम २; For line 598, B subst.:
ऐरावती चला शम्पा चपला जलवालिका ॥ १२ ॥
कोस्यप्रियाशनिर्ह्लादी स्त्री वर्षोपि वर्षणम् ॥
धारासंपात आसारो धाराशब्दस्तु घर्घरः ।

601 A °पदप्रं २

603 A नल: १; For lines 603-5, B subst. only:
रोमरं वायुसर्ल वर्षाबीजं च सीकरम् ।

605 A °धारः २

607 A बीजो १; B पुंजो for बीजो.–¹) B वर्षादमा कारका त्रिपु ।

608 B पृष्वा स्त्री न स्त्रियां धारांकुरः शी°

609 A वातास ५; B °ग्रहस्तथा; A °ग्रह २

614 A °रिणी १

615 A °मिता १; B °पिता

616 A दग्धा १ दिश्यं १.–After line 616, A adds: यदविशावशिवर्णसित्य-विर्नुस्त्यधर्मोर्हिदेवधायमिलादौ वर्णसिर्लोकपाल इति वैदमार्ग्यं धारामणं च ( corrupt )

दिशोऽपत्ये[19a]तु दैशेयोऽन्यदाशान्या भवेत्ककुप् ।
क्लीबाव्ययं त्वपदिशं विदिक्प्रदिगिमे समे ।
अन्तरालं विचालं च स्त्रियामभ्यन्तरान्तरे ।
त्रिषु मध्ये चक्रवालं मण्डलं च त्रिलिङ्गकम् ॥ २० ॥
इन्द्रानल-यम-नैर्ऋत-वरुण-मरुद्वित्तपेशानाः ।
घर्णसि-भरथ-दशाना दिक्पतयो लोकपालाश्च ॥ २१ ॥
ऐन्द्री प्राची पूर्वा दक्षिणपूर्वा तथाग्नेयी ।
याम्या त्वगस्तिपूताऽपाची स्याद्दक्षिणाऽवाची ॥ २२ ॥
स्यान्नैर्ऋती दक्षिणपश्चिमाह्वा
स्यात्पश्चिमा या वारुणी शिहयेत् [?] प्रतीची ।
सामीरणी तूत्तरपश्चिमा स्यात्
कौवेर्युदीची च तथोत्तरा स्यात् ॥ २३ ॥
प्रागुत्तरा दिगैशानी प्राच्यं प्राग्दिग्भवं त्रिषु ।
अपाच्यं दाक्षिणात्यं स्यात्प्रतीच्यं पाश्चिमं समम् ॥ २४ ॥
उदीच्यं स्यादुदग्भवं प्राचिका प्राग्दिगर्विका [?] ।
ऊर्ध्वाधरे दिशौ क्वापि ब्रह्मविष्ण्वधिदैवते ॥ २५ ॥
पीलुमूलेनैकदिग्यात्राव्ययं पीलुमूलतः ।
ऐरावतः पुण्डरीको वामनः कुमु[19b]दोऽञ्जनः ।
पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः ॥ २६ ॥

---

617 A दैशेयो१ऽन्यदाशा १
618 A प्रदि ३; B त्रियौ for समे
620 B क्लीबे मध्यं
621 A इन्द्रा १ नल १ यम १ नैर्ऋत १ वरुण १ मरु १ द्वित्तपे १
623 A पूर्वा ३; B परेतरा स्यात् for दक्षिण-पूर्वा; A °ग्नेयी २
624 B दक्षिणपूर्वा याम्या त्वगस्तिपूता च दक्षिणापाची; A °वाची । ५ ।
625 A °श्चिमा२; For lines 625-32, B subst.:
अप्युत्तरेतरायो दक्षिणपश्चिमकनैर्ऋत्यां ।
पूर्वेतरा प्रतीची पाश्चिदारित्पश्चिमा च स्यात् ॥२५॥
दिक्पश्चिमोत्तरा वायोरुत्तरा दक्षिणेतरा ।
उदीची स्यादनदगैशी प्रागुत्तरा मता ॥ २६ ॥
प्राच्यां दिशि भवादर्थे प्राचीनं प्राच्यमन्यवत् ।
अपाचीनमपाच्यं च दाक्षिणात्यमपाग्भवम् ॥२७॥
प्रतीचीनं प्रतीच्यं स्यादुदीचीनमुदीच्यवत् ।
प्राचीका प्रतिमा प्राच्याः स्वभावादेव योषिति ॥२८॥
626 A वारुणी १; प्रतीची २
627 A °पश्चिमा २
628 A °त्तरा ३
629 A प्राच्यं १
630 A °णात्यं २; पाश्चिम २
631 A प्राचिका १
632 A ऊर्ध्वा १ धरे १; ब्रह्म १ विष्ण्व १
633 After line 633, B adds:
ऊर्ध्वाधरे दिशौ क्वापि ब्रह्मविष्ण्वधिदैवते ॥ २९ ॥
634 A ऐरावतः १; वामनः १
635 A °दन्तः १ सार्वभौमः १

अभ्रमुः कपिला तद्वदङ्गदा पिङ्गला क्रमात् ।
तथाऽञ्जनावती ताम्रकर्णी स्याच्छुभ्रदन्तिका ।
तथैवानुपमा प्रोक्ता क्रमाद्दिग्गजयोषितः ॥
रविः शुक्रो महीसूनुः स्वर्भानुर्भानुजो विधुः ।
बुधो बृहस्पतिश्चेति क्रमादेते दिशां ग्रहाः ॥ २७ ॥

सूर्यः स्यादरुणः सहस्रकिरणो भास्वान्विवस्वान्रविर्
भानुर्भानु-दिवाकरौ दिनमणिः प्रद्योतनो भास्करः ।
आदित्यः सविताऽर्यमा यमपिता पीतुः पतंगः खगः
पाराः पेहरिनो हरिश्च तपनोऽर्कस्तापनः स्वर्मणिः ॥ २८ ॥
सप्ताश्वो मिहिरश्च शूर-महिरौ पीथो द्युमा दर्शतः
भासन्तः सहुरिर्भुवन्यु-तपुषौ पूषा च दोषान्तकृत् ।
हंसो हेलिरहर्पतिर्महपतिः स्याद्भापतिर्गोपतिः
स्यूनोऽब्जः किरणोंऽशुमान्कमलिनीकान्तो भगोऽहस्करः ॥ २९ ॥
ब्रध्नोऽशुर्दिवसप्रणीश्च तरणिर्मार्तण्ड-चण्डद्युती
मार्ताण्डोऽरुण[20a]सारथिर्दिनकरो मित्रो रथाङ्गप्रियः ।
अज्ञिष्ठोऽप्यथिपः-सरोरुहसुहृत्रष्ट्वस्तमीमूर्चिमान्
ज्योतिर्वित्सरमूर्तिरम्बुजकरः सूरोऽप्यरूपः शुचिः ॥ ३० ॥
स्युर्द्वादशात्मनि विकर्तन-चित्रभानु-
त्वष्टृ-प्रभाकर-विभाकर-पर्प्परीकाः ।
सौरो विभावसु-विरोचन-कर्मसाक्षि-
धामन्धकाररिपवो यमुनापिता च ॥ ३१ ॥
नासत्यतात-हरिदश्व-सहस्रपादः

636 A अभ्रगुः १; °ऽरदा १
638 B अष्टौ for क्रमात्
639 A रविः १; °चन्द्र १ स्वर्भानु १ भानुजो १ विधुः १
640 A बुधो १; °स्पति १
641 B भास्वन्तः for स्याद°
645 B ह्यहाम for च दात-
646 B om. तपुषौ
647 B द्युत्स्यमा गोपति. for स्याद्भा°
649 B मार्तण्डो for च तरणिर्
650 B मार्तण्डारुण°; महुतो for दिनकरो
657 For lines 657-66, B subst:-
स्थिर-वैरिबन्धु-भवेकाः [!] पद्मानि
दिवसकर-दशानोष्मांशयधांशुदल्मः ।
मतिलक-बहुरूप-प्रद्र-भानेमि-धाचि-
त्रिदशाल-सहस्रांशुः कपिलोऽकंबंधुः ॥ ३८ ॥
वेदोदयः पुष्कर-भानुकेयाः
पुष्कराग्मोजाम्बरगप्रभाः (corrupt) ।
पर्वोर्णमप्रातिमालि-कालकृत्-
दुर्गमास्यन्दन-सौर्भीयकाः ॥ ३९ ॥
कुरुत्कारुत्नैनिना पुगाकुरु
छादित-ग्रहेश-हरि-तुरगाः ।
मान्तुमुरवो गुरुनन्दप्ती
मेदरवी गुरुवैचनाना: ॥ ४० ॥
मदुरवराश्रिनिन्नु तालिद्विष्ट प्रमाशान्तकृत् ।
संचरार्क च गुला रथम हो देवरेनता एधी ॥४१॥

संज्ञेश-कर्णजनकौ कराः कुपाकुः ।
किं चैकचक्ररथ-वासरबान्धवौ तत्
छायापसूर्सुरहयावपि लोकनेत्रम् ॥ ३२ ॥
पर्पीजिष्णुर्जगत्साक्षी गभस्तिर्गगनध्वजः ।
मन्देहारिर्दशान[!]श्च कज्जारो गगनाध्वगः ॥ ३३ ॥
प्रत्यूपाण्डः खतिलको जगद्दीपोऽम्बुतस्करः ।
वेदोदयः सहस्राक्षो रात्रिहृत्रिदशावृतः ॥
संवत्सररथः कालभृत्सा लोकप्रकाशनः ।
सूर्यस्य स्त्री देवता चेत्सूर्या सूरीतरा भवेत् ।
त्रिप्वतः सूर्यदेवत्यादित्या सौरी च ऋग्मुखा ॥ ३४ ॥
ब्राध्नापत्यो ब्रध्नगोत्रापत्ये ब्राध्नायना[20b]जसि ।
आर्कायनिस्तु निर्वृत्ते भानवीयं तु तस्य यत् ।
स्यान्माठर्यो माटरोऽथ दण्ड-पिङ्गल-माठराः ॥ ३७ ॥
स्युः पारिपार्श्वका भानोः संज्ञा छाया च तत्स्त्रियौ ॥
परिवेषस्तु परिधिः परिवेशश्च मण्डलम् ॥ ३८ ॥
उपसूर्यकमप्यन्त्ये रेवन्तस्त्वर्कनन्दनः ।
प्लवगो हयवाहः स्यादरुणस्त्वर्कसारथिः ॥ ३९ ॥
काश्यपिः प्लवगो वैनतेयो गरुडपूर्वजः ।
हम्रो[!]नूरुश्च सूर्येन्द्वोर्ग्रासे स्वर्भानुकेतुतः ॥ ४० ॥
उपप्लवो ग्रहश्चोपरागो ग्रहणमित्यपि ।
उत्पातस्तूपसर्गोपद्रवाविति स्त्रियां न तु ॥ ४१ ॥

---

662 A °ध्वगः ११
666 A सूर्या १ सूरी १
667 A सौरी २; B ऋगादिका for च ऋग्मुखा
668 A °पत्यो १; °यना १; B transp. lines 668 and 669
669 A भानवीयं १
670 A दण्ड १ पिङ्गल १; For lines 670–6, B subst.:
इन्द्राद्या एव देवादिसंज्ञास्तत्परिपार्श्विकाः ।
स्यात्स्वनामध्ये दण्डः समो माठरमाठरौ ।
पिङ्गलो वामनस्त्वन्यो रामघोषा[!]दयः परे ॥ ४४ ॥
रेवंतः प्लवगो वाजिवाहनः सूर्यवीर्यजः ।
अरुणो विपुलस्कन्धः काश्यपिर्गरुडाग्रजः ॥ ४५ ॥
अनूरुरारमनो रम्रः सूरसूतश्च काश्यपिः ।
वैनतेयो महासूतो मंडलं तूपसूर्यकम् ॥ ४६ ॥
परिधिः परिवेशश्च परिवेष इमे समाः ।
ग्रहणो [ग्रसने?] राहुकेतुभ्यामिंदुभास्करयोः ॥ ४७ ॥
671 A °र्श्वका १; संज्ञा १ छाया १
674 A °वाहः ४
677 A ग्रहण ४
678 B °द्रवावीति: परे स्त्रियः

अजन्यमुपलिङ्गं चारिष्टमौत्पातिकं भवेत् ।
पुष्पवन्तौ पुष्पदन्तौ पुष्पदन्ताभिधावपि ॥ ४२ ॥
एकयोक्त्या मतावत्र सूर्याचन्द्रमसावुभौ ।
सूर्यादौ संमुखे तीव्रे स्याल्ललाटंतपोऽन्यवत् ॥ ४३ ॥

कर-किरण-मयूखाभीषु-रश्म्यंशु-गावः
शुचि-वसु-घृणि-घृण्णि-प्रग्रहोस्रा गभस्तिः ।
उपधृतिरपि रोकः स्यूम-पादौ च पृश्निः
*****मरीचिर्दीधितिः स्त्री पदं च ॥ [21a] ४४ ॥

छवि-द्युति-द्युद्रुचि-रुक्-त्विषि-त्विद्
प्रभा-विभा-भायुजि दीप्तिरेव ।
ज्योतिर्विषो [?] धाम-महो-महार्चिर्-
वर्चांसि रोचिश्चरमे च शोचिः ॥ ४५ ॥

उद्योो[द्द्यो]तः प्रद्योतः प्रकाश आलोक आतपो घर्मः ।
भर्गस्तेजो द्योत्रं छाया स्यादातपाभावः ॥ ४६ ॥

स्याच्छारदः शारदिक आतपो यः शरद्भवः ।
तिग्मं तीक्ष्णं रौद्र-तीव्रे चण्डमुष्णद्रवाङ्कः [?] ॥ ४७ ॥
उष्णंकरणमुष्णस्य करणे स्यान्नपुंसकम् ।
कोष्णं कवोष्णं मन्दोष्णं कदुष्णं च बहूष्णवत् ॥ ४८ ॥
उष्णकल्पं चोष्णदेश्यमुष्णदेशीयमित्यपि ।
तिग्मादि त्रिषु तद्वत्सु मृगतृष्णा मरीचिका ॥ ४० ॥

शुक्रः सितो दैत्यगुरुर्मघाभूः
काव्यः कविः स्यादुशनाश्च धिष्ण्यः ।
स्यात्षोडशार्चिर्भृगु-भार्गवौ च
तथाऽऽस्फुजिच्छुक्रभवं तु शौक्रि ॥ ४७ ॥

---

679 A °रिष्ट ७ मौत्पातिकं; After 679, B adds:
स्याद्व्योमशब्दो निर्घातो व्योममुद्गर इत्यपि ।
680 –°) B पुष्पवन्ता°; A °भिधा ३
682 A °तपो १
686 B युगुल इह for *****; A स्त्री ३१
688 B वायुजि for भायुजि
689 B ज्योतिर्नेना
690 B रोचिश्च विरोचिशोचिः ।; A शोचिः २१
692 B गर्भस् (for भर्गस्, metathesis?); A छाया १; After 692, B adds:
झल्लिर्झाला तपोर्मिश्च मर्कराग्रे नवार्कभाः ।
693 A शारादिक २
694 B °मुष्णं खरं पट्ट
702 A °स्फुजि १२

शुक्रायास्तु स्त्र्यपत्ये स्याच्छौक्रेयी पुरुषे पुनः ।
शौक्रेयोऽथ द्वयोः शौक्रिर्नृन्यपत्ये हि शुक्रजे ॥ ४८ ॥

आषाढीयो मङ्गलो लोहिताङ्गो
भौमो वक्रोऽङ्गारकः स्यान्नवार्चिः ।
आरो[21b]ऽषाढः पिप्पलादस्तुतश्च
क्रूराक्षः स्याल्लोहितः खोल्मुकश्च ॥ ५० ॥

राहौ स्युर्ग्रहकल्लोल-सैंहिकेय-विधुंतुदाः ।
अगु-स्वर्भानु-भरण-भारणाभ्रपिशाचकाः ॥ ५१ ॥
छायाङ्गोऽपि तमो मुण्डः कृष्णवर्त्मा तमोऽस्त्रियाम् ।
केतुः शिखी च विशिरा उत्प्लवो विकचोऽहिकः ॥ ५२ ॥
अश्लेषाभूः कबन्धः स्यादार्द्रलुब्धक अङ्गिजः ।
छायापथो देवपथोऽपत्ये दैवपथायनिः ॥ ५३ ॥
मन्दशृ-छायातनयः पातंगि-क्रूरदृक्-शनयः ।
असित-शनैश्चर-नीलाम्बर-यम-सप्तार्चिषः कोणः ॥ ५४ ॥
रेवतः स्याद्रैवतिकः पङ्गुः क्रोडश्च कोलवत् ।
श्रुतश्रवोनुजो गृध्ररथः केकरलोचनः ॥ ५५ ॥

चन्द्रश्चन्दश्चन्दिरश्चन्द्रमाः स
इन्दुः सिन्धूत्थः सुधांशुः सुधासूः ।
तारापीडस्तारकेशो द्विजेशः
राजा सोमः पक्षजन्मा परिज्मा ॥ ५६ ॥
क्लेदा खेहात्रेयकोऽप्यक्षिजो ग्लौः
तुङ्गीशः सोमैणलक्ष्मा शशाङ्कः ।
श्वेताश्वोऽब्जः पर्वकृच्छर्वरीकृत्
विक्लवश्च कौमुदीशो विकुसः ॥ ५७ ॥
सुधानिधि-कलानिधी [22a] सवन ओषधीशो विधुः
वलक्षगु-निशामणी तपस-रोहिणीवल्लभौ ।

---

703 A शौक्रेयो १; शौक्रि १

704 B विद्द for पुनः

707 B स्यात्कुजंथरुगात्रः for पिप्पलादस्तुतश्च

711 B °वर्त्मापरागकः; A °स्त्रियाम् ॥ ४ ॥ —After 711, B adds.
उपप्लवो देवताडस्तमोऽभ्यूर्ध्वकचः पुनः ।

713 B कर्दंवश्वांप्रिजार्द्रा लुब्धकावपि ।

714 A देवपथो १२; °यनिः । १

718 B °नुजो वक्रो गृध्रगः केकरेक्षणः; A °लोचनः ६;—After 718, B adds:
स्थिरो ब्रह्मण्य-यमक-शतकर्म-महामहाः ॥ ६८ ॥

720 B [अ]मृतांशुः for सुधांशुः

हिमद्युति-तमोनुदौ कुमुदिनीपतिः पारदो
हरिः कुमुदबान्धवो दशहयश्च जैवातृकः ॥ ५८ ॥
छायाङ्क-रत्नकर-दर्शविपच्छुभाङ्ग-
लक्ष्मीसगर्भ्य-खिदिरामति-सारसोर्णाः ।
राकापतिर्ग्रहपतिस्तिजिलश्च सुभ्रो
गौरो नभश्चमस एणविशेषकश्च ॥ ५९ ॥
तिथिप्रणीश्च पाथोऽब्धिनवनीतमिहामृतम् ।
प्रतिपच्चन्द्रमा मासप्रमितः परिकीर्तितः ॥ ६० ॥
सौमी स्यात्सोमदेवत्या सौम्या सोमीयमन्यवत् ।
चन्द्रातपश्चन्द्रगोली चन्द्रिका कौमुदी तथा ।
ज्योत्स्ना च षोडशोऽस्यांशः कलाऽसौ षोडशी ध्रुवा ॥ ६१ ॥
अमा महाकला बिम्बस्त्वस्त्री स्यान्मण्डलं त्रिषु ।
नेमो ना खण्ड-शकल-खण्डलानि न योषिति ॥
अर्द्धस्त्रिषु समेंऽशेऽर्द्धं भित्तं शल्कं दलं समम् ।
स्त्री फालिरर्द्धा तज्जादावथार्द्धपरिमाणके ।
अर्द्धिकः स्त्री स्यार्द्धिकास्या भवेच्चान्द्रार्द्धिकाद्धि च ॥ ६३ ॥
भवेच्चन्द्रार्कं कुर्द्धकं सूर्यार्द्धकं तारार्द्धकं त[22b]था ।
पूर्वार्द्धं पूर्वमर्द्धं स्यात्पश्चार्द्धं त्वपरं हि तत् ।
पौर्वार्द्धिकं च पू[पौ?]र्वार्द्धं भवेत्पूर्वार्द्धसंभवम् ॥ ६५ ॥
पौर्वार्द्धिकस्तु पौर्वार्द्धो भवेद्ग्रामैकदेशके ।
त्रिषु देशैकदेशेऽपि स्त्रियां पौर्वार्द्धिकी भवेत् ॥ ६६ ॥
अंशः स्याद्वण्टको भागः पादस्तु स तुरीयकः ।
लक्षणं लक्ष्मणं लक्ष्म लाञ्छनं केतनोऽस्त्रियाम् ॥ ६५ ॥

---

730 After line 730, B adds:
स्पंदः पर्वेरिन्विः स्वरिंधुरपि च क्लेदु-क्लिद-ग्लेहवो
यक्ष्मेशौषधिगर्भ-नैमि यजता जर्ण॰ श्रविष्ठापतिः ।
रावोत्थो बहुलाभवश्च शयतो दाक्षायणीनायको
राड्राजश्च तिथिप्रणीरपि तपोराजश्चकोरोत्सवः॥७२
731 B शुभांशु-for शुभाङ्ग-
732 B °सारसाश्च
735 For lines 735–6, B subst.:
समुद्रनवनीतं च स मासप्रमितो नव॰
737 A सौमी १;-°) A सौम्या १; B सौम्या
सौम्या च तत्समा for the post. half
738 B चंद्रिका चंद्रिमा चंद्रगोली ज्योत्स्ना च
कौमुदी
739 A ज्योत्स्ना ५; कला १; B चंद्रातपः
षोडशोस्यांशः कला षोडशी ध्रुवा
740 A °कला ४; मण्डलं २
743 A फालिरर्द्धा १; B फालिरर्द्धं
744 A अर्द्धिक॰ १; B सार्द्धिकी स्याद्
745 B om. line 745; A कुर्द्धकं १
सूर्यार्द्धकं १ तारार्द्धकं १
746 A पूर्वार्द्धं १; °मर्धं १; पश्चार्द्धं १
747 B °ध्वमवे

अभिज्ञानं चिह्नमङ्कः कलङ्कोऽथ प्रसन्नता ।
प्रसत्तिः स्त्री प्रसादो नाऽथो शोभा लवणा छविः ॥ ६६ ॥
आभाऽभिख्या विभूषा श्री-र्लक्ष्मी-कान्ति-द्युति-त्विषः ।
राढा छाया विभ्रमो ना सुषमा परमा छविः ॥ ६७ ॥
वश्यायः स्यादवश्यायो नीहारोऽस्त्री तुषारकः ।
वियद्बाप्पेन्द्राग्निधूमौ निशाखेद-निशाद्रवौ ॥ ६८ ॥
अवश्या मिहिका च स्त्री प्रालेयं तुहिनं हिमम् ।
**न स्त्री हिमानी तु धूमिका तु कुहेलिका ॥ ६९ ॥
धूमरी धूममहिषी कुहरिर्दिग्वगुण्ठनम् ।
शिशिरं शीतलं शीतं सुशीतमहिमास्त्रियाम् ॥
तुषारं च जडं क्लीबे गुणे तद्वति मेघवत् ।
अस्ति यत्र[23a]हिमं तत्र हिमं हिम्यं भवेत्रिषु ॥ ७१ ॥
च्व्यर्थे क्त्वान्तकृञो योगे स्याच्छीतंकृत्य तत्र च ।
शीतंकृत्वाऽप्यव्यये द्वे पद्धिमं पादयोर्हिमम् ॥ ७२ ॥
ध्रुव औत्तानपादिः स्याद्ब्रह्माधारः सुनीतिजः ।
ज्योतीरथ्योऽप्यथागस्त्योऽगस्तिर्वातापिसूदनः ॥ ७२ ॥
आग्निमारुत आग्नेय और्वशेयो घटोद्भवः ।
भवेदुदयनो मैत्रावरुणिः सिन्धुपो मुनिः ॥ ७३ ॥
द्वयोरगस्तयोऽगस्त्यगोत्रापत्येषु कीर्त्तिताः ।
निवृत्तेऽगस्तिनाऽऽगस्त्यमागस्तीयास्तु तस्य ये ॥ ७४ ॥
लोपामुद्रा तु वरदा सा स्त्री कौपा[ शा ? ]तकी मता ।
मरीचिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः ॥ ७५ ॥

---

748 B °देशक:
750 A भागः ३
752 B चिह्नांकली अभिज्ञाने कलंकांकौ प्रसत्तिवत्
753 A प्रसादो ३; B प्रसन्नता for प्रसत्तिः स्त्री
755 A विभ्रचो १४; सुषमा १
758 A हिमं ॥ २४ ॥
759 A हिमानी २; B न स्त्री हिमानी तु महत् for prior half; B कहेलिका (?)
760 A °ष्ठनं १९
761 B सुशीमं for शिशिरं; —*) B चंदं च हिममप्रियाम्
762 *) B मङ्सुपारशिशिरे
763 B reads this line after line 765 ; A हिम्यं २
765 A पद्दिमं १
767 B ज्योतिरथ्यो
770 For line 770, B subst.:
विंध्यकूटो दक्षिणाशारतिश्च कलशीसुतः ।
सत्याभिर्वादनिः धाणि[ यि ? ]गोत्रापत्यान्यगस्तयः ।
771 A °गस्तिया १
772 A °तकी ३ मता २; B वरदागस्ती; च सा for मता
773 A मरीचि १ रङ्गिरा १ अत्रिः १ पुलस्त्यः १; क्रतुः १

वसिष्ठ एते स्युः सप्तर्षयश्चित्रशिखण्डिनः ॥ ७६ ॥
वसिष्ठो गोभिनन्दी स्यादक्षमाला त्वरुन्धती ॥ ७७ ॥
भं नक्षत्रं धिष्ण्यमृक्षं तारावत्तारका त्रिपु ।
न पुंस्युडु ग्रहोऽथ स्यात्तज्जे नाक्षत्रमे त्रिपु ॥ ७८–७९ ॥
दाक्षायण्यश्चन्द्रकान्तास्तारा अश्वयुगादयः ।
अश्विन्यश्वकिनी दास्री वालिनी अश्वयुक्[23b]समाः ॥ ८० ॥
त्रिपु जाते प्रत्ययान्ता वक्ष्यमाणास्तथा लुकि ।
अथाऽश्वयुक्चाश्वयुजोऽश्विनीजातस्तथाश्विनः ।
याम्या तु भरणी त्रय्यां तज्जे भरण-भारणौ ॥ ८१ ॥
कृत्तिका बहुला भूम्नि तज्जे बहुल-कार्त्तिकौ ।
ब्राह्मा[ह्मी] तु रोहिणी तत्र जाते रौहिण-रोहिणौ ॥ ८२ ॥
रोहिणी त्वत्र जातायां सौम्यं तु मृगशीर्षकम् ।
न पुंसि स्यान्मृगशिरः स्त्रियां स्यादाग्रहायणी ॥ ८३ ॥
मृगो मार्गोऽथैतदूर्ध्वं ताराः सौम्येन्वकेल्वलाः ।
जातेऽत्र मार्गशिरसस्तथा मृगशिरा अपि ॥ ८४ ॥
आर्द्रा स्यात्कालिनी रौद्री तज्ज आर्द्रक उच्यते ।
पुनर्वसौ यामकौ च सौरौ जातः पुनर्वसुः ॥ ८५ ॥
द्वयोः पुष्यस्तिष्यसिद्धौ[ध्यौ] बार्हस्पत्योऽप्यथात्रजे ।
तिष्यः पौषोऽथ तिष्यस्य पुनर्वस्वोश्च भूम्न्यपि ॥ ८६ ॥
इतरेतरयोगे स्यान्नित्यं द्विवचनान्तता ।
द्वंद्वे पुनः स्यादश्लेषा सार्थाऽश्लेषस्तु तज्जनिः ॥ ८७ ॥
मघा पित्र्या भूम्नि जाते माघः स्यान्मघ इत्यपि ।
फल्गुनी भगदेवत्या पूर्वा तज्जस्तु फल्गुनः ॥ ८८ ॥

774 A वसिष्ठ १
775 A नंदी ३
776—[a]) B न स्त्रियामुडु पुंसि न [?]
777 For line 777, B subst त्रिपु तारा तारके द्वे ग्रहो भं त्रिपु भोऽडुघ.
778 A °कांता २
779 A अश्वयुक् ५
782 A मरणी २; B नाम for त्रय्या
783 —[a]) A °कार्त्तिकौ २; B आग्नेयी बहुलो मवे
784 A रोहिणी २, रोहिणौ ॥ २ ॥; B रोहणी
785 A रोहिणी १
786 B स्त्रितये for न पुंसि
787 A मार्गो ६; °केल्वलाः ॥ २ ॥
789 A रौद्री ३
791 A °स्पत्यो ४
794 A ऽश्लेप १
795 B पित्रा मघा
796 A °देवत्या २; फल्गुनः ॥ १ ॥; B भगद्धनी (corrupt) for फल्गुनी

तत्र जा[24a]ता यदि स्त्री स्यात्फल्गुनी सा निगद्यते ।
उत्तरा स्यादार्यमणी तज्जाते त्वौत्तरोत्तरौ ॥ ८९ ॥

रविदेवो द्वयोर्हस्तस्तज्जे हस्तोऽथ नृस्त्रियोः ।
चित्रा त्वाष्ट्र्यथ तज्जा स्त्री चित्रा चैत्रो परो द्वयोः ॥ ९० ॥

स्वातिः स्वाती वायवी च सौवातः स्वातिरत्रजः ।
राधे विशाखे ऐन्द्राग्न्यौ विशाखस्तज्ज ईरितः ॥ ९१ ॥

मैत्री स्यादनुराधायामनुराधस्तु तज्जनिः ।
ऐन्द्री ज्येष्ठाऽथ तज्जातो ज्यैष्ठो ज्येष्ठश्च गद्यते ॥ ९२ ॥

कर्णीसुतो मूलदेवो मूलभद्रः कलाङ्कुरः ।
आश्रयो मूलमस्त्री स्यान्नैर्ऋत्यं मूलकोऽत्रजः ।
पूर्वाषाढाम्बुदेवत्या स्यादषाढाऽत्रजाङ्गना ॥ ९३ ॥

आषाढीयोऽपरोऽषाढो वैश्वदेवी मतोत्तरा ।
अभिजिद्विधिदेवत्यस्तज्ज आभिजितोऽभिजित् ॥ ९४ ॥

अभिजिद्देवता यस्य स्यात्स आभिजितश्चरुः ।
भवेदाभिजितस्तद्वन्मुहूर्तोऽभिजिता युतः ॥ ९५ ॥

स उत्तराया अन्त्योऽङ्घ्रिः श्रवणस्यादिमोऽभिजित् ।
स्त्रीपुंसयोर्ऋक्षभेदे श्रवणं श्रुति[24b]कर्णयोः ॥ इति रभसः ।
* * * श्रवणो द्वंद्वः श्रवणः श्रावणोऽत्रजः ॥ ९५ ॥

श्रविष्ठा वसुदेवत्या धनिष्ठा वात्रजः पुनः ।
श्राविष्ठीयः श्रविष्ठश्च धानिष्ठोऽपि धनिष्ठवत् ॥ ९६ ॥

---

798 A °मणी ३
799 A °र्हस्त २; हस्तो १
800 A त्वाष्ट्र्य १; चित्रा १ चै १
801 A वायवी २; स्वाति २
802 A ऐंद्राग्न्यौ ३
803 A °राधाया २ मनुराध १; B °नुराधानु-राधा तज्जोनुराधकः
804 A ज्येष्ठा २; ज्येष्ट २
805 B पुलांगरः (corrupt) for कलाङ्कुरः
806 A नैर्ऋत्यं ७
807 A °देवत्या २; °षाढा १; B भवेदापी for म्बुदेवत्या
808 A ऽपरोषाढो २ वैश्वदेवो १ मतोत्तरा ॥ ९।
809 A °देवत्य २; °भिजित् ॥ ९ ।
810 B om. lines 810–11
813 B om. line 813.
814 A द्वंद्वः २; श्रावणो २; B वैष्णवः श्रवण द्वंद्वे for the prior half
815 A धनिष्ठा ३
816 A धनिष्ठवत् ॥ ४ ॥

स्याद्वारुणी शतभिषक्तस्यां शतभिषा शतः ।
अथो शतभिषग्जातः स स शातभिषो भवेत् ।
तथा शतभिषक्तस्मिन्स्याच्छातभिषजोऽपि सः ॥ ९७ ॥
पूर्वोत्तरा भद्रपदा द्वय्य प्रोष्ठपदा इमाः ।
अजैकपादहिर्बुध्नदेवतास्तत्रजः पुन. ॥ ९८ ॥
भवेद्भाद्रपद॰ प्रौष्ठपाद प्रौष्ठपदोऽपि च ।
रेवती पूषदेवी भनेमिस्तज्ज्ञा तु रेवती ॥ ९९ ॥
ध्रुवाणि भानि रोहिणी तथोत्तरात्रयं जगुः ।
मृदूनि रेवती मृगः स मैत्रचित्रया युत. ॥ १०० ॥
क्षिप्राणि तान्यश्वकिनी च हस्तः
पुष्योऽभिजियाथ मघा त्रिपूर्वा ।
याम्या तयोग्राण्यथ मूलमार्द्रा
ज्येष्ठा हि दैवी च सुदारुणानि ॥ १०१ ॥
स्वातिः श्रविष्ठा श्रवणः पुनर्वसू
याद.पतेर्भं च चराणि निर्दिशेत् ।
मिश्राणि राधा बहुलेति सप्तधा
भेदा उडूना कथिता बु[25a]धोत्तमैः ॥ १०२ ॥
श्राविष्ठीय इलेशो ज्ञो रौहिणेय॰ प्रहर्षणः ।
पञ्चार्चिर्बुध एकाङ्गश्चान्द्रिश्चान्द्रमसायनिः ॥ १०३ ॥
वाचस्पतिः सुरगुरुर्गुरुराङ्गिरोजो
जीवो बृहस्पतिरुतथ्यकनिष्ठ इज्यः ।
स द्वादशार्चिरपि चित्रशिखण्डिजन्मा
स्याद्दीदिविर्धिषण गीर्पति-फल्गुनीजाः ॥ १०४ ॥
प्र[च ?]क्षाः प्रचक्षा वाग्वाग्मी [गी]रथश्च महामतिः ।

817 B शतं for शत
818 A भवेद।४।,-For lines 818-9, B subst.:
तज्ज्ञ शातभिष. शातभिषज शततोभिषक् ।
819 A °भिषजो ३
820 A पूर्वोत्तरा १, °पदा ३
821 For lines 821-3, B subst·
अजाहिर्बुध्नदेवाश्च तज्जात प्रौष्ठपादवत् ॥ १४ ॥
भाद्रपादो भाद्रपदो भवेत्प्रौष्ठपदोपि स ।
पौष्णं न भमि-रेवत्याथत्र जाता च रेवती ॥ १५ ॥
822 A °पदोपि
823 A भनेमि ३
824 A ध्रुवाणि १
827 B °भिजिचाथ
829 A °दारुणानि १
832 A मिश्राणि १
835 B च बुध श्याम for बुध एकाङ्ग.—⁵) A °मसायनि १०
840—⁵) B महाश्रीगौरगीरथे—After line 840, B adds
कचस्तु तस्य पुन स्याताारा पत्नी समीरिता ।

रविरिन्दुः कुजः सौम्यो वागीश उशनाः शनिः ।
राहुः केतुश्चेति नव ग्रहाः खेटाश्च कीर्त्तिताः ॥ २ ॥
मेषादयो द्वादश राशयो भ-
क्षेत्राभिधाना उदयस्तु तेषाम् ।
लग्नोऽस्त्रियामर्द्धकमस्य होरा
द्रेक्काणको लग्नतृतीयभागः ॥ ३ ॥
मेषः क्रियोऽथ वृषभस्तावुरिनामाथ जितुमकं मिथुनम् ।
कर्क-कुलीरौ लेयः सिंहः कन्या तु पार्थो[थो]नः ।
जूकस्तुलाथ कौर्पी वृश्चिकनामाऽश्वितौ क्षिकौ धनुषि ।
आकोकेरो मकरो मृगोऽथ हृद्रुग्घटोऽथ मीनोऽन्त्यः ॥२ ॥ ५ ॥
मेषः कर्कटकस्तुला च मकरश्चत्वार एते चलाः
गौः सिंहो [25b]लिघटौ स्थिराश्च मिथुनं कन्या धनुर्मीनकाः ।
एते स्युर्विनिसर्गका अथ पुमानोको हि राशिस्थलं
संक्रान्तिर्भवति स्त्रियां रविगता चेदस्त्रियां संक्रमः ॥ ६१ ॥
स्थिरभे विष्णुपदी स्यात्षडशीतिमुखं द्विशीलेषु ।
मेषे तुलासु विषुवद्विषुवं त्वस्त्री पुमांस्तु विषुणोत्र ॥ ७ ॥
कर्के दक्षिणमयनं मकरे तूत्तरमथांशकैः प्राक्चेत् ।
संक्रमणं तरणेः स्याच्चलसंक्रम ईरितस्तर्हि ॥ ८ ॥
संक्रान्तिध्रुवतारकेषु गदिता मन्दाथ मन्दाकिनी
मृद्वीष्वड्षु राक्षसी तु कथिता क्रूरेषु घोराः पुनः ।
स्यादुग्रेषु महोदरीषु चरभे ध्वाङ्क्षी त्वसौ क्षिप्रभे
मिश्रेष्वड्षु मिश्रितेषु गदितास्ताः सप्तभेदा बुधैः ॥ ८ ॥

इति व्योमवर्गः ।

---

844 A °भिधाना २
845 A लग्नो १; होरा १
846 A द्रेक्काणको १
847 A क्रियो २; मिथुनम् ॥ २
848 A पार्थोनः । २ ।
849 A °नामा २; धनुषि २
850 A मृगो ३; °ग्घटो२थ मीनोऽन्त्यः २
851 A चला १
852 A स्थिरा १ श्च
853 A °सर्गका १; °नोको १
854 B चेप्वस्त्रियां for चेद°;–After line 854, B reads lines 859–62.
855 A विष्णुपदी १; °मुखं १
856 B विषुवं विषुवच्चास्त्री पुमांश्च
857 A °मयनं १; तूत्तर १; B मकरेकेतूत्तर°
858 A चलसंक्रम १
859 A मंदा १ थ
861 A महोदरी १; ध्वांक्षी १ त्वसौ क्षि १; B महोदरी तु
862 B मिश्रिते विगदि°
colophon: B इति हृदयकल्पतरौ व्योमवर्गः

कालोऽमतिश्चायतिरप्यनेहा
  स वत्सरात्मा समयो भवन्तः ।
पारुश्च पीयुर्जहकोऽपि जिम्रि-
  र्यातुश्च दिष्टो लग्नः सर्वमुट्ट च ॥ १ ॥
स्यात्कालकालः किल नित्य एष
  ईशात्मकोऽसाविति कालविज्ञाः ।
यावत्परार्द्धं स निमेष[26a]तोऽन्य-
  स्तं वानुमिन्वन्ति दिनेशगत्या ॥ २ ॥
भूतो व्यतीतः स इहाव्ययं प्राक्
  पुमान्भवन्तिः स च वर्त्तमानः ।
तत्कालके त्वेकपदं तदात्वं
  भावी च भूष्णुर्गदिताऽयतिः स्त्री ॥ ३ ॥
तात्कालिका तु तत्कालजाता तात्कालिकी त्रिषु ।
समयाकरणं कालयापनं न नरीरितम् ।
स्यात्कालिकं सामयिकं भवादौ
  काल्यं प्रकृष्टे त्विह कालिकं स्यात् ।
काल्यं तथा सामयिकं च तद्वत्
  संप्राप्तकाले त्रिषु कालिकादि ॥ ४ ॥
स्याद्द्वादशारं किल कालचक्र-
  माधारपट्टं त्ववसर्पिणी स्त्री ।
उत्सर्पिणी स्यात्षडरा परे च
  बौद्धादिशास्त्रेष्वनयोः प्रचारः ॥ ५ ॥

---

863 For lines 863-6, B subst.:
  कालो दिष्टोऽनेहा
जहको जिम्रिर्भवन्नवर्पोऽतीश्च ।
  अमतिर्यातुः पीयुः
सर्वमुडामतिरिद्दास्त्रियां समयः ॥ १ ॥
866 A सर्वमुट्ट च ॥ १४ ॥
868 A °विज्ञाः ॥ ४
871 A प्राक् ३
872 A भवंतिः १
873 A तदात्वं २
874 A °ताऽऽयति ॥ऽ ३ स्त्री; B स्त्रियां भवेदायतिरे व्यतीहा.
875 B transp. तात्कालिका and तात्कालिकी; A तात्कालिकी ३
876 A °यापनं २; °रितं ॥ ४ ।; B °करणं तु स्यात्काल्येयं कालयापनं; After line 876, B adds:
स्यात्पाकयज्ञिकः कालः पाकयज्ञस्य यो भवेत् ।
नवयज्ञस्य यः कालः स भवेन्नावयज्ञिकः ॥ ५ ॥
खले यवं लूयमानयवमित्यादि चाव्ययम् ।
तत्तत्कालविशेषे स्याल्लूयमानबुसं तथा ॥ ६ ॥
878 A काल्यं ३; कालिकं १
879 A °यिकं २
881 A °चक्रं १
882 A °सर्पिणी १
883 A उत्सर्पिणी १

लघ्वक्षरोच्चारणतुल्यमात्रः
काले निमेषो निमिषोऽपि पुंसि ।
द्वयोस्तुटिस्तौ दशभिस्तु ताभिः
प्राणोऽथ षड्भिः किल तैर्विनाडी ॥ ६ ॥
पलं च न स्त्री गुरुवर्णषष्ट्या
षष्ट्या पलैः स्याद्घटिकात्र नाडी ।
साधारणी स्त्री तु न दण्डमाहुर्
मुहूर्तमेतद्द्वितयेन न स्त्री ॥ ७ ॥
पुंसि क्षणोऽश्वत्थ इह स्त्रि[26b]यां न
सूर्यादिकानां भणितं मुनीनाम् ।
काष्ठाः किलाष्टादशकैर्निमेषैस्
तत्त्रिंशतः स्त्री गदिता कला* ॥ ८ ॥
त्रिंशत्कलाकः कथितः क्षणो ना
ते षट् घटीत्युक्तिरहो परेषाम् ।
स्याद् घाटिकं नाडिकमन्त्यलिङ्गं
यन्त्रं घटाज्ञानकरं भवेचत् ॥ ९ ॥
घटिंधमस्त्रिषु भवेद्घटिकायन्त्रवादकः ।
अहोरात्रः पुंसि भवेद् द्युनिशं तु नपुंसके ।
अहोरात्रो मुहूर्तानां त्रिंशता परिकीर्त्तितः ॥ १० ॥
रौद्राभ्युदयिकौ श्वेतसर्पौ मित्राह्वमैत्रकौ ।
पितृचारभटौ भानुवसू तौयाह्वविश्वकौ ॥ ११ ॥

887 A द्वयोर्निमेषैस्तुटि १ स्तौ
888 A प्राणा १ थ
889 A पलं २
890 B om. ( hapl. ) षष्ट्या
891 A दण्ड ४
893 A °णोऽश्वत्थ ३
895 B काष्ठाष्टभिः स्याद्दशभिर्निमेषैः
896 A कला १३;—For lines 896–903, B subst..
ताभ्यां लवस्ते तु दशापि यश्च ।
कालाकलायास्तु युगेन लेश-
स्ते तु क्षणो यश्च दशापि च स्यात् ॥
षड्भिर्घटी तैरथ घाटिकं तद्
यन्त्रं घटीनस्तु घटिंधमः स्यात् ॥ १२ ॥
त्रिंशन्मुहूर्तं द्युनिशं च रात्रिं-
दिवं च नक्तंदिवमन्त्यलिङ्गम् ।
वार्षण्यहोरात्र इहोर्ध्वमौहू-
र्तिक भवेदूर्ध्वमुहूर्तजं यत् ॥
रात्रिंदिव चोर्ध्वमुहूर्तजे तु
स्यादूर्ध्वमौहूर्तिकमन्यगामि ॥ १३ ॥
897 A क्षणो १
898 A घटी १
899 A नाडिक २
901 A घटिंघम १
902 A द्युनिशं २
904 A °यिकौ २; °सर्पौ ३; °मैत्रकौ २; B °यिको; °सर्पो
905 A °भटौ २; °वसू २; °विश्वकौ २

गान्धर्ववैश्वदेवौ च वेधाः कुतपमस्त्रियाम् ।
रौहिणो विधिरैन्द्रस्तु तिलको विभवः पुनः ॥ १२ ॥
ऐन्द्राग्नो निर्ऋतिर्नक्तंचरी वरुणसम्बरौ ।
अर्यमा विजयो योनिर्भग एते दिने क्षणाः ॥ १३ ॥
शांकरश्चाजपादश्च तथाऽहिर्बुध्नमैत्रकौ ।
आश्विनो याम्य आग्नेयो वैधात्रश्चान्द्र एव च ॥ १४ ॥
आदितेयोऽथ जैवश्च वैष्णवः सौर एव च ।
[27a]ब्राह्मो नाभस्वतश्चेति मुहूर्ताः क्रमशो निशि ॥ १५ ॥
द्युर्वासकः [रः ?] प्रतिदिवा नरि दण्डयाम-
सूर्याङ्क-घस्र-घसरा अपि वास्र-वारौ ।
※ ※ ※ ※ ※ ※ ※ ※ ※ ※ ※ ※ ※ ※
※ ※ ※ रोऽपि दिवसोऽह्नि दिवाव्यये स्तः ॥ १६ ॥
ओजस्यमोजसीनं च यदोजोयुगहर्भवेत् ॥ १६ ॥
अध्युष्य(?)हर्दिवं क्लीबे पुण्याहं पुण्यवद्दिनम् ।
सुदिनाहं प्रशस्तं तत्पुंस्येकाहोऽहरेककः ॥ १७ ॥
द्वयोरह्नोः समाहारे द्व्यह एवं त्र्यहादयः ।
द्वयोरह्नोर्भवो द्व्यह्नो द्व्यह्ना स्त्रीति विशेष्यवत् ॥ १८ ॥
द्व्यहीनो द्व्यहनिर्वृत्तो द्वैयह्निक इह त्रिषु ।

906 A °देवौ २; कुत २ प; B गंधर्ववैश्वौ च श्राद्धकालोक्षी कुतपोभिजित्
907 A विधि २; तिलको २
908 A ऐंद्राग्नो २; °चरी २; °संबरौ २; B °संवरौ
909 A विजयो २; भग २; B–विजयौ
910 A शांकर १; °पादश्च १; °र्बुध्न १ मैत्रकौ १
911 A आश्विनो १ याम्य १ आग्नेयो १ वैधात्र १ श्चांद्र १
912 A °तेयो १; जैव १ थ वैष्णव १ स्सौर १
913 A ब्राह्मो १; °स्वत १
914 For lines 914–7, B subst.:
चित्रकेत्वादयः संज्ञास्तैत्तिरीयश्रुतौ स्थिताः ॥१९॥
घस्रो वास्रो घसरो द्युः प्रतिदिवदंड्यामसूर्याङ्काः ।
क्लीबे रत्नद्वि(र्दि)कमहो वासरदिवसौ दिनं चाह्नी२०
दिवाह्नि दिनमित्येतत्त्रयमव्ययमीरितम् ।

918 A °सीनं ३; B °सानं for °सीनं; –°) B तदोजोयुग्विशेष्यवत्—After line 918, B adds:
क्लीबेऽव्ययं प्रत्यये स्यादन्वहं तद्दिनं तथा ।
919 A °र्दिवं १; पुण्याहं १; —°) B यहर्दिनं च न स्त्री स्यात्
920 A °नाहं १; °काहो १; B °रेककं
921 A द्व्यह १ त्र्यह १; —After line 921, B reads line 924 followed by.
शोभनश्चोयुतं सुर्धं सुदिवं सुदिवायुतम् ।,
followed by lines 927–8, 922–3 and 930, omitting lines 925–6 and 929
922 B °र्भवा द्व्यहाथ निर्वृत्ते द्व्यहेन च ।
923 A द्वैयह्निक १; B द्वैयह्निकद्व्यहीनौ द्वौ द्व्यहायमेवलिङ्गकाः ॥ २१

सर्वाह्णः सर्वदिवसः संख्याताह्नो मितं दिनम् ॥ १९ ॥
नक्तंदिवं तथा रात्रिंदिवं क्लीबे रतद्वि(द्दि)कम् ।
अहश्च दिनं तु न स्त्री स्याद्वासरे समार्थकम् ॥ २० ॥
सुप्रातं सुप्रभातेऽह्नि निवृत्तेऽह्नाऽह्निकं त्रिषु ।
आह्नं क्लीबेऽहर्गणः स्यादहोरूपं वरं दिनम् ॥ २१ ॥
क्लीबेऽव्ययं प्रत्यहं स्यादन्वहं तद्दिनं तथा ।
त्रिषु प्रात्यहिकं दैनंदिनं चात्रसमुद्भवम् ।
रवीन्दु-मङ्गल-बुध-गुरु-भार्गव-सौरयः ॥ २२ ॥
सप्त वाराधिपास्तेषां नाम्ना रव्यादिवा[27b]सराः ।
स्याद्भवे संधिवेलायां सांधिवेलं त्रिलिङ्गकम् ।
प्रत्यूष-गोस-गोसर्गाः कल्यं काल्यमहर्मुखम् ॥ २३ ॥
उषः-प्रत्युषसी व्युष्टं प्रभातं च विभातवत् ।
प्रगं क्लीबेऽव्ययं प्रातः प्रगे प्राभातिकं त्रिषु ॥ २४ ॥
प्रातस्तनं चौषसिकं काल्यिकं च प्रगेतनम् ।
उषस्यं स्यादुषोदैव्यं वैयुष्टं व्युष्टदानकम् ।
प्रातस्तन्म(?)श्वतस्तः स्याद्धटिका अरुणोदयः ॥ २५ ॥
संध्या संधा च संधिर्ना सैव प्रोक्ता पितृप्रसूः ।
पुंसि प्राह्णश्च पूर्वाह्णो दिवामध्यं नपुंसके ॥ २६ ॥
माध्यंदिनावर्तने च मध्याह्नो अपराह्णकः ।
सायो विकालः सायाह्नमुत्सूरः सवलिस्तथा ॥ २७ ॥
सायमव्ययमर्सिस्तु भवे सायंतनं त्रिषु ।
आद्यन्तरं तेष्वह्नो वा त्रिसंध्या स्युपवैणवम् ॥ २८ ॥

---

924 A °दिवसः १ संख्याताह्ना १; B °ताह्रो for °ताह्नो
925 B om. lines 925–6.
927 A सुप्रातं १; B °दिकं त्रिषु
929 A वद्दिनं ३; B om. line 929
930 A दैनंदिनं ३; B प्रत्यहिकं दैनंदिनमा-न्वहिकं च तत्
933 For lines 933–4, B subst.:
कुलिकः कालवेला स्यादमघण्टश्च कण्टक. ॥ २८ ॥
वाराद्विन्ने क्रमान्मन्दे बुधे जीवे कुजेक्षणाः ।
गोसः-गोसौ प्रत्यूषो न स्त्री स्त्रीक्लीबपौरुषः ॥२९॥
934 A गोसर्गा १२
935 B अहर्मुखं प्रग– for उषःप्रत्युषसी
936 A प्रगे १४; For line 936, B subst.:
कल्यं काल्यं प्रत्युषोऽव्ये प्रातः प्राह्णे प्रगेऽव्ययम्॥३०॥
938 A दैव्यं १; B दैवं for दैव्यं
939 A दारिका (corrupt) for घटिका.
940 For lines 940–7, B subst.:
प्राह्णः पूर्वाह्णकान्मित्रदेवलः संगवः समौ ।
मध्याह्नस्तु दिवामध्यावर्तने दिनगर्भकम् ।
माध्यंदिनं चापराह्णः सायोऽस्त्री सवलिः पुमान् ३१
विकालोत्सूरसायाह्नदिनांताः सायमव्ययम् ।
941 A पूर्वाह्नो २

पूर्वाह्णतः संगवः स्यान्मुहूर्तत्रितयात्मकः ।
स एव मित्रदेवत्य इति श्रुतिविदो बुधाः ॥ २९ ॥
पूर्वाह्णिकं तु पूर्वाह्णेतनं प्राह्णेतनं भवे ।
प्राह्णः सोढो यस्य भवेत्स्यात्प्राह्णेतन एव सः ॥ ३० ॥
पू[28a]र्वाह्णो यस्य सोढोऽस्ति स पूर्वाह्णतनस्त्रिपु ।
पूर्वाह्णकस्तत्र जातेऽथापराह्णेतनं तथा ॥ ३१ ॥
आपराह्णिकमेतद्धु जातार्थे त्वपराह्णकम् ।
अश्विन्यादियुते कालविशेषे सति भैद्यगः ॥ ३२ ॥
आश्विनो दिवसो रात्रिस्त्वाश्विनी दिनमाश्विनम् ।
अथ कालविशेषे स्यादघा(?)श्विन्यावमू त्रये ॥ ३३ ॥
अश्विन्यादि द्वंद्वभाजि विशेषे सति वाऽसति ।
अश्विनीभरणीयं स्यात्कृत्तिकारोहिणीयवत् ॥ ३४ ॥
राजनी(?) स्यात्तिष्यपुनर्वसवीयं न्यु(?)दाहृतिः ।
गताहः कल्यमन्स्ये ह्यः पूर्वेद्युर्मतमव्ययम् ॥ ३५ ॥
तद्धु ह्यस्त्यं ह्यस्तनं च श्वस्तरे(?)द्युसमेऽव्ययम् ।
शौवस्तिकं श्वस्तनवं श्वस्त्यं चैतद्भवे त्रिपु ॥ ३६ ॥
अपरस्मिन्नह्नि भवेदपरेद्युरथाधरे ।
दिनेऽधरेद्युरन्यस्मिन्नन्येद्युरितरं दिनम् ॥ ३७ ॥
इतरेद्युश्चाऽन्यतरेद्युस्तदन्यतरद्भवेत् ।
उभयद्युस्तूभयेद्युरपरं तच्च परेद्यवि ॥ ३८ ॥

---

946 A साय ७; °तनं १
947 A °देवल २
948 A प्राह्णेतनं १
949 A °तन १; –For lines 949–52, B subst.:
प्राह्णेतनश्च पूर्वाह्णे तन्म (?) पूर्वाह्णसोढके ।
अपराह्णपूर्वाह्णकादि स्यात्तत्र जन्मनि ॥ ३५ ॥
अपराह्णेतनं चापराह्णिकं च त(द्)द्भवे ।
सायंतनं तथा सायंप्रातिकं स्यात्तद्भवे ॥ ३६ ॥
संधिवेलाभवं सांधिवेलं संधिः पितृप्रसूः ।
संध्या संध्याग्निसंध्ये तु क्लीबे स्यादुपवेणवम् ॥३७॥
950 A °तन१त्रिपु
952 A °ह्णिकरमे°; °ह्णकं १
953 B °वेन्यग आश्विनः
954 A रात्रि १ स्त्वाश्विनी १; °श्विनम् १.; B om. lines 954–5.
955 A °श्विन्या१ध°
956 B °षे तत्र चासति
957 A °णीयं १; °णीय १
958 B रजनी; –°) A °वीयं १; B °वीयेत्युदा°
959 A पूर्वेद्यु१मं°
960 B श्वस्तरेद्युस्त्वपाम्यये
961 A ह्यस्त्यं१; B श्वस्तनश्च for °नवं; B च श्वो भवेन्मयद् for चैत°; –After line 961, B reads line 967.
962 A °रेद्यु १
963 A °रेद्यु १; °न्येद्यु १; B °रितररिने
964 A °रेद्यु २; °रेद्यु १

पूर्वेद्युः स्यात्पूर्वदिनमुत्तरेद्युस्तदुत्तरम् ।
अस्मिन्दिनेऽद्याव्ययं स्यात्तद्भवेऽद्यतनं त्रिषु ॥
[28b]निशीथिनी निषद्वरी विभावरी च ***र्वरी ।
तमस्विनी च यामिनी रा तन्यतुस्तमा तमी ॥ ३९ ॥
निशान्धिका च सर्वरी तमीश्च शर्वरीनिशौ ।
उषा क्षपा च वाशुरा हिमांशुकामिनी तथा ॥ ४० ॥
श्यामा त्रियामा क्षणदा च रात्रिः
स्याद्वासतेयी वसतिश्च तुङ्गी ।
उषा च दोषा रजनी च भौती
नक्तं तु दोषाऽव्ययमत्र रात्रौ ॥ ४१ ॥
ज्यौत्स्नी ज्योतिष्मती च स्याद्रात्रिश्चन्द्रिकया युता ।
तामसी तु तमिस्रा सायं धं(?)तमसंयुता ॥ ४२ ॥
यक्षरात्रिस्तु दीपाली रत्नाली दीपशृङ्खला ।
मृगनेत्रा पुष्यनेत्रा या मृगादिभनेत्रका ॥ ४३ ॥
पक्षिणी स्त्री वर्तमाना ** ** द्वर्गध्यगा निशा ।
रात्रिद्वयस्य मध्यस्थं दिनमुक्तं च पक्षिणी ।
गणरात्रं निशावृन्दं गर्भकं रजनीद्वयम् ॥ ४४ ॥
रात्रकं पञ्चरात्रं स्यात्त्रिरात्रं रजनीत्रयम् ।
हिडिः स्त्रियां रजन्यां यत्क्रियते रक्षणं शिशोः ।
प्रदोषो रजनीवक्त्रं निशीथस्त्वर्धरात्रकः ।
स्यात्सर्वावसरः पुंसि स्त्रियामत्र महानिशा ॥ ४५ ॥

966 B om. line 966.
967 B reads line 967 after 961
968 B कर्वरी for *र्वरी
969 A सर्वतन्यतु°
975 For lines 975-7, B subst.:
शर्या निश्चिध्यादिनकन्यका च ॥ ४६ ॥
घोरा घृतार्चिः क्षणिनी तथोत्तमा
शताक्षरान्दास्य(?)पि तामसी च
पैशाचिका चक्रविभेदिनी च
स्याच्छार्वरी पुंसि न चात्र नक्ता ॥ ४७ ॥
दोषा रात्रावुषा नक्ता (क?) मव्ययं च प्रकीर्तितम् । ज्यौत्स्नी सा चन्द्रिका पूर्णा निरस्मिश्रा तु तामसी । कालरात्री भीमरथी मोहरात्रिस्तु जन्मनिद
977 A तमिस्रा २
978 A °शृंखला ४
979 A पुष्यनेत्रा १;-°) निण् for या
980 For lines 980-8, B subst.:
पक्षिणी निङ्युताहोभ्यां निड्भ्यां पक्षिदिनं तथा ५०
द्वे निशे गर्भकं बह्वयो गणरात्रं न योषिति ।
रात्रकं पञ्चरात्रे स्या हिण्डिर्बालावनक्रिया ॥ ५१ ॥
दिनात्ययः प्रदोषः स्याद्रजनीमुखमित्यपि ।
निशीथसर्वापसरनिःसंतापार्धरात्रकाः ॥ ५२ ॥
सुप्तलोको महारात्रिरुच्चन्द्रोपररात्रवत् ।
त्रिषु दोषातनं नैशं नैशिकं च निशाभवम् ॥ ५३ ॥
981 A पक्षिणी १
982 A °रात्रं १; गर्भकं १
983 A °रात्रं १; त्रिरात्रं १
985 A °वक्त्रं १
986 A °निशा ४

उश्चन्द्रोऽपररात्रः[29a] स्यादथ त्रिषु निशा भवेत् ।
स्यान्नैशिकं तथा नैशं तत्र दोषातनं भवेत् ॥ ४६ ॥
प्रादोषिकं तु प्रादोषं जाते त्वस्मिन्प्रदोषकम् ॥ ४७ ॥
सायंप्रातिकमुद्दिष्टं सायंप्रातःसमुद्भवम् ।
द्वैरात्रिक-द्विरात्रीणौ निवृत्तौ यौ द्विरात्रतः ॥ ४८ ॥
त्रैरात्रिकस्त्रिरात्रीणः सरात्रिस्तुल्यरात्रिकः ।
कल्याणीपञ्चमा रात्र्यः कल्याणी यासु पञ्चमी ॥ ४९ ॥
द्वौ याम-प्रहरौ पुंसि यामिकं तद्भवे त्रिषु ॥ ४९ ॥
द्वयोस्तिथिः कर्मवाटी तैथ्यं तु तिथिजे त्रिषु ।
उदयादौदयं शुद्धा षष्टिनाडीमिता तिथीः (थिः ?) ।
विद्धा सायोदये पूर्वतिथ्या षड्दण्डमानया ॥ ५० ॥
संयुतास्तमये तद्वत्परतिथ्या युताऽथ वा ।
सायाह्नव्यापिनी या स्यात्संमुखा सा निगद्यते ॥ ५१ ॥
नवाहः पुंसि वृद्धिः स्त्री प्रतिपत्पक्षतिर्भवेत् ।
वत्सरादिश्चैत्रशुक्ला साऽथ कार्त्तिकशुक्लगा ।
असौ बलिदिनं भावरात्रिकी त्रिपशुक्लगा ।
सुमङ्गलपदा ब्राह्मी द्वितीया युग्मनामिका ॥ ५२ ॥
बला तृ[29b]तीया गौरी च चतुर्थी तु खलागणः ।
पञ्चमी नागदेवी स्यात्तस्यां लक्ष्मीवती स्त्रियाम् ॥ ५४ ॥
स्कान्दी षष्ठी चातियशा मित्रा सौरी च सप्तमी ।
अष्टमी स्याच्च माहेशी भवेत्सासुर्महाबला ॥ ५५ ॥
नभःकृष्णाष्टमी ※ ※ ※ ※ कृष्णदिनं च सा ।

---

988 A दोषातनं ३
989 A प्रादोषं २; A ह्यस्मिन् for त्व°
990 B om. line 990
991 A °त्रीणौ २
993 A °पंचमा १
994 A यामिकं १; B ऽन्यवत् for त्रिषु
995 A °वाटी १
996 A शुद्धा १
997 A विद्धा १
999 A संमुखा १
1000 A नैवाहः;—For lines 1000-2, B subst.:
नवाहः प्रतिपद्वृद्धिः पक्षतिश्चैत्रगा तु सा । सिता
संवत्सरादिः स्याद्बल्यहः कार्तिका छगा ॥ ५९ ॥
1002 A °दिनं १; °रात्रिकी १
1004 A गौरी ३; गणः ३
1005 A °वती ३;—For lines 1005-7, B subst.:
पचमी श्रीमती सार्वी षष्ठी स्कांदंतिकीर्तिका ।
सप्तम्या कचमंत्रे त्वष्टमी सुमहाबला ॥ ६१ ॥
1006 A °यशा ३; सप्तमी ३
1007 A °बला ३
1008 B कृष्णाष्टमी for ※※※

रोहिणीसंयुता त्वेषा जयन्तीति निगद्यते ।
महाष्टमीत्याश्विनस्य शुक्लपक्षगताष्टमी ॥ ५६ ॥
उग्रकर्मा तु नवमी दौर्गी च दशमी पुनः ।
धर्मिणी यमदेवत्या वैश्वी त्वेकादशी हरः ।
क्लीबे हरिदिनं नन्दा दशम्याः साऽरुणोदये ॥ ५७ ॥
सूर्योदये वा संयुक्ता विद्धा शुद्धाऽन्यथा भवेत् ॥ ५८ ॥
बोधिन्यूर्जस्य शुक्ले सा शयन्याषाढशुक्लगा ।
वृद्धौ यशोवती द्वादशी स्याचस्यां हरितिथिर्मता ॥ ५९ ॥
एकादश्या त्रयोदश्या त्रिस्पृशा त्रिस्पृगन्विता ।
नन्दा परदिने वृद्धा भवेदुन्मीलिनीति सा ॥ ६० ॥
वृद्धौ वञ्जुलिनी पक्षवर्द्धिनी पर्ववृद्धियुक् ।
पुष्ययुक्ता ज[30a]याऽथ स्याद्विजया श्रवणान्विता ॥ ६१ ॥
रोहिणीयुक् तु पापघ्नी जयन्ती स पुनर्वसुः ।
एकादशी द्वादशी च वैष्णवश्चापि तत्र चेत् ।
तद्विष्णुशृङ्खलं चाथ जयाऽऽनन्दी त्रयोदशी ॥ ६२ ॥
उग्रा चतुर्दशी शैवी भौत्यमाश्च पूर्णिमा ।
पक्षान्तौ पञ्चदशौ तु स्त्रियौ सोमाधिदैवते ॥ ६३ ॥

---

1009 A जयंती १

1010 A महाष्टमी १, °शता° for °गता°

1011 A दौर्गी ३;—For lines 1011—14, B subst.

दौर्मु(र्युः?)प्रकर्मा नवमी धर्मिणी दशमी च सा ॥ ६३ ॥
वैश्विस्त्वेकादशी नन्दा हरदेवा च हर्य्यहः ।
विद्धारुणस्य भानोर्वा सोदये दशमीयुता ॥ ६४ ॥

1012 A °देवत्या ३

1013 A नंदा ५

1014 A विद्धा १ शुद्धा १

1015 A शयन्या १

1016 A हरितिथिः ३; B यशस्वती for यशोवती

1017 A त्रिस्पृश्वरन्विता

1019 A वंजुलिनी १; °युक् ३; B पक्ष° for पर्व°

1020 A जया १; विजया १

1021 A पापघ्नी १ जयंती १

1022 —*) A corrupt; B श्रवणः for वैष्णव.

1023 A °दशी ३

1024 A भौत्यमा ४;—For lines 1024—41, B subst.:

उग्रा चतुर्दशी भौति श्वनिमा शंसितेतरा ।
यज्ञकालौ तु पक्षान्तौ सौम्यौ पञ्चदशीद्वयम् ।
पर्वमूलं तु भूतेष्टा पंचदश्योर्यदंतरम् ॥ ७० ॥
प्रतिपत्पञ्चदश्योस्त्वसंधिर्ना पर्वसंधिवत् ।
पर्व दर्शस्तु सूर्येंदुसंगमोऽमाप्यमामसी ॥ ७१ ॥
अमावस्याप्यमावास्यामानासी स्यादमावसी ।
अमामासी च नष्टेंदुकला त्वेषा कुहुः कुहूः ॥ ७२ ॥
सिनीवाली दृष्टचंद्रा पौर्णमासी तु पूर्णिमा ।
अश्वत्थः सानुराकेंद्रौ पूर्णेंदुमतिस्नके ॥ ७३ ॥
गुडापूपान्नबहुला सा गुडापूपिका भवेत् ।
तत्तत्प्रभूता कौल्मापी तथा वटकिनी पृथक् ॥ ७४ ॥
अथोपपौर्णमासोप पौर्णमास्यव्ययं च षण् ।
उपाग्रहायणं तद्वन्मतं चोपाग्रहायणि ॥ ७५ ॥
अमावास्योप्यमावास्यो भवेमावास्यकोत्र च ।
अमावस्योप्यमावस्यो स्यादमावास्यकोन्यवत् ॥ ७६ ॥

यज्ञकालौ पर्वणी तु क्लीबे अथ यदन्तरम् ।
चतुर्दशीपञ्चदश्योः पर्वमूलं तदस्त्रियाम् ॥ ६४ ॥
संधिः पर्व च पक्षत्या पञ्चदश्योः समागमः ।
अमावसी त्वमावासी स्यादमाऽमामसी तथा ॥ ६५ ॥
अमावा(मा)स्यप्यमावास्याऽमावस्या दर्श आदिमे ।
सूर्येन्दुसंगमोऽप्यस्मिन्सा नष्टेन्दुकला कुहूः ॥ ६६ ॥
कुहुरिन्दुरिपुश्चोक्ता सिनीवाली तु सेन्दुका ।
अथ स्था पूर्णिमा पूर्णमासा राका तु सा विधौ ॥ ६७ ॥
सम्पूर्णेऽथ कलाहीने भवेदनुमतिः स्त्रियाम् ।
अथोपपौर्णमास स्याच्चद्वचोपाग्रहायणम् ॥
तथोपपौ[30b]र्णमासि स्यात्क्लीबे चोपाग्रहायणि ।
गुडापूपात्रादिमती सा गुडापूपिका भवेत् ।
कुल्माषाऽत्र तु कौल्माषी तथा वटकिनी भवेत् ।
अमावास्योऽप्यमावस्यस्तथामावास्यकस्त्रिषु ॥ ६८ ॥
अमावस्यक एव स्यादमाव(म)स्योऽप्यमाजनि ।
अमावस्यश्च तत्रोक्त अमावास्या स्त्रियां भवेत् ॥ ६९ ॥
चित्रायुक्ता पौर्णमासी चैत्री ज्यैष्ठ्येवमादयः ॥ ७० ॥
श्रावणी श्रवणा च स्याद्दण्डपाता तु फाल्गुनी ।
हुताशन्युत्सव. पुंसि होलाका तु हुताशनी ।
स्याद्वसन्तोत्सवश्चैत्री कौमुदी कार्त्तिकी मना ॥ ७१ ॥
अश्वयुज्यामुप्तधान्ये स्यादाश्वयुजकं त्रिषु ।
प्रतिपत्प्रभृतीनां स्यात्तिथीनां पञ्चके क्रमात् ।
नन्दा भद्रा जया रिक्ता पूर्णाभेऽप्येवमुन्नयेत् ॥ ७२ ॥
नेष्टामध्येष्टदास्तिस्रस्तिथयः शुक्लपक्षगा· ।
प्रतिपत्प्रमुखा इष्टमध्यनेष्टाश्च कृष्णगाः ॥ ७३ ॥

1026 A क्लीबे ५
1032 A °दुरिपु २, °वाली १
1033 A °मासा ३ राका १
1034 A °मति १
1035 A °याम् १
1038 A कौल्माषी १
1041 A °वास्या १
1042 A चैत्री १, ज्यैष्ठी १ for ज्यैष्ठ्ये
1043 A श्रवणा २; फाल्गुनी २
1045 A चैत्री १, कार्त्तिकी २
1046 B om line 1046
1048 A रिक्ता १ पूर्णा १
1049 A नेष्टा १ मध्ये १ इष्टा १
1050 A इष्ट १ मध्यनेष्टा १, B इष्टा नेष्टा for इष्टमध्य–

युग्मास्ताः पक्षरन्ध्रः स्याद्द्वितीयां दशमीं विना।
स्युर्विष्कंभादयो [31a] योगास्तिथ्यर्द्धं करणं भवेत् ॥ ७४ ॥
विष्टिस्तु भद्रा कल्याणी पञ्चाङ्गं धर्मलोचनम् ।
तिथि-वासर-नक्षत्र-योग-तिथ्यर्द्धपञ्चके ॥ ७५ ॥
अहोरात्राः पञ्चदश पक्षः पक्षो(क्षं ?) नपुंसकम् ।
सुचन्ययं सिते पक्षे कृष्णे तु वहुलो वदि ॥ ७६ ॥
मासोऽस्त्री नरि माः श्रामो वर्षांशः स्यादहर्गणः ।
दर्शावधिः स चान्द्रः स्यात्सौरः स्यात्संक्रमावधिः ॥ ७७ ॥
त्रिंशद्दिनः सावनः स्यान्नाक्षत्रो भगणक्रमात् ।
असंक्रमोऽधिमासोऽसौ पापः षण्ढो मलिम्लुचः ॥ ७८ ॥
संसर्पः क्षयमासाद्यः प्राच्यः संक्रान्तिवर्जितः ।
क्षयमासो द्विसंक्रान्तिमासोऽहस्पतिरप्यसौ ॥ ७९ ॥
कार्त्तिकादित्रये स स्याद्यत्राब्दे द्वौ मलिम्लुचे ।
मासस्य पूरणे मासतमः स्याद्वेचलिङ्गकः ।
अर्धमासतमश्चैव संवत्सरतमस्तथा ।
माघ्यादयो यत्र भवन्ति पूर्णिमा
 माघादिमासाः क्रमशः स्मृता अमी ।
माघे तपा अस्त्यथ फाल्गुनः स्यात्
 स फल्गुनः फाल्गुनिकस्तपस्यः ॥ ८० ॥
[31b]फाल्गुनाढश्च(श्चि)त्रिकस्तु चैत्रः पुष्पाकरो मधुः ।
राधमाधववैशाखा ज्यैष्ठामूलीयकः पुनः ॥ ८१ ॥
ज्यैष्ठः शुक्रोऽप्यथ शुचिः पुंस्यषाढक इत्यपि ।
आषाढेऽथ श्रावणिकः श्रावणोऽत्र नभाः पुमान् ॥ ८२ ॥

1051 A °ध्र १
1052 A योगा १
1053 A कल्याणी ३; लोचनम् २
1056 A सुच १
1057 For lines 1057–8, B subst..
मासोऽस्त्री वर्षकोषश्च वर्षांशो मा अहर्गणः ।
श्रामोऽ संक्रमं सौरो सावमावधिरैंदव• ॥ ८४ ॥
1058 A चांद्रः १; सौर १
1059 A सावनः १
1060 A °म्लुचः ५
1061 B संसर्प्यः
1062 A °स्पति २
1064 B om. line 1064.
1065 A °तम १ श्चैव; °तम १ स्तथा;—For line 1065, B subst.:
अर्धमासतमोमासतमाद्याः पूरणे पृथक् ।
1068 B माघस्तपाः स्त्री म च फाल्गुनस्तथा
1069 B तपस्यवत्
1071 For lines 1071–1110, B subst.:
स्यात्फाल्गुनालेऽप्यथ फाल्गुनानु-
 जन्मा मधुर्मोहनकश्च चैत्रः ।
स्याच्चैत्रिकः कामसुहृच्च पुष्पा-
 करोऽथ राधोच्छ्रसाधवाश्च ॥ ८८ ॥

स्यान्नभस्यः प्रोष्ठपदो भाद्रो भाद्रपदः समः ।
स्यादिषोऽश्वयुजोऽप्याश्वयुजोऽप्याश्विन इत्यपि ॥ ८३ ॥
स्यात्कार्त्तिकः कार्त्तिकिकः कौमुदो बाहुलोर्जकौ ।
सहः सहा मार्गशीर्षो मार्गः स्यादाग्रहायणः ॥ ८४ ॥
आग्रहायणिकश्चाथ तैषः पौषः सहस्यवत् ।
ऋतुस्तु शुष्मो मासाभ्यामृतव्यमृतुदैवतम् ।
वसन्तश्चैत्रराधाभ्यामित्याद्या ऋतवोऽपरे ॥ ८५ ॥
उत्तरस्यां गतौ भानोस्त्रिभिस्तैः शिशिरादिभिः ।
उत्तरायणमादानं दक्षिणा तु रवेर्गतिः ॥ ८६ ॥
वर्गादिभिस्त्रिभिः पुंसि विसर्गो दक्षिणायनम् ।
कुसुमसम ❊ ❊ ❊ कामबन्धुः क्षिपण्युः
सुरभिरिह वसन्तो ❊ ष्मपुष्पाकरौ च ।
ऋतुपतिरवलाङ्गः स्यात्तु वास[32a]न्तमेतद्-
भवमिह पुनरुक्तं तच्च वासन्तकं च ॥ ८८ ॥
एवं स्यात्पूर्ववासन्तं तत्पूर्वावयवोद्भवम् ।
भवेत्तु पौर्ववासन्तं यद्धि पूर्ववसन्तजम् ॥ ८९ ॥

---

वैशाखश्चोपि ज्येष्ठस्तु शुक्रोष्ठी खरकोमळः ।
ज्येष्ठामूळीय आषाढः शुची पुनरषाढकः ॥ ८९ ॥
स्याच्छ्रावणः श्रावणिको नभो भाद्रपदः पुनः ।
नभस्यः स्यात्प्रोष्ठपदो भाद्रोश्वयुज आश्विनः ॥ ९० ॥
ईष आश्वयुजोथोर्जः सैरः (रिः) कौमुदकार्त्तिकौ ।
बाहुळः स्यात्कार्त्ति*को मार्गः स्यान्मार्गशीर्षवत् ९२
आग्रहायणिको वत्सरादिः पुंसि सहः सहौ ।
पौषस्तैषः सहस्यश्च ऋतुर्ना शुष्म इत्यपि ॥ ९३ ॥
उत्तरायणमादानं शिशिरादिऋतुत्रिकात् ।
वर्षादित्रिकतस्तु स्याद्विसर्गो दक्षिणायनम् ॥ ९४ ॥
वसन्त इष्यश्च न योषिदीष्मे-
ष्मौ पुष्पसाधारणपुष्पकाळौ ।
ऋतुप्रभुः स्यात्सुरभिर्वळागः
फल्गु क्षिपण्नु' पिकरागवश्च ॥ ९५ ॥
ग्रीष्म ऊष्मा च दीर्घाहा उष्ण ऊष्मागमस्तपः ।
ऊष्मकार(यो!)स्तपात्यश्च घर्म उष्णागमोपि सः॥९६॥
न स्त्री निदाघो वर्षास्तु वर्षिया भूम्नि योषिति ।
प्रावृट् तु प्रावृषा मेघकालो मेघागमः स्त्री ॥ ९७ ॥
श्रोभः नवतपांतश्च प्रावृषेण्यं तु तद्भवम् ।
वर्षा प्रावृषिकं प्रावृषिकं स्याद्विद वार्षिकम् ॥ ९८ ॥

शरच्छरदया तुल्या हंसबंधुर्घनात्ययः ।
हेमंतः प्रशलो हेमा हिमागो * * इत्यपि ॥ ९९ ॥
हेमंतं हैमनं शैषतपसौ शिशिरोस्त्रियाम् ।
संवत्सरो वत्सरश्च काळग्रंथिर्युगांशकः ॥ १०० ॥
ऋतुवृत्तिर्मासमळस्रर्तुपरवाणयः ।
संवत्सः शारदश्च शरयामा शरत्स्त्रियाम् ॥ १०१ ॥
भूम्नि स्त्रियां समा अब्दवर्षहायनमस्त्रियाम् ।

1071 A °वैशाखा ३
1072 A शुक्रो ३
1073 A आषाढे ३
1074 A नभस्य १
1075 A °प्याश्विश्न
1076 A °लोर्जको ५
1078 A अग्रहायणिक ६; सहस्य३वत्
1079 A °मृतव्य १
1083 A दक्षिगायनं २
1086 A °वलाग. १०; वासंन १
1087 A °न्तरं२
1088 A °वासंनं १
1089 A °वासंतं १

वसन्ताधिकृतग्रन्थाध्येता वासन्तिकस्त्रिषु ।
हैमन्तिकः शैशिरिक एवं शारदिकोऽपि च ॥ ८९ ॥
ग्रीष्मो निदाघो दीर्घाहा ऊष्मा स्यादूष्म ऊष्मकः ।
उष्णोपगम उष्णश्च घर्मो पुंसि तपश्च सः ॥ ८९ ॥
त्रिषु ग्रैष्मं ग्रीष्मभवे तत्रोप्ते ग्रैष्मकं तथा ।
कदम्बपुष्पी दीर्घाही प्रावृट् स्त्री प्रावृषा तथा ॥ ९० ॥
वर्षा च वरिषा भूम्नि प्रावृषेण्यस्तु तद्भवे ॥ ९१ ॥
प्रावृड्जातं प्रावृषिकं साधु वर्षासु वार्षिकम् ।
कादम्बपुष्पिकं मैघागमिकं मैघकालिकम् ।
पुंसि मेघात्ययः स्त्री तु शरदा शरदा सह ॥ ९२ ॥
शरद्युप्ताः पच्यमानाः पुष्यन्तो वापि शारदाः ।
स्याच्छारदः शारदिको यः शरत्कालजो गदः ॥ ९३ ॥
तज्जमन्यच्छारदं स्यात्प्रावृषेण्यादयस्त्रिषु ।
भवेच्छारदिकं श्राद्धं य[32b]च्छरत्कालसंभवम् ॥ ९४ ॥
हेमन्तः प्रसलो हेमा रौद्रोऽथैतद्भवे त्रिषु ।
स्याद्धैमनं च हैमन्तमुप्तेऽप्येवं द्विरूपता ॥ ९५ ॥
शिशिरः स्यात्तपाः पुंसि शैषः शैशिरमत्रजम् ॥ ९६ ॥

संवत्सरो वत्सर-काल-पर्व-
युगांशकाः शारदमासमासौ ।
अब्दोऽत्र वर्षं च न हायनः स्त्री
समाः स्त्रियां भूम्नि च वा शरदः स्त्री ॥ ९७ ॥

संवदव्ययमस्मिंस्तु पूर्वे पूर्वतरे य(स)ति ।
परुत्परार्यैषमः स्युः परुत्नं तद्भवे त्रिषु ।
परारिलं चैषमस्त्यमैषमस्तनमित्यपि ॥ ९८ ॥
पञ्चषष्ट्युत्तरशतत्रया३६५हैः सौरवत्सरः ।
एकषष्ठ्युत्तरशतत्रयाहै३६१रेष घे(धै)षणः ॥ ९९ ॥

---

1090 A °न्तिक१त्रिषु
1091 A °न्तिकः १; शारदिवो १
1092 A ऊष्मकः १
1094 A ग्रैष्मं१; ग्रैष्मकं २
1096 A वरिषा ११; °ण्य१स्तु
1097 A °षिकं१; वार्षिकं १
1099 A शरदा२सह
1102 A °च्छारदं १
1103 A °दिकं १
1104 A रौद्रो ४
1105 A हैमंत२
1106 A शैषिर १
1113 A परारित्नं १; °स्तन ३
1114 B om. lines 1114-9.

शतत्रयात्पञ्चधिकाद्दिनानामेष सावनः ।
चतुःपञ्चाशदधिकत्रिशत्याह्ना स ऐन्दव' ॥ ९९ ॥

नाक्षर(त्र ?)स्तु चतुर्विंशत्यधिकाहशतत्रयात् ।
चान्द्रास्तु वत्सरा षष्टिः प्रभवादिकनामभि' ॥ १०० ॥

चान्द्राणा प्रभवादीना पञ्चके पञ्चके युगे ।
सपरीदान्विदिल्येतच्छब्दपूर्वा हि वत्स[33a]राः ॥ १०१ ॥

अनुवत्सरतुल्यार्थे इन्दुवत्सर उच्यते ।
त्रिपु द्विसवत्सरेणानिर्वृत्ताद्यर्थपञ्चके ॥ १०२ ॥

स्याद्द्विसंवत्सरीणो* द्विसावत्सरिकस्तथा ।
एव त्रिसंवत्सरीणस्त्रिसावत्सरिकादय ॥ १०३ ॥

द्विवार्षिक-द्विवर्षीण-द्विवर्षाः स्युरचेतने ।
चेतने तु विशेष्ये स्याद्द्विवर्षो बालकादिकः ॥ १०४ ॥

समामभीष्टे भूते वा भूते भाविनि वा भवेत् ।
समीनो द्विसमीनस्तु स्याद्वैसमिक इत्यपि ॥ १०५ ॥

द्विषाष्टिकस्तु द्वे षष्टी भूते भाविनि वा भवेत् ।
द्विसाप्ततिक एव स्याद्द्विपञ्चाशत्क इत्यपि ॥ १०६ ॥

एवं द्विचात्वारिंशत्को भवेद् व्याशितिकस्तथा ।
शुक्लपक्षो नृणा पैत्री रात्री कृष्णस्तु तद्दिनम् ।
स्याद्दक्षिणायन दैवी तद्दिन तूत्तरायणम् ॥ १०७ ॥

सत्य कृतयुग दिव्यवत्सराणा भवेदिदम् ।
चतु सहस्राणि चतु शत्या सध्यास्य समता ॥ १०८ ॥

तावानेव च सध्याश इतरेपु त्रिपु क्रमात् ।
एकापायेन वर्तन्ते सहस्राणि शतानि च ॥ १०९ ॥

---

1122 A इन्दुवत्सर १
1124 B भवेत for स्यात्
1125 A °रिका२दय
1126 A द्विवर्षा २
1127 A द्विवर्षो १
1129 A समीनो १, °मिक ३
1130 A °ष्टिक१स्तु
1131 A °तिक १, °शत्क १—For lines 1131–2, B subst.
नृणा मासादहोरात्र पैत्रो वर्षात्तु दैवत्त ॥१०९॥
1133 A पैत्री १
1134 A °यन १ दैवी १ तद्दिनं १
1136 A सध्या१स्य
1137 A सध्याका १

[33b]त्रेता स्त्री द्वापरः पुंसि कलिस्तिष्यश्चतुर्युगी ।
मनुष्याणां सुराणां तु तयैकं युगमुच्यते ॥ ११० ॥
दैवे युगसहस्रे द्वे ब्राह्मोऽहोरात्र इष्यते ।
स्थितिकालो ब्रह्मदिनं कल्पः पुंसि च संमतः ॥ १११ ॥
कल्पान्त-प्रलय-जगद्विनाश-कल्पाः
संहार-क्षय-समसुप्तयो जिहानः ।
संवर्तोऽपि च परिवर्तको युगान्तः
स्त्रीलिङ्गा भवति महानिशाकरात्रिः ॥ ११२ ॥
दिव्यैकसप्ततियुगैः स्यान्मन्वन्तरमन्तिमे ।
तैश्चतुर्दशभिः काहस्तावद्भिर्ब्रह्मणो निशाः ॥ ११३ ॥
दैवज्ञो गणकस्तथा समयविन्मौहूर्त-मौहूर्त्तिकौ
ज्ञानी ज्यौतिषिको निमित्तविदसौ सांवत्सरो हौरिकः ।
स्तः कार्त्तान्तिक-पिण्टिलावथ भवेद्दैप्रश्निकः प्रश्नविद्
आदेश्यैक्षणिको भवेत्पुनरयं सैद्धान्तिकस्तान्त्रिकः ॥ ११४ ॥
त्रयीलोचनं ज्योतिषं ज्यौतिषं स्यात्
त्रिकस्कन्धशास्त्रं भवेद्धर्मदीपः ।
मतं जातकं जन्मकालप्रवृत्तम्
अवस्था स्त्रियां कालिकः स्याद्विशेषः ॥ ११५ ॥
[34a] ॥ इति कालवर्गः ॥
बुद्धिः श्रद्धा प्रतिपदपि चिच्चेतना चोपलब्धिर्
ज्ञप्तिः प्रज्ञा भवति धिषणा शेमुषी धीर्मनीषा ।

---

1139 A द्वापरः १; °स्तिष्य २. B द्वापरस्तिष्य-कली शर्सरवो स्त्रियाम् —After line 1139, B adds:
इयं च(तु)र्युगी नृणां तयैकं दैवतं युगम् ॥ ११३ ॥
मन्वन्तरं तु दिव्याना युगानामेकसप्ततिः । (cf line 1147 ), followed by line 1148

1140 B om line 1140.

1141 A ब्राह्मो १ होरात्र १

1142 For lines 1142–8, B subst.
स्थितिकालश्च कल्पश्च तथा ब्रह्मदिनं मतम् ॥ ११५ ॥
संवर्तः परिवर्त्त कल्पः कल्पान्तसंहारौ ।
प्रलयः क्षयो जिहान॰ समसुप्ति॰ स्याद्युगान्तश्च ११६

1146 A °रात्रिः १२

1147 A °न्तर १

1152 A °क्षणिको ४; °न्त्रिकः २

1154 A °द्धर्मदीपः ५. B तंत्रमंत्रः for धर्मदीपः

1155 A जातकं १; B जन्मकाल्यं स्थितिस्तु

1156 B व्यवस्था दशा for अवस्था स्त्रियां.– After line 1156, B adds:
कल्को विशोधितांके शून्यांके गुणनिकाथ पाशांके ।
स्यात्केवल्येथ गणिते श्रोढिः शकुनं तु भाविसंसूचि ॥ ११६ ॥

1157 For lines 1157–60, B subst.:
धीर्बुद्धिर्धिषणा धीरा धरा श्रद्धा मतिर्विदा ।
चिच्चेतना शेमुषी स्वप्रज्ञाज्ञप्त्युपलब्धयः ॥ १ ॥
प्रतिपद्वेदना देवदत्तासंवित्तिसविद्ः ।
प्रेक्षा मनीषाऽऽद्भ्यिरप्रज्ञानं च विपाव्ययम् ॥ २ ॥

प्रेक्षा दृष्टिर्मतिरपि धरा वेदना विच्च संवित्
प्रज्ञानं तु स्फुरति चरमेऽथाऽन्ययं स्याद्विया च ॥ १ ॥
कुशाग्रीयातितीक्ष्णा सा मेधा स्याद्धारणावती ।
तत्त्वाभ्यासभवा पण्डा प्रतिभा स्फूर्तिशालिनी ॥ २ ॥
धर्मचर्चा पुंस्युपाधिर्वितर्कः पुनरुन्नयः ।
विद्या ज्ञानं मतं मोक्षे विज्ञानं शिल्पशास्त्रयोः ।
मतस्य साधनं मत्यं मेधलिङ्गमुदीरयेत् ।
परामर्षो विमर्षः स्याद्विचारोऽपि विचारणम् ॥ ३ ॥
संख्यानं च स्त्रियो गुञ्जा-चर्चा-संख्या-विचारणाः ।
उत्प्रेक्षा स्त्री पुमानूहस्तर्कोऽध्याहार ऊहनम् ।
संवेदानुभवौ तस्मिन्नुपलम्भश्च भेदना ॥ ४ ॥
उपज्ञा ज्ञानमाद्यं स्याद्वासना-भावने स्त्रियौ ।
अनुभूताविस्मृतिः स्यात्संस्कारो नाथ निर्णयः ॥ ५ ॥
निश्चयो नरि निर्द्धारो नीकाशः संप्रधारणा ।
ना[34b]र्थे समर्थनाऽथ स्यात्परमागो गुणावधिः ॥ ६ ॥
विचिकित्सा द्वापरोऽस्त्री रेक-संदेह-संशयाः ।
विकल्पो विशयः शङ्का वितर्को युतर्कं नयुक् ॥ ७ ॥
संशयालुः सांशयिकस्तथा संशयितान्यवत् ।
विवेचनं विवेकोऽथ भ्रान्तिर्मिथ्यामतिर्भ्रमः ॥ ८ ॥
मिथ्यादृष्टिर्नास्तिकताऽथाऽविद्याऽहंमतिः स्त्रियाम् ।
अज्ञानं चाथ ममता ममबुद्धिः सुतादिषु ॥ ९ ॥

---

1160 A विपा २१
1161 A °ग्रीया १
1162 A पंडा १ प्रतिभा १
1163 A °स्युपाधिर; उन्नयः १; B om. line 1163
1164 A विज्ञानं १; B मोक्षो for मोक्षे
1165 A मत्सं १; B om. lines 1165-6
1167 B संख्यानं तु विचारः स्याच्चिंता संख्या वि°
1168 For lines 1168-9, B subst.:
विभावना च गुञ्जा च चर्चा स्त्री पुंसलिङ्गभाक् ।
उपाधिर्ना धर्मचिंतायुज्युहा तर्कमस्त्रियाम् ॥ ५ ॥
अध्याहारो वितर्कः स्यादुन्नयश्च विमर्शवत् ।
परामर्शोऽर्थसंवेदोऽनुभवश्चोपलम्भवत् ॥ ६ ॥
संभोगः स्यात्सुखादीनामिङ्गस्तु ज्ञानमद्भुतम् ।
1170 A उपज्ञा १ ज्ञानमाद्यं २
1171 B स्यात्तु for नाथ
1172 B ऽन्तश्च for नरि
1173 A °र्थना ५; °वधिः २—After line 1173, B adds:
पक्षांतरं विभाषान्यतरस्यां वा वार्यद्वयम् (?) ।
1175 $^{a}$) B विशयश्च विकल्पश्च-$^{b}$) A युतर्क १०; B तथा for नयुक्
1176 A सांशयिक १.—For 1176-9, B subst.:
भ्रमो भ्रांतिश्च मिथ्याधीरज्ञानं स्यादहंमतिः ।
अविद्यानास्तिकत्वं तु मिथ्यादृष्टिरनस्तिधीः ॥ ११ ॥
1177 A विवेको २; भ्रमः ३
1178 A नास्तिकता २
1179 A अज्ञानं ३

वितण्डा पक्षहीना धीर्व्यापादो द्रोहचिन्तनम् ।
विमतिः प्रतिकूला धीरनुकूला तु संमतिः ॥
विमतित्वं तु वैमत्यं वैमतं च नपुंसके ।
स्त्रियां विमतिता भावे पुमान्विमतिमा मतः ॥
एवं पञ्चैव रूपाणि संगतेर्भाव ईरयेत् ।
अङ्गीकारः संश्रवः स्यादस्तुंकारः प्रतिश्रवः ॥ १० ॥
आश्रवश्चाभ्युपगमोऽभ्युपायो नियमोऽपि सः ।
संगरो ना प्रतिज्ञाऽऽगूः संवित्संधा-तुरः (गुवः ?) स्त्रियः ॥ ११ ॥
शुश्रूषा स्त्री श्रवणं क्लीबे ग्रहणं धारणमूहोऽपोहः ।
अर्थज्ञानं सत्त्वज्ञानं बुद्धेरन्ते गदिता हि गुणाः ।
धीमा[35a]न्धीरो मनीषी बुध-विबुध-सुधी-सद्-विदद्-वादि-वेदि-
मज्ञ-मान्न-प्रबुद्धाः कवितृ-कवयितृ-प्राप्तरूपाभिरूपाः ।
ज्ञो मेधावी सुमेधाः कवि-कृतिविदथ व्यक्त दोषज्ञ-विद्वत्-
संख्यावल्लब्धवर्णाः सुधिषण-मतिमत्-सूरिणः कृष्टि-सूरी ॥ ११ ॥
दूरदर्शी दीर्घदर्शी विचक्षण-विपश्चितौ ।
बुधानः कोविदो वृद्धः पण्डितः स्याद्विशारदः ॥ १४ ॥
भावे विशारदत्वं स्याद्वैशारद्यं नपुंसके ।
स्याद्विशारदिमा पुंसि स्याद्विशारदता स्त्रियाम् ॥
त्रिषु पण्डितमानी स्यात्पण्डितंमन्य इत्यपि ।
अन्तर्वाणिः शास्त्रवित्स न्यायवेत्ता तु तार्किकः ॥
आन्वीक्षिकाऽक्षपादौ च भवेन्नैयायिकोऽपि सः ॥ १५ ॥
वैशेषिकः स्यादौलूक्यः कापिले सांख्यतात्त्विकौ ।
योगः पातञ्जलोऽथ स्याद्भाट्टो मीमांसकोऽपि च ॥ १६ ॥

---

1180 A वितंडा १; व्यापादो १
1182 b) B तद्भावे वैमतं तथा
1183 A विमतिमा ५ —For lines 1183-4, B subst.:
बुद्धिसंपन्निष्कम स्याद्विवेकस्तु विवेचनम् ॥ १२ ॥
संवित्सधागूरावागुरा स्यान्नियमसगरौ ।
1185 B °कारोभ्युपगमोस्तुंकाराश्रवसश्रवा
1186 For lines 1186-7, B subst
प्रतिश्रवोभ्युपायश्च प्रतिज्ञामौ तथाव्ययम् ।
1188 A श्रवर्णं २; धारण २ मुहो १ ऽपोह १
1189 a) A अर्थज्ञानं १; B तत्व° for सत्व° —b) B एते for अन्ते
1194 For lines 1194-7, B subst.:
वृद्धो विपश्चित्प्रबुधो बुधान. पण्डितस्तथा ॥ १७ ॥
विशारद. कोविदोथ भावे वैशारदाद्यतः ।
1198 A °मन्य १
1199 A शास्त्रवित् २
1200 A नैयायिनो ५
1201 A औलूक्य २, °तात्विकौ ३; B तात्विके
1202 A पातजलो २, मीमासको २

वेदान्ती ब्रह्मवादी स्यात्पाणिनीयस्तु शाब्दिकः ।
(अ?)ब्दकस्त्रैमुनश्चायं स्याद्वैयाकरणस्तथा ॥ १७ ॥
वैयाकरणरू[35b]पः स्यात्प्रशस्तः शाब्दिको हि यः ।
पाणिनीयखसूचिस्तु यः पृष्टोऽप्रभुरुत्तरे ।
भवेच्छाब्दिकपाशोऽसौ निन्द्यः शाब्दिककश्च सः ।
वार्त्तिको वृत्तिवित्प्रोक्तो न्यासिको न्यासवित्तथा ।
पौराणिकः पुराणज्ञस्तद्वत्स्यादैतिहासिकः ॥ १८ ॥
एवं वासवदत्ताविद्भवेद्वासवदत्तिकः ।
यावक्रीतिक एवं स्यान्माहावार्त्तिक इत्यपि ॥ १९ ॥
तार्किकाद्यास्तदध्येतर्यपि धीमन्मुखास्त्रिषु ॥ २० ॥
अष्टका पाणिनीयैव जानीयात्स्त्रीविशेषणे ।
मेधायै हितमर्हे च मेध्यं त्रिषु समुन्नयेत् ॥ २१ ॥
भावे पाण्डित्यमन्त्ये स्यात्तस्मिन्पण्डितिमा पुमान् ।
मैधावकं तु मेधाविभावे प्रोक्तं नपुंसके ॥ २२ ॥
कविः सरससंदर्भकर्त्रो वाणीप्रजापतिः ।
परच्छायापहारी स भवेद्वर्णविलोडकः ॥ २३ ॥
इन्द्रियमक्षं करणं विषयि स्रोतो हृषीक-देवे खम् ।
स्युर्गोचरास्तु विषयास्तथेन्द्रियार्था अमी तु रूपाद्याः ॥ २३ ॥
ऐन्द्रियकं वैषयिकं त्रि[36a]तये प्रत्यक्षमध्यक्षम् ।
साक्षादव्ययमस्मिन्नतीन्द्रियं स्यात्परोक्षं च ॥ २४ ॥
चित्तं नेत्रं रसना श्रोत्रं त्वग्गन्धज्ञाधीन्द्रियं चैतत् ।
पाणिः पादः पायुरुपस्थो वागिति कर्मेन्द्रियगण उक्तः ॥ २५ ॥

---

1203 A °वादी २
1204 A वैयाकरण ५
1205 B om. line 1205
1206 A °खसूचि १
1207 A शाब्दिकक २
1208 A वृत्तिवित् २
1209 A पुराणज्ञ २; ऐतिहासिक. १
1210 A °दत्तिकः १
1211 A °क्रीतिक १; °वार्तिक १
1214 A मेध्यं १—For lines 1214–6, B subst.: मेध्यं मेधाहितं त्र्यां भावे मेधावकं द्विसुक् ।
1215 A पंडितिमा ३
1216 A °वकं १
1220 B om. lines 1220–1
1222 A साक्षा ५ द°; परोक्षं २
1223 A चित्तं १ नेत्र १ सरसना १ श्रोत्रं १ त्वक् १ गंधज्ञा १ धींद्रिय १ चेतत्; B om. च
1224 A पाणिः १ पादः १ पायु १ रुपस्थो १; °गण १

रूपे चाक्षुपमञ्ज इत्यनुभवेर्वेर्योपि(?) वर्णो स्त्रियां
श्वेतादित्रिपु तद्युतेष्वथ सितः शुक्लोऽवदातः शुचिः ।
श्येनः शुभ्र-वलक्ष-शुद्ध-धवलाः श्वेतश्च गौरोऽर्जुनः
स्यादसिन्खरु-पाण्डरौ च विशदः शौक्लं तु भावेऽन्तिमे ॥ २६ ॥

शुक्लत्वमपि तत्र स्त्री शुक्लता शुक्लिमा पुमान् ।
वर्णार्थेभ्यो विजानीयादेवंरूपं चतुष्टयम् ।
संमता हरिण-पाण्डु-पाण्डुराः
केतकीकुसुमधूलिवर्णके ।
धूसरो वकुलपुष्पसंनिभः
स्यात्कपोतसदृशः कपोतकः ॥ २७ ॥

पीत-पीतल-सितानुरञ्जना
गौर एष कलरूक्य(?)ईरितः ।
पिञ्जरो भवति पीतलोहितः
संमतः स च कुसुम्भसंनिभः ॥ २९ ॥

पालाशो हरित-हरित्-पलाश-पीत-
नीलाः स्युः स च हरितालसंनिभोऽपि ।
श्या[36b]म-श्यामल-शिति-काल-कृष्ण-रामाः
नीलोऽस्त्री त्वसित इहास्ति मेचकोऽपि ॥ ३० ॥

मयूरकण्ठसंनिभं वदन्ति मेचकं परे
स कृष्णनीलवर्णवानुमाप्रसूनसंनिभः ॥ ३१ ॥
लोहितो रोहितो रक्तो माञ्जिष्ठोऽसौ तु पाटलः ।
श्वेतसंवलितो रक्तः शोणः कोकनदोपमः ॥ ३२ ॥

---

1225-6 A om. from वेर्वेर्यो up to तद्युतेष्व
1228 A विशदः १५; B तद्वत्स्याद्विशदः स्वच्छ सितिमा for स्याद°-विशदः
1229 For lines 1229-46, B subst.:
पाण्डरो हरिणः पाण्डुः पाण्डुरः केतकीप्रभः ।
धूसरस्तु सितः पीतलेशवान्बकुळच्छविः ॥ ३१ ॥
कापोतस्तु कपोताभः पीतस्तु सितरञ्जनः ।
हारिद्रः पीतळो गौरो रुक्मकः पिञ्जर. पुनः ॥ ३२ ॥
पीतताम्र. कुसुम्भाभः पालाशस्तु पलाशवत् ।
हरिच्च हरितः पीतनीलस्तालकसंनिभः ॥ ३३ ॥
श्यामो चितशितीरामः शामाळः श्यामलोपि च ।
काळश्च कृष्णो नीळोऽस्त्री मेचकः शिखिकण्ठ-
वत् ॥ ३४ ॥
रक्तस्तु ताम्रो माञ्जिष्ठो रोहितो लोहितोपि सः ।
शोण. कोकनदच्छायः श्वेतरक्तस्तु पाटलः ॥ ३५ ॥
1233 A धूसरो १
1236 A कलरुक्य ५
1237 A पिञ्जरो १
1240 A °सनिभो ७
1242 A मेचको ३
1243 A मेचकं १
1245 A माजिष्ठो ४; पाटलः १

लोहितीयल्लोहितायमानश्च्यर्थे विशेष्यवत् ।
लोहिनीयँल्लोहिनीयमानः स्याल्लोहिनीपदात् ॥ ३२ ॥
अरुणो बालसंध्याभो भवेदसितलोहितः ।
श्यावस्तु कृष्णपीतः स्यात्कपिशोऽपि निगद्यते ॥ ३३ ॥
धूमल-धूम्रौ श्यामलके तृणवह्निरुचिर्भवति कडारः ।
कपिवर्णसमो लोहितपीतः कपिलो गोभूषणनामायम् ॥ ३४ ॥
हरित्पीतरक्तैर्युतः स्यात्पिशङ्गो
भवेदेष गोरोचनातुल्यवर्णः ।
कद्रुः कद्रु-बभ्रू हरिः पिङ्गलः स्यात्
प्रदीपार्चिषा तुल्यवर्णश्च पिङ्गः ॥ ३५ ॥
कडारः कपिलः पिङ्गः पिशङ्ग-कद्रु-कद्रवः ।
बभ्रुर्हरिः[37a]पिङ्गलश्च तुल्यार्था इति केचन ॥ ३६ ॥
चित्रल एतः शबलः कर्बुर-किर्मीर-कल्माषाः ।
स्यात्सारङ्गश्चित्रः शार-करम्बौ तथा कबरः ॥ ३९ ॥
श्येता श्येनी हरिणी हरिता
कपिला तुलिता भवति पिशङ्गी ।
एता स्वेनी शबली चित्रा
सा कल्माषी किल सारङ्गी ॥ ४० ॥
काली स्यादसिताऽन्या तु कालानील्यौषधौ गवि ।
ध्वंसवल्लोहितगुणयुक्ते लोहितको रुषा ॥ ४१ ॥
स्त्रियां लोहितका लोहिनिका चण्डी मुखच्छविः ।
तथा लोहिनिका लोहितका शाटी हि लाक्षिकी ॥ ४२ ॥
अनित्यकालिमोपेते कालकं चितयाननम् (?) ।
नील्यादिकालरक्तः स्यात्पटादिः कालकस्त्रिषु ॥ ४३ ॥

---

1247 For lines 1247–8, B subst.:
लोहिनीयो लौहिनीयमानश्च्यर्थे विशेष्यवत् ।
1249 A °लोहितः २
1250 A कपिशो २
1251 For lines 1251–6, B subst.:
धूम्रस्तु धूमलो रक्तश्यामोथ स्यात्तृणाग्निभः ॥३७॥
रक्तपीतहरिच्छ्वैतैः कडारः कपिलः पुनः ।
कपिलो गोविभूषश्च रक्तहारिद्रवर्णवान् ॥ ३८ ॥
अधिके हरिते तत्र पिशङ्गः पद्मधूलिभः ।
श्यामोधिकेऽत्र पिङ्गः स्याद्दीपाभः पिङ्गलः पुनः॥३९॥
पीते समधिके तत्र रोचना रुचिरच्छविः ।
1260 B स्याच्छारः शारङ्गश्चित्रः कर्मीर एकार्थाः
1261 A श्येनी २; हरिता २
1265 A °दसिता २; °नील्यौ२षधौ
1267 A °निका २
1268 A °तका २; B लाक्षिणी
1269 A कालकं १; B चितया°
1270 B om. lines 1270–4 A कालक१स्त्रिषु

त्रिषु स्युस्तेन रक्तार्थे काषायी लाक्षिकी तथा ।
स्याच्छाकली शाकलिकी नीली रौचनिकी भवेत् ॥ ४४ ॥
स्यात्कार्दमी कार्दमिकी हारिद्री पीतका तथा ।
स्यान्माहारजनीत्येवं जानीयात्स्त्रीविशेषणे ॥ ४५ ॥
न स्त्री रसः पुंसि तु रासनः[37b]स्वा-
दास्वादसंज्ञोऽथ मनाक्तथान्ते ।
स्फुटोऽस्फुटश्चानुरसः प्रदिष्टः
षोढा मतोऽसौ मधुरादिभेदात् ॥ ४६ ॥
स्वादुर्गुल्यो मधुरो मधु(धू)ल-कोमलश्चद्रसज्येष्ठः ।
अम्लोम्लो दन्तशठोऽक्षिभ्रुवकोचीच(?)पाचनाह्वः स्यात् ॥ ४७ ॥
लवणः स्यात्सर्वरसः ** पटुरथास्य मृट् (?) ।
कटूषण-कटोलाश्च मुखभेदी तु तिक्तकः ।
तीक्ष्णः क्षारश्च सकटु लवणात्मक उच्यते ।
तुवरस्तूवरश्चास्त्री कषायस्तद्वति त्रिषु ॥ ४९ ॥
स्वादुंकृत्येत्येतदर्थे स्वादुंकारमिहाव्ययम् ।
स्वादुंकृत्वाव्ययं स्वादुंकृत्वा ह्यथे(प्ये?)कार्थ ईरितम् ॥ ५० ॥
स्वादिमा ना स्वादुता स्त्री स्वादुत्वं तु नपुंसके ।
मधुरत्वं च माधुर्यं भावे मधुरिमा नरि ॥ ५१ ॥
अव्ययं लवणंकारं क्त्वार्थे तद्वत्समुन्नयेत् ।
लवणसंस्त्रिषु भवेल्लवणे लालसायुते ॥ ५२ ॥
लालसा लवणस्य स्याल्लवणस्या स्त्रियामियम् ।
स्त्रीविशेष्ये तु लवणी यवागूरिति निर्दिशेत् ॥ ५३ ॥
स्वाद्वी स्वादुः[38a]कटुः कट्वी पटुः पट्वीति संग्रहः ।
लावण्यं पाटवं क्लीबे पटिमा स्यान्नृलिङ्गकः ॥ ५४ ॥

---

1271 A काषायी १ लाक्षिकी १
1272 A °लिकी २ नीली १ रौचनिकी १
1273 A हारिद्री १
1274 A °जनी १ त्येवं
1276 A -दास्वाद २
1277 A °नुरसः १
1279 A °ज्येष्ठः ६; B मधुरमधुलकगुल्यामृष्ट-रसाग्र्यौ (ग्र्यो) न योषिति स्वादुः
1280 A पाचनाह्वः ५
1281 A पटु ४; B सरः for **
1282 A कटूषणकलो for the whole line.
1283 A °त्मक ३
1284 A कषाय ४; B न स्त्री कषायतुवरस्तूवरास्त°
1285 A °कार १; B °त्येतदर्थे
1286 ᵃ) B कृत्वा च्विक्त्वार्थ ई°
1287 B om. lines 1287–8
1288 A मधुरिमा ६
1290 A लवणसं १ स्त्रिषु; B om. lines 1290–1
1291 A लवणस्या १
1293 A कट्वी २; पट्वी २

ब्राह्मी भाषा ब्राह्मणी गौर्गिरा गीर्
वाणी वाचा वाक्सरस्वत्यपीडा ।
भारत्युक्ता शारदा शब्ददेवी
मेधाधीनं वाङ्मयं तद्विकारे ॥ ५५ ॥
वाचोयुक्तिः स्त्रियां सम्यग्गिरां गुम्फनमीरितम् ।
व्याहारो लपितं वचोऽपि वचनं स्यादीरितं भाषितं
स्त्री तूक्तिर्गदिताथ साऽऽगम ** सिद्धान्तराद्धान्तकौ ।
शब्दस्तु श्रुतिशास्त्रसाधुरितरो म्लेच्छोऽपशब्दो भवेत्
सोऽपभ्रंश उदीर्यतेऽयमभिधावृत्त्यार्थसूर्वाचकः ॥ ५६ ॥
लाक्षणिको लक्षणया गमकोऽर्थः स्यादथ के * प्यार्याः ।
आहुर्व्यञ्जकसंज्ञं व्यञ्जनया कथकमर्थस्य ॥ ५७ ॥
शब्दव्याप्तिरुक्ता वृत्तिः ** थ विग्रहः ।
वृत्त्यर्थबोधकं वाक्यं वणु(?)पुल्लिङ्गं प्रकीर्तितम् ।
पदमन्ते * सुप्तिङ्युक्तं तत्तु समर्थं रहिताकाङ्क्षम् ।
वाक्यं तादृक्पदसंघातः ********** ॥ ५८ ॥
पदं प्रसिद्धं रूढं स्या[38b]द्योग्यं यौगिकमीरितम् ।
शक्तं समर्थं क्लिष्टं तु बह्वर्थप्रतिपादकम् ॥ ५९ ॥
महावाक्यं तत्त्वमसीत्यादि मोक्षैकसाधनम् ।
अर्थोऽभिधेयः स त्रेधा वाच्यो वाचकबोधितः ॥ ५९ ॥

---

1295 For lines 1295–1309, B subst.:
ब्राह्मी तु ब्राह्मणी भाषा भारतीडा सरस्वती ।
श्रुतदेवी गिरा गीर्गीर्वाणी वाचा च वाक्कथा ॥५३॥
उक्तिर्वचोऽपि वचनं भाषितं लपितोदिते ।
अभिधानोक्तियाप्युक्तं भणि(णि)तं गदितेरिते ॥ ५४ ॥
व्याहारो वाङ्मयं तु स्याद्वाग्विकारे विशेष्यवत् ।
गालोडितं वाग्विमर्शो वाचोयुक्तिः शुभं वचः ॥ ५५ ॥
आप्तोक्तिः समयः पुंसि सिद्धांतश्च कृतांतवत् ।
राद्धांतोप्यथ शब्दः स्याच्छन्दशास्त्रादिसंस्कृतः ॥५६
अपभ्रंशोपशब्दोऽन्योभिधायाः शब्दवृत्तयः ।
सुप्तिङन्तं पदं वाक्यं तत्समूहोथ वैकतिङ् ॥ ५७ ॥
1297 A शब्ददेवी १४
1298 A वाङ्मयं १
1301 A सूक्ति ५; °राद्धांतकौ ३
1302 A शब्द १ स्तु
1303 A °भ्रंश १; वाचकः १
1304 A लाक्षणिको १
1305 A व्यंजक १
1306 A वृत्तिः १
1307 A पुल्लिंगं १
1309 A वाक्यं १
1310 A यौगिकश्मी°; B उच्यते for ईरितं
1311 A समर्थं २; B श्लिष्टं for क्लिष्टं;–°)A °वादकम् for °पादकम्
1312 A महावाक्यं १. For lines 1312–25, B subst.:
स्यात्प्रातिपदिकं नामाथाख्यातं दश लः स्मृताः ।
स समासतत्पुरुषस्त्वंशी स्यादथ बोधितः ॥ ५९ ॥
शब्देनार्थोऽभिधेयश्चाथाक्षरं वर्णमक्षियाम् ।
मातृका वर्णसंघातोभिनिष्ठानो विसर्गवत् ॥ ६० ॥
विसर्जनीयश्चाध्र्यं तु सार्थमार्थिकमित्यपि ।
वर्ण्याक्षर्ये तद्विकारे स्युरथ्यंप्रमुखास्त्रिषु ॥ ६१ ॥
1313 A वाच्यो २

लक्ष्यो लक्षणया गम्यो व्यङ्ग्यो व्यञ्जनया स्फुटः ॥ ६० ॥
त्रिष्वार्थिकं तथार्थ्यं च भवेदर्थान्वितं हि यत् ।
* * * * * * * * वर्णोऽस्त्यक्षरमन्तिमे ॥
अचः स्वरा व्यञ्जनं हल् वर्गाः स्पर्शास्तथोहिताः ॥ ६१ ॥
यणन्तःस्थः शल्ष्मा स्यान्मातृका वर्णसंहतिः ।
न(ञ)मः स्युरानुनासिक्या अथ ≍क ≍पौ विसर्गयुक् ॥ ६२ ॥
अयोगवाहा एते स्युरनुनासिकसंयुताः ।
त्रिष्व(ष्वा?)क्षर्यं च वर्ण्यं च विकारे स्वर्यमित्यपि ॥ ६३ ॥
अभिनिष्टानविसर्गौ विसर्जनीयस्स(श्च?) पुंसि स्युः ।
सौपस्वैरः(ङः) कार्तः सूत्रकृद्व्याख्यानके त्रितये ॥ ६४ ॥
वैसर्गिको विसर्गाय प्रभवे मेघलिङ्गकः ।
सर्गाय प्रभवत्यर्थे सार्गिकोऽप्येवमीरितः ॥ ६५ ॥
ओंकारो वेदादिः प्रणवो वेदस्त्वृपिर्निगमः ।
आम्नाय-स्वाध्यायागमाः श्रुतिः[39a]छन्दः ॥ ६७ ॥
ऋगृचाव(!)स्त्रियौ क्लीबे यजुः साम तु निर्ऋथः ।
त्रयी स्त्रियां त्रिवेदीरि(!)त्रय्युद्धारस्त्वथर्वणि ॥ ६५ ॥
विधानमृग्यजुःसाम्नां त्रयीधर्मोऽस्त्रियां भवेत् ।
क्रियासु विनियुक्तो यो वेदो मन्त्रः स उच्यते ॥ ६३ ॥
वशीकरणमन्त्रो यः स हृद्य इति कीर्त्तितः ।
ऋचोर्द्वयोः प्रगथने प्रगाथो नरि कीर्त्तितः ।
आयुर्वेदो धनुर्वेदो गान्धर्वश्चोपवेदकाः ।
शाखा स्त्री चरणस्त्वस्त्री सूक्तं स्यादेकदेवतम् ।

---

1314 A व्यंग्यो १
1317 A स्वराः २; हल्ल २
1318 A शल्ष्मा २; मातृका १
1319 A °सिक्या १
1323 A सौप १ स्वैरः कार्त १
1326 A प्रणवो १; B वेदस्त्वनुथवो for वेद॰स्त्वृपिर्
1327 B °यागमपंथः श्रीश्रुतिर्वाणिः
1328 A ऋगृचा २; निर्ऋथः २. For lines 1328–36, B subst.:
छन्दः प्रवचनं मन्त्र न स्त्रियामृचौ स्त्रियौ ।
यजुः क्लीबे समतुल(!)निर्ऋथः पुल्लिङ्गभाक् ॥६२॥
इति त्रयी त्रिवेदीयमथर्वा तु तदुद्धृतिः ।
त्रयीधर्मो वेदविधिर्मन्त्रोत्र विधिवेदवान् ॥ ६४ ॥
सुचन्द्रचन्द्रपदवान्हृद्यः स्ववशताकरः ।
एकदेवा तृचा सूक्तं प्रगाथो ग्रथनं द्वयोः ॥ ६५ ॥
आयुर्धनुर्गीतविद्याः क्रमात्त्र्युपवेदकाः ।
शाखा चरणमस्त्री स्याद्वंगस्तृग्भेदनं भवे(त्) ॥६६॥
1329 A त्रिवेदी २; °र्वणि २
1330 A °धर्मो १
1331 A मंत्रः १
1333 A प्रगाथो १
1335 A चरण २; सूक्तं १

साम्नः पद्प्रणवा न्यूङ्खौ भङ्गस्त्वृग्भेदनं मतः ।
अध्यायश्चानुवाकश्च ऋग्यजुःसंग्रहे मतौ ।
पदप्रकृतिका तु स्यात्संहिताऽथ पदं भवेत् ॥ ६४ ॥
सुप्तिङन्तपृथक्कारो विच्छेदः स्यादवग्रहः ।
भे(?)गवत्पदसंघाटः पदसंघात इत्यपि ।
पदसंहतिकृच्चद्वद्वर्णसंघाट ईरितः ।
प्रागग्रिमपदत्यागग्रहापाठे क्रमो नरि ॥ ६५ ॥
जटादयः पदावृत्तिभेदा अन्तः पुनः श्रुतेः ।
स्त्रियामुपनिषद्वेदो रहस्यं तत्र चान्तिमे [39b] ॥ ६६ ॥
सामभागविशेषः स्यादुक्थमुद्गीथ आदिमे ।
पृष्ठं स्तोत्रविशेषः स्याद्रिरिन्धस्तु स्वरः स्मृतः ।
निघातस्त्वनुदात्तः स्यात्समाहारः समश्रुतिः ॥ ६७ ॥
तत्तद्द्वंद्वे तु ऋक्सामे तद्वदृग्यजुषं भवेत् ।
अर्द्धर्चोऽस्त्री स्यादृचोऽर्द्धं बह्वृचोऽध्येतरि त्रिषु ॥ ६८ ॥
अनृचस्तु नऋक्पाठीतरद्वह्वृगनृग्भवेत् ।
प्रतिसामं भवेत्सामाभिमुखं क्लीबमव्ययम् ॥ ६९ ॥
साम्नोऽन्तिकेऽनुसामं स्यादवसामं त्वसामनि ।

---

1337 B क्रमात् for मतौ

1338 A संहिता १ थ पदं १; B पदच्छिदि for पदं भवेत्. For lines 1338-58, B subst:

साम्नः पद्प्रणवा न्यूङ्खस्तत्त्वप्रतिरथं विदुः ॥ ६७ ॥
यथात्रामङ्गलं तद्धि (?) तूक्थ उद्गीथ आदिमे ।
पदप्रकृतिका तु स्यात्सहिताथ पदच्छिदि ॥ ६८ ॥
(=l. 1338)

अवग्रहो वर्णसंघाटस्तु वर्णौघकारिणी ।
अन्यवत्पदसंघाटः पदसंहितिकारिणि ॥ ६९ ॥
पादं पादमृचः पाठे पच्छ इत्यव्ययं भवेत् ।
(=l. 1355)

पादयोः प्रागुत्तरयोः क्रमात्त्यागे ग्रहे क्रमः ॥ ७० ॥
वेदान्तः स्यादुपनिषत्स्त्री रहस्यं न युग्मयोः ।
पृष्ठं स्तोत्रविशेषः स्याद्रिरिन्धस्तु स्वरः स्मृतः ॥ ७१ ॥
(=l. 1346)

अनुदात्तनिघातौ द्वावर्धर्चोऽस्त्री ऋगर्धकम् ।
तत्तद्द्वे तु ऋक्सामे तद्वदृग्यजुषं भवेत् ॥ ७२ ॥
(=l. 1348)

बहृक्पाठी बह्वृचः स्यादनृचस्त्वृगपाठकः ।
सामहीनोवसाम' स्यात्सामन्यं साम्नि साधु यत् ॥ ७३ ॥
ऋगेकपदसंयुक्ता भवेदेकपदा हि सा । (=l. 1353)
वामदेव्यं चौशनसं दृष्टं यत्तेन साम चेत् ॥ ७४ ॥
यज्ञायज्ञीयमेवं तद्यज्ञायज्ञपदाङ्कितम् ।
स्यात्कुशानवकं सूक्तमच्छावाकीयमीदृशम् ॥ ७५ ॥

1339 A °कारो १; °ग्रहः १

1340 A °संघात १

1342 A क्रमो १

1344 A °निष १; रहस्यं १

1345 A °दुक्थ १ मुद्गीथ १

1346 A पृष्ठं १; स्मृतः १

1349 A अर्धर्चो १; °तरि १

1350 A अनृच १ स्तु; °द्वह्वृग १ नृग् १

1351 A प्रतिसामं १

1352 A °दवसामं १

ऋगेकपदसंयुक्ता भवेदेकपदा हि सा ॥ ७० ॥
द्विपदा त्रिपदेत्यादि विशेष्यायां भवेदृचि ।
पादं पादमृचः पाठे पच्छ इत्यव्ययं भवेत् ॥ ७१ ॥
स्यात्सामन्यः साम्नि साधुराथर्वणस्त्वथर्वणि ।
स्यात्साम यज्ञायज्ञा( ज्ञि ? )यं यज्ञायज्ञपदाङ्कितम् ॥ ७२ ॥
भवेद्राशिष्ठकोऽध्यायो भवो व्याख्यानमस्य यत् ।
स्याद्दीर्घजीवतो दीर्घजीवतीयोऽनुवाच(क ?)कः ॥ ७३ ॥
इषेत्वको गोपदक इषेत्वादि[40a]पदान्वितः ।
एतायामोपि च तौ यामीयोऽध्यायस्तथा मतः ।
औक्तः प्रोक्तः प्रगाथः स्यादुक्तादिच्छन्द आदिमः ॥ ७४ ॥
अथ क्लीबे समूहे स्याच्छान्दोग्याथर्वणादयः ॥ ७५ ॥
बाह्वृच्यं तद्वदौक्थिक्यं तद्धर्माम्नाययोरपि ।
पृष्ठ्यं पृष्ठसमूहे स्याद्भवे गाम्रं तथा व्रजे ॥ ७२ ॥
त्रिषु तत्र भवे तस्य व्याख्याने वैदिकार्चिकौ ।
स्यात्पुरोडाशिकः पौरोडाशिकश्च समार्थकः ।
सौवरस्तु स्वरव्याख्यामधिकृत्य कृतो हि यः ।
पैष्टिकं पाशुकं च स्यात्पौरश्चरणिकं तथा ।
छन्दस्यश्छान्दसः पादव्याख्यानः कामिकादयः ॥ ७३ ॥
एवमार्गयनब्राह्मणिकान्समुदी (?) येत् ।
स्यादौपनिषदीस्तद्वदथ जीवति यस्तया ।
भवेदौपनिषत्कोसावसाध्येतरि तद्विन्दा( ? ) ॥ ७४ ॥

---

1353 A °देकपदा १
1354 A द्विपदा १ त्रिपदे १ स्या°
1355 A पच्छ १
1356 A सामन्यः १
1357 A °यज्ञियं १; °ङ्कितम् १
1358 For line 1358 in B see below
1359 A °जीवनो १
1360 A इषेत्वको १ गोपदक १.–²) B वैसुपक्ष तथा पृथक्.—After line 1360, B adds:
एतायामीय इत्याद्यः स्तुतेः तत्पदाङ्किता ।, followed by line 1358.
1361 B om. lines 1361–6.
1362 A प्रोक्तः १
1364 A °दौक्थिक्यं १
1365 A पृष्ठ्यं १
1366 A वैदिका१र्चिकौ १
1367 A °शिकश्च.–²) B सौवरस्त्वपि for च समार्थकः.
1368 B om. lines 1368–9.
1369 A पैष्टिकं १ पाशुकं १; °णिकं १
1370 A °व्याख्यानः १ कामिका १ दयः- B छन्दस्यश्छान्दसस्तुल्यौ वैदिकः कामिकः पृथक्
1371 B °निकगौपादयोपरे
1372 For lines 1372–6, B subst.:
जीवन्तौपनिषत्कः स्यात्तौपनिषदोपरः ॥ ७९ ॥
तत्पाठिन्द्विदोस्तुल्यौ श्रोत्रियश्छान्दसावुभौ ।
श्रोत्रं श्रोत्रियकं भावे श्रोत्रियस्य न युग्मभाक् ॥ ८० ॥
1373 A °त्को १ वाध्ये

छान्दस-श्रोत्रियौ तुल्यौ तद्भावे श्रौत्रमन्तिमे ।
श्रोत्रियत्वं श्रोत्रियता स्याच्छ्रोत्रियकमन्तिमे ॥ ७५ ॥
तस्मिंश्छान्दसकं च [40b] स्यादथ सांहितिको भवेत् ।
पादिकः पदिकस्तुल्यो क्रामि(क)क्रमकौ समौ ।
पदकक्रमकं क्लीबे द्वंद्वे बह्वृचयाजुषम् ।
बह्वृचार्यो याजुषः स्यात्सामकः सामगः समौ ॥ ७६ ॥
स्यादाथर्वणिकोऽथ स्याद् द्विवेदोऽथ त्रिवेदवत् ।
सार्ववैद्यः सर्ववेदश्चातुर्वैद्यश्च तादृशः ॥ ७७ ॥
सार्ववेदी सर्ववेदा चातुर्वेदी द्विजावली ।
स्यादाथर्वणिको विप्रः स्त्री त्वाथर्वणिकी भवेत् ॥ ७८ ॥
शतपथिकः शतपथिकी स्त्री चेत्षष्टिपथिकस्तु तद्वत्स्यात् ।
उक्थग्रन्थमधीते वेत्ति च यो वा स औक्थिको ज्ञेयः ॥ ७९ ॥
ब्राह्मणोऽनुब्राह्मणी स्यादनुब्राह्मणिनी द्विजा ।
एवं भवेदैतरेयी काश्यपी कौशिकी तथा ।
भवेद्वाजसनेयीति याज्ञवल्क्यसमार्थकः ।
एवमाश्मरथाद्याः स्युस्तत्कल्पाध्येतृवेदिनोः ॥ ८१ ॥
शिक्षा कल्पश्छन्दो व्याकरणं ज्योतिषं निरुक्तं च ।
[41a] वेदाङ्गान्यथ शिक्षां पठन्विदन्भवति शिक्षकस्तितये ॥ ८२ ॥
त्रिषु तदधीते वेदेत्यर्थे त्रैविद्य-धार्मविद्याद्याः ।
सांग्रहसूत्रिक-पाराशरकल्पिक-कालपसूत्राश्च ॥ ८३ ॥

---

1374 A °श्रोत्रियौ २
1375 A श्रोत्रियता ३
1376 A °सकं ५; सांहितिको १
1377 A °क्रमकौ २. B पदकस्तुल्यौ
1379 A °चार्यौ २; सामगः २.–For lines 1379–1424, B subst.:
सामकः सामगस्तुल्यावार्चः सांहितिकः पृथक् ।
द्विवेद आथर्वणिकोन्येपि साहितिकादयः ॥ ८२ ॥
सार्ववैद्यः सर्ववेदश्चातुर्वैद्यादयोपरे ।
एवं काश्यप्यैतरेयी सह वाजसनेयिना ॥ ८३ ॥
स्युः कल्पाध्येतृविदोरेवमाश्मरथादयः ।
वसंताधिकृतग्रन्थाध्येत्री वासंतिकीति दिक् ॥ ८४ ॥
प्रगाथ औक्था उक्थादिछंदो यस्यादिमं भवेत् ।
बह्वृचाद्या विना भावप्रत्ययान्ता विशेष्यगाः ॥ ८५ ॥
क्लीबे समूहे छादोग्यं बाह्वृच्यं तद्वदौक्थिकम् ।
शिक्षादिषट्कं वेदाङ्गं शिक्षा वर्णविवेचनम् ॥ ८६ ॥
कल्पः क्रियासिद्धरूपप्रयोगप्रतिबोधकः ।
छन्दोवृत्तं न स्त्री प्रस्तारः स्यात्कलान्यासः ॥ ८७ ॥
ओजो ना विषमं स्यात्स्थलं यतिः स्त्री पदच्छेदः ।
क्रमः पदादिसंयोगो गाथा छन्दस्यनीरिता ॥ ८८ ॥
नाम्नि विष्टारपंक्त्याद्या उक्ताद्यास्छन्दसां भिदः ।
प्रकृतिप्रत्ययाद्यैस्तु पदान्वाख्यानकारि यत् ॥ ८९ ॥
तत्स्याद्व्याकरणं शब्दानुशासनमिदं पुनः ।
भवेदापिशलं काशकृत्स्नं प्रोक्तं हि तेन यत् ॥ ९० ॥
पाणिन्युपज्ञं क्लीबे स्यात्पाणिनीयं तथाष्टकम् ।
क्लीबेव्ययं त्रिमुन्येतत्कृतं शब्दानुशासनम् ॥ ९१ ॥
शालातुरीयो दाक्षेयो दाक्षीपुत्रश्च पाणिनिः ।
कातीयं वार्तिकं स्त्रोकानुणार्यस्य पूरकम् ॥ ९२ ॥
1380 A °णिको १; द्विवेदो १ च त्रिवेद १ वत्
1381 A °वेद २ श्चातुर्वैद्य १ श्च
1382 A °वेदा २
1383 A °णिकी १

कल्पः प्रोक्तस्तनयः स्यादैतरेयी सभाल्वी ।
पैगीशाखायती शौनकीयः कातीय इत्यपि ॥ ८४ ॥
आरभ्यैकाक्षरं पादमेकैकाक्षरवर्धनात् ।
आषड्विंशत्यक्षरं स्युरुक्ताद्याश्छन्दसां भिदः ।
गायत्राद्या यद्विशेषास्तद्विष्टारमुदीरितम् ॥ ८५ ॥
उक्ता स्त्री क्लीबमौक्तं स्यादत्युक्तात्युक्तमन्तिमे ।
मध्या माध्यं प्रतिष्ठा तु प्रातिष्ठं च नपुंसके ॥ ८६ ॥
सौप्रतिष्ठं सुप्रतिष्ठा भवेद्गायत्रमन्तिमे ।
गायत्री स्त्री भवेत्चूष्णि[गुष्णि]कं च नपुंसके ॥ ८७ ॥
आनुष्टुभमनुष्टुप् स्त्री बृहती बार्हतं मतम् ।
पङ्क्तिः पाङ्क्तं च तुल्यार्थं त्रिष्टुप् स्त्री त्रैष्टुभं तथा ॥ ८८ ॥
जगती जागतमतिजगती त्वातिजाग[41b]तम् ।
शक्वरी शाक्वरं चातिशक्वरी त्वातिशाक्वरम् ॥ ८९ ॥
अष्टिस्त्वाष्टत क्लीबेऽथात्यष्टिरात्यष्ट धृतिः पुनः ।
धार्तं भवेत्त्वतिधृतिः क्लीबे त्वातिधृतं मतम् ॥ ९० ॥
कार्तं कृतिः प्राकृतं तु प्रकृतिः स्यादथाकृतिः ।
आकृतं वैकृतं तु स्या द्वि[कृतिः संकृ]तौ पुनः ॥ ९१ ॥
सांकृतं स्यादातिकृतमतिकृत्यामथौत्कृतम् ।
उत्कृतिश्चाथ षड्विंशत्यक्षराधिकपादकाः ॥ ९२ ॥
स्त्रीलिङ्गो ना दण्डकाः स्युः स्त्रियो गाथा इतोऽपराः ।
क्रमः पदादिसंयोगः पदविच्छेदनं यतिः ॥ ९३ ॥

---

1384 A °यिकः ३; °यिरी १; °यिक १ स्तु
1385 A औक्थिकी १
1386 A °क्षणी १; °गिनी १
1387 A काश्यपी १ कौशिकी १
1388 A °नेयी १ ति
1389 A °रया १ घाः
1390 A शिक्षा १ कल्प १ छंदो १ व्याकरणं १ ज्योतिषं १ निरुक्तं १
1391 A वेदाङ्गा १; शिक्षक १
1393 A °सूनिक १; कल्पक १; °सूना १ थ
1394 A °रेयी १ सभाल्वी १
1395 A °यती १; °कीय १ कातीय १
1398 A °तद्विष्टार १ मु°
1399 A औक्त १, °त्युक्त १
1400 A प्रातिष्ठं २
1401 A °तिष्ठा २
1402 A गायत्रीं २; °कं २
1403 A °ष्टुप् २; बार्हतं २
1404 A त्रैष्टुभं २
1405 A जागत २; °जागतं १
1406 A त्वातिशाक्वरं २
1407 A °स्त्वाष्टतं २; °राष्टं २
1408 A धार्तं १; °धृतं २
1409 A कृति° २; प्रकृतिः २
1410 A आकृतं १
1411 A साकृतं १; °कृत्या २
1412 A उत्कृति २
1413 A दण्डकाः १; गाथा १

ओजं स्याद्विषमं स्थानं युक्सगं समुदीर्यते ।
प्रस्तारः स्यात्कलान्यासः छन्दो वृत्तं नपुंसके ॥ ९४ ॥
शब्दशास्त्रं व्याकरणं तदैन्द्रादिभिदाष्टधा ।
सूत्रं स्तवनकृत्क्लीबेऽथ प्रोक्ते तेन भेद्यवत् ॥ ९५ ॥
भवेदापिशलं काशकृत्स्नमित्येवमादिकम् ।
माहेश्वराणि तानि स्युर्यान्याद्यानि चतुर्दश ॥ ९६ ॥
※ ※ ※ ※ ※ ※ ※ ※ पाणिनीयं तथाष्टकम् ।
[42a] त्रिमुन्येतद्व्याकरणं दाक्षीपुत्रस्तु पाणिनिः ।
शालातुरीयो दाक्षेयोऽप्यथोक्तानुक्तपूरकम् ॥ ९७ ॥
वार्त्तिकं तत्र कातीयं कात्योक्तेऽथ पुनर्वसुः ।
कात्यः कात्यायनो मेधाजित्स्याद्वररुचिश्च सः ॥ ९८ ॥
चूर्णिः स्त्रियां भवेद्भाष्यं सूत्राभिप्रायवर्णकम् ।
शारीरकीयं तच्छारीरकं शंकरभाषितम् ।
पातञ्जलं फाणिपतं तत्पतञ्जलिभाषितम् ॥ ९९ ॥
आवान्तरप्रकरणे विश्रामे शीघ्रपाठतः ।
तदेकाहविनिर्वृत्तविचारं मतमाह्निकम् ॥ १०० ॥
यत्र व्याकरणस्य स्यात्फलाफलविचारणम् ।
तत्राह्निके पस्पशा स्त्री गोनर्दीयः पतञ्जलिः ॥ १ ॥
भवेद्वाक्यपदीयं तु भाष्यव्याख्यानसंयुतम् ।
पष्टिश्रावी भर्तृहरिर्वृत्तिः सूत्रार्थबोधिका ॥ २ ॥
सा काशिका काशिभवा कारिका त्वर्थभूयसी ।
भवेत्कक्षपुटः पुंसि निबन्धे सारसंग्रहे ।
नपुंसि टिप्पणं टीका क्लीबे विवरणं मतम् [42b] ॥ ३ ॥

---

1415 A योजं १; युक्समं २
1416 A °न्यासः २
1417 A ब्याकरणं २
1419 A °शलं १
1420 A °राणि १
1421 A तथाष्ठकं २
1422 A त्रिमुन्यै १ त°
1424 A वार्तिक १
1425 A °रुचि ४ ध्व
कों० क० ९
1426 B reads पुनर्वसुश्च चूर्णी स्याद्भाष्यं सूत्रार्थवर्णकं
1427 A °रकं १
1428 A फाणिपत २; B फाणिपर्त्त
1429 B अवान्तर-
1430 A °माहिकं १
1431 B °विचारणा
1432 A पस्पशा १, पतंजलि २. B अथ for स्त्री
1434 A °हरि २ र्वृत्ति. १
1437 B om. lines $1437^b$—$1439^a$.

स्यात्पात्वणत्विकस्तस्य व्याख्यानभवयोस्त्रिपु ।
पदव्युत्पादनग्रन्थो निरुक्तं न द्वयोर्भवेत् ॥
पदभङ्गः पञ्जिका स्त्री न्यासस्तस्या भवेत्पुमान् ॥ ४ ॥
अस्त्री कोपो निघण्टुः स्यात्सर्वविद्या कलिन्दिका ।
प्रस्तावः स्यात्प्रकरणं संग्रहस्तु समाहृतिः ॥ ५ ॥
शास्त्रे दर्शनमप्यथाधिकरणं न्यायो नयः संमतो
मीमांसा तु विचारणा विधिरिहाप्राप्तार्थसंप्रापणम् ।
आन्वीक्षिक्युदितात्र तार्किकनयः सर्गादिभिः पञ्चभिः
संयुक्तं किल पञ्चलक्षणमिति प्रोक्तं पुराणं च तत् ॥ ६ ॥
धर्मशास्त्रं स्मृतिर्धर्मसंहिता च स्त्रियावु(मु)भौ ।
पञ्चाङ्गवाक्यं ग्रन्थः स्याच्छम्बुर्ना ग्रन्थविस्तरम् ।
काव्यं कावा(?)च कविता रसवत्पदबन्धनम् ॥ १० ॥
तदुत्तमं ध्वनिः पुंसि भवेद्व्यङ्गे(ङ्ग्ये)तिशायिनि ।
गुणीभूते मध्यममं स्याच्चित्रं स्याद्व्यङ्गवर्जितम् ॥ ११ ॥
तद्दृश्यमभिनेयं यच्छ्रव्यं तु श्रवणार्थकम् ।
वृत्तबन्धः पद्यमन्त्ये श्लोकः पुंस्यत्र[43a]संमतः ॥ १२ ॥

---

1438 A °णत्विक १. B om. line 1438
1439 A निरुक्तं १. B तु पदार्थकृत् for न द्वयो°
1440 A न्यास २. B स्यात् for स्त्री, and पञ्चिकान्यास इत्यपि for the latter half
1441 A निघंटुः २, कलींदिका २. B कडान्दिका
1442 A प्रकरणं २; समाहृतिः २.–For lines 1442–8, B subst.:
आन्वि[क्षि]की तर्कविद्या शास्त्रं स्याद्दर्शनं नयः ॥९९॥
अर्थशास्त्रं दण्डनीतिर्न्यायविद्या तु गौतमी ।
विचारणा तु मीमांसाप्राप्तप्रापको विधिः ॥१००॥
भवेत्तथाधिकरणमेकन्यायोपपादनम् ।
पक्षद्वयं विकल्पः स्याद्विभाषा स्त्री तथाव्ययम् ॥१०१
सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
भूम्यादेश्चैव संस्थानं पुराणं पञ्चलक्षणम् ॥ १०२ ॥
धर्मशास्त्रं स्मृतिर्धर्मसंहितायांगपद्धयुक् ।
वेदश्चतुर्धा मीमांसान्वीक्षिकी च पुराणयुक् ॥१०३॥
स्मृतिश्चतुर्दशैवं स्युर्विद्या ग्रन्थ. प्रबंधवत् ।
निबन्धश्च स पञ्चाङ्गः पञ्चाङ्गी विषयादिना ॥ १०४ ॥
आचारादिद्वादशाङ्गी गणिपेटकनामिका ।
ग्रन्थपन्थिग्रंन्थरूढं शंबुर्नो ग्रन्थविस्तरः ॥ १०५ ॥
उद्घात उपः प्रासारः प्रसंगोवसरः क्षण. ।
प्रक्रमः समयो वारो वेळा चांतरमस्त्रियाम् ॥१०६॥
इतिहासः सत्यपूर्ववृत्तमाख्यायिका पुनः ।
कथा कथानिका ना न चाख्यानं नव्यकल्पितम्॥१०७
आभाणस्तु प्रस्तुतेऽर्थे लौकिकार्थनिदर्शनम् ।
1443 A दर्शन २; नयः ३
1444 A °रणा २ विधि १
1445 A °नयः २
1446 A पुराणं २
1447 A च २
1448 A शंवु १ र्नो
1450 A ध्वनिः २
1451 A मध्यमं १; चित्रं १
1452 A तद्दृश्य १
1453 A श्लोकः ३.–For lines 1453–9, B subst.:
एकद्वीत्र्यं(!)श्लोकार्थमुक्तं युग्मं कलापकम् ॥११०॥
विशेषकं त्रिभिः श्लोकैर्वद्धं सदानितं च तत् ।
परतः कुळकं काव्ये त्वधिकृत्य विनिर्मिते ॥ १११ ॥
तत्किरातार्जुनीयं स्याच्छिशुपाळवधीयवत् ।
श्लोकः पद्यं च गद्यं च कलिकाचूर्णिके समे ॥११२॥
सगद्यपद्या चम्पूः* सर्गोध्यायसमार्थको ।

मुक्तकमेकश्लोकं द्विश्लोकं युग्मकं गदितम् ।
संदानितं विशेषकमुदिते त्रिश्लोकसंबन्धम् ॥ १३ ॥
श्लोकचतुष्टयकलितं कलापकं पञ्चतः कुलकम् ।
काव्ये त्वधिकृत्य कृते तदिति किरातार्जुनीयमित्यादि ॥ १४ ॥
फक्किका चूर्णिका गद्यं चम्पूः स्त्री तद्विमिश्रिता ॥ १५ ॥
अवान्तरकथापूर्तौ सर्गोऽध्यायः समार्थकौ ।
आख्यानसंज्ञकास्ते स्युर्महाकाव्यगता यदि ॥ १६ ॥
प्राकृतैर्निर्मिते काव्ये सर्गा आश्वाससंज्ञकाः ।
अपभ्रंशनिबद्धे तु सर्गाः काण्डवकाभिधाः ॥ १७ ॥
सर्गबन्धो महाकाव्यं संध्यङ्गादिसमन्वितम् ।
खण्डकाव्यं भवेत्काव्यमेकदेशानुसारि यत् ॥ १८ ॥
प्रवह्लिका प्रहेलिकानुयोगदूतिका तथा ।
विपादिका च सा भवेद्दुरूहकानुयोजनम् ॥ १९ ॥
समासार्था समस्या स्यात्कविशक्तिपरीक्षिणी ।
पदसंघटना रीतिर्वैदर्भी मधुराक्षरा ॥ २० ॥
ओ[43b]जःप्रकाशिवर्णाढ्या गौडी साडम्बरा भवेत् ।
तत्संकीर्णा तु पाञ्चाली लाटी सार्थविशेषणा ॥ २१ ॥
उत्साहवर्धनं त्वोजो माधुर्यं मानसद्रवः ।
काव्यात्मा तु प्रसादः स्याच्छ्रुत्यैवार्थप्रकाशकः ॥ २२ ॥
अन्त्यमक्षरमादाय प्रतिश्लोकं क्रमेण यः ।
यथान्यः पठ्यते श्लोकः प्रतिमालेति सा मता ॥ २३ ॥
जनश्रुतिः किंवदन्ती निन्दा त्वेषाभिशंसनम् ।
लोकापवादः कौलीनं विगानं वचनीयता ॥ २४ ॥
वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स पुरातनम् ।

---

1454 A मुक्तक १; युग्मकं २
1455 A °षक १ मुदिते
1457 A °नीय १
1458 A गद्यं ३ चम्पूः १
1459 A °र्गोध्यायः २
1460 A °संज्ञका १
1461 A आश्वास १
1463 A °काव्ये २
1464 A °काव्यं १
1467 A °क्षिणी ३
1468 A रीति २
1469 A गौडी १
1470 A पाञ्चाली १ लाटी १
1474 B तां विदुः for सा मता
1475 A किंवदन्ती २
1476 A वचनीयता ४. B जन्यमस्त्रियां for वचनीयता
1477 A उदंतः ४. B पुरातनः

इति हान्ययमैतिह्यं वर्णांकोऽस्त्री तु पुस्तकम् ॥
उत्थानं पुस्तमस्त्रीयाथादर्शः प्रतिपुस्तकम् ॥ २५ ॥
लेखकोऽक्षरचणोऽक्षरचञ्चुर्वार्णिको * * * * क्षरजीवः ।
गान्धिको लिपिकरो लिपिशिल्पी स्यादसौ लिपिकरो लिपिवृत्तिः ॥ २६ ॥
लिपिर्लिविः स्त्रियौ लेखे यवनानी पुनर्भवेत् ।
लिपिर्या यवनानां स्यादथ वाचिकहारकः ।
वर्णदूतः स्वस्तिमु[44a]खश्चीरकोऽधिक्रिया युतः ।
अभिलाषयुतो यूनोरसौ कामार्त्तिवेदकः ॥ २७ ॥
अनङ्गलेखोऽथ मसी निशिश्च मिथुनमसि(?) ।
मलिनाम्बुः काञ्चनिका मेला धातुपलः पुमान् ॥ २८ ॥
क्लीबे पत्राञ्जनं च स्यान्मेलान्धुर्मपिकूपिका ।
स्याद्वार्गनं चाथ मेलानन्दो मसिमणिर्द्वयोः ॥ २९ ॥
कलमो लेखनी वर्णतूलिका वर्ण(र्णि?)का स्त्रियः ।
तूलिका कूचिका चित्रलेखनी च स्त्रियो मताः ।
चरमे चित्रमालेख्यं लिपिः स्त्री चित्रलेखनम् ।
लेखीलको लेखहारो चित्रयन्त्रेषु संचकः ।
लेखबर्हं लेखपत्रं वाचनं तु प्रहेलनम् ॥ ३१ ॥
आख्याभिक्षा(ख्या?)भिधा संज्ञाह्वा गोत्रं नाम चास्त्रियाम् ।
शर्माह्वया नामधेयमभिधानं च न स्त्रियाम् ॥ ३२ ॥
संबोधनमामन्त्रणमाह्वानं त्वभिमन्त्रणं गदितम् ।
आकारणा तु हूतिः संहूतिः सा कृता बहुभिः ॥ ३२ ॥
व्यवहारस्तु विवादः स्थेयं तु स्थानमेतस्य ।
वाञ्छुसमत्यादानं(?)स्यादुद्रा[44b]हो स्वप(?)न्यासः ॥ ३३ ॥

1478 B इतिहास्य°.—[5]) D पुस्तोस्त्री पुस्तकं त्रिषु
1479 For lines 1479–98, B subst.
वर्णांक उत्थानमथादर्शः स्यात्प्रतिपुस्तकम् ।
स्यादाह्वयोभिधा संज्ञाभिख्याख्याया च शर्म
च ॥ १२३ ॥
नामधेयं गोत्रमभिधानं नामत्व(?)मस्त्रियौ ।
संबोधनामन्त्रणे द्वे आह्वानाकारणे पुन. ॥ १२४ ॥
1481 A °वृत्तिः ११
1482 A लेखो २
1486 A °लेखो १
1489 A स्याद्वार्गनं ३
1490 A वर्णका ४
1491 A °लेखनी ३
1492 A °मालेख्यं २
1493 A °हारो २
1494 A °पत्रं २ वाचनं १
1496 A °धानं ११
1497 A °मन्त्रण २; °मन्त्रणं २
1498 A हूति· २ संहूतिः १
1499 A विवादः २ स्थेयं १
1500 B अभ्यादनं.—[6]) A स्वपन्यासः ४; D
सुपन्यासः

उपोद्घात उदाहारः प्रकृतौपयिकं वचः ।
समयः शपथः पुंसि शपनं तु नपुंसके ॥ ३४ ॥
कथंकथिकता पृच्छा ज्ञीप्सा प्रश्नोऽनुयोगवत् ।
तत्रोपालम्भसहिते भवेत्पर्यनुयोजनम् ॥ ३६ ॥
विना तु पात्रं यः प्रश्नो नभोदर्शनपूर्वकम् ।
आकाशभाषितं तत्स्याद्दैवप्रश्न उपश्रुतिः ।
उत्तरं प्रतिवचः प्रतिवाक्यमस्त्रियां तु चटुलं चटु चाटु ।
चाटुकं च हृदयंगमहृद्ये सूनृतं त्रिषु स(भ)वेत्प्रियसत्ये ॥ ३८ ॥
मिथ्याभियोगस्तु मृषाविवादोऽभ्याख्यानमन्यत्वेऽथ मृषाभिशस्तिः ।
मनोभिशापोऽथ भवेत्प्रणादः शब्देऽनुरागप्रभवेऽत्र पुंसि ॥ ३९ ॥
श्लोको वर्णो ना यशोऽन्ते समाज्ञा-
भिक्षा (ख्या) कीर्तिः सा समज्ञा प्रशस्तिः ।
श्लाघा कीडा स्त्री स्तुतिः स्यान्नुतिश्च
स्तोत्रं नूतिः स्त्री स्तवश्चार्थवादः ॥ ४० ॥
विकत्थ(त्थ?)नं मृषाश्लाघा निन्दा कुत्सा च धिकृतिः ।
जुगुप्सा गर्ह[45a]णा क्षेपोऽपवादोऽवर्ण इत्यपि ॥ ४१ ॥
निर्वादश्च परीवाद उपक्रोशोऽथ भर्त्सनम् ।
अपकारवचोऽथ स्यात्पारुष्यं दुष्टभाषणम् ॥ ४२ ॥
शाप आक्रोश आक्षेपोऽभिषङ्गः क्षारणा त्वसौ ।
आक्षारणा दूषणा च क्षारणं मैथुनं प्रति ॥ ४३ ॥
आक्रोशे स्यादकरणिः स्त्रियामजननिस्तथा ।
हू(?)त्कारस्तारशब्दः स्यात्राणार्थो महतां पुरः ॥ ४४ ॥
पृष्ठमांसादनं क्लीबे परोक्षे दोषकीर्तनम् ।

1501 A उदाहारः २.—a) B समयः शपथ. शपः
1502 A शपनं २. B om. line 1502
1507 A प्रतिवाक्य २
1508 A °हृद्ये ६ सूनृतं १
1509 A °भियोग १; °भ्याख्यान ३.—For lines 1509–14, B subst.:
मिथ्याभियोगोभ्याख्यानं मिथ्यारोपोभिशापवत् ।
प्रणादः सीत्कृतः शब्दो योऽनुरागसमुद्भवः ॥१३०॥
यशःश्लोकवर्णौ समाज्ञा समज्ञा
समाख्या प्रशस्तिस्तथा कीर्तिभिख्यैः ।
स्तवस्त्वर्थवादो नुतिर्नूतिरीडा
स्यद् श्लाघया स्तुतिस्तोत्रमता ॥ १३१ ॥
1510 A प्रणादः १
1515 a) A विकल्पनं १, B विकत्थना त्वथश्लाघा
1517 A उपक्रोशो ११
1518 A °वचो २; पारुष्यं १
1519 A °षङ्गः ४
1520 B चाक्षारणं
1521 A अकरणि १. B transp. अकरणिः and अजननिः
1522 B transp. lines 1522 and 1523
1523 A °सादनं १. B यत्र for क्लीबे

मन्मनं मन्दवचनं दंपत्योः केलिकालजम् ॥ ४५ ॥
उच्चैर्घुष्टं घोषणाम्रेडितं तु
द्विस्त्रिः प्रोक्तं काकु वाक्ये न पुंसि ।
उल्लापने स्याद्गद्दरो पुष्टशब्दो
वारं वारं भाषणे चानुलापः ॥ ४५ ॥
व्यलीकाविष्कृतिरुपालम्भः स तु सगर्हणः ।
परिभाषणमालापस्त्वापृच्छाऽऽभाषणं तथा ॥ ४६ ॥
आशीः स्त्री मङ्गलशंसानिष्टाशंसा तु गालिका ।
नमोवाको नमःशब्दः संनतिस्तत्र च स्त्रियाम् ॥ ४७ ॥
वचोऽनर्थकं स्यात्प्रलापो विरुद्धं
त्विदं विप्रलापः [45b] शुभं सुप्रलापः ।
वचः सोपहासं भवेच्चर्चरी स्त्री
तथा चर्भटी चर्चरं चर्चरीकम् ॥ ४८ ॥
स्याद्विलापो विलपनं न नरः परिदेवनम् ।
संलापः संकथा स्त्री स्यादन्योन्यपरिभाषणम् ॥ ४९ ॥
विभाषा तु स्त्रियामुक्ता विकल्पवस(च ?)नार्थकाः ।
अपलापो निह्नवः स्यात्संदेशोक्तिस्तु वाचिकम् ।
प्रसिद्धिशब्दे टंकारो म्लेच्छितं पारभाषिके ॥ ५० ॥
चित्रोक्तिः पुष्पशकटी ब्रह्मवादः श्रुतिध्वनिः ।
काकुर्द्वयोः शिरःकम्पपूर्वा या विकृतिध्वनिः ।
अहेतुर्व्योमशब्दः स्यान्निर्घाते व्योमसुद्गरः ।

1524 B कोकिलालजं for केलिकालजम्
1525 A घोषणा २ म्रेडितं १
1527 A गद्दरो १. उल्लापः for °पने
1530 A ऽऽभाषणं २
1531 A °शंसा २
1532 B om. line 1532
1533 A प्रलापो १
1534 A सुप्रलापः १
1535 B प्रियं for भवे॰
1536 A °रीकं ४
1537 A °देवनं ३
1538 A °भाषणं ३
1539 B om. line 1539
1540 A निह्नवः २; वाचिकं २

1541 A टंकारो १ म्लेच्छितं १. B शब्दः प्रसिद्धः for प्रसिद्धिशब्दे.–[b]) B तदंकोत्रीपरिष्कृतः
1542 A °शकटी २.–[b]) B म्लेछितं परभाषितं (cf. line 1541)
1543 For lines 1543–61, B subst.:
लटः प्रागादिकं द्राप्यो (?) कार्यप्रेषणोदितम् ।
प्रतिशासनसंज्ञो ना काकुः स्याद्ध्वनिविक्रिया ॥१४३॥
संबोधनोक्तिर्दैवाख्ये नमोवाकस्तु संनतिः ।
कल्या कल्ला शुभा वाणी दर्शती सूपदी खरा ॥१४४॥
वचः सान्त्वं सुमधुरं संगतं हृदयंगमम् ।
सत्यं तथ्यमृतं सम्यग्यथार्थं स्याद्यथास्थितम् ॥ १४५॥
भूतं सम्यक्समीचीनं यथातथमिदं समम् ।
अलीकमनृतागल्ल(?)वितथानि विशेष्यवत् ॥ १४६ ॥

स्त्रियामुद्धूतकलिका भवेदुत्कण्ठवाचिकम् ॥ ५१ ॥
विशेष्यलिङ्गास्तु परे शुभा वाक्-
कल्पा च कल्या रुशती त्वभव्या ।
तथा रुशन्ती मधुरं तु भूयः
सान्त्वं वचोऽवाच्यमनक्षरं स्यात् ॥ ५१ ॥
विकुष्टं किल निष्ठुरं च परुषं रूक्षं तथाश्लीलकं
ग्राम्यं ग्रस्तमिदं विलुप्तपदकं श्लिष्टं पुनश्चास्फुटम् ।
क्षिप्रोक्तं तु निरस्तमाहतमिदं मिथ्यार्थकं स्यादथा-
बध्य(र्थं?)व्यर्थ[46a]मबद्धकं तु विफलं चोच्चावचं तद्भवेत् ॥ ५२ ॥
परस्परपराहतं भवति संकुलं क्लिष्टकं
व्यलीकमनृतप्रियं तुमुलमाकुलं संमतम् ।
अलीकमनृतं तथा वितथमत्र मिथ्या मृषा
मृषोद्यमयथातथं न विकृतयथास्त्रियां(?) टट्टरी ॥ ५३ ॥
अयाथातथ्यमायाथातथ्यं भावे नपुंसके ।
अम्बूकृतं सनिष्ठीवं गद्गदं क्लिष्टवर्णकम् ॥ ५४ ॥
सत्यं तथ्यं भूतं सम्यगृतं स्यात्समीचीनम् ।
सद्याथार्थ्यं यथार्थं यथातथं स्याद्यथास्थितं च मतम् ॥ ५५ ॥
शब्दो निनादो निनदो नदोऽपि
नादो ध्वनि-ध्वान-रवारवाः स्युः ।
आराव-संराव-विराव-घोष-
निर्घोष-निःस्वान-रण-स्तनाश्च ॥ ५६ ॥
ह्रादः स्वरो निःस्वनवत्कृतः स्यात्

---

स्त्री टट्टरी मृषामिथ्याव्यये स्त्री तु न विक्रिये ।
व्यलीकमयथातथ्यमायथातथ्यमित्यपि ॥ १४७ ॥
विकुष्टं परुषं रूक्षं निष्ठुरं श्लिष्टमस्फुटम् ।
लुप्तवर्णपदं ग्रस्तमश्लीलं ग्राम्यनामकम् ॥ १४८ ॥
भवे(त्) श्लिष्टं संकुलं च परस्परपराहतम् ।
उच्चावचमसंबद्धमाहतं तु मृषार्थकम् ॥ १४९ ॥
तुमुलं व्याकुलं व्यर्थमबद्धं स्यादबंध्यवत् ।
अम्बूकृतं सथूत्कारं निरस्तं त्वरितोदितम् ॥ १५० ॥
अंतःकंठं गद्गदं स्यात्कल्यावाक्स्त्रिष्वबाधिताः ।
1545 A °कलिका १
1547 A कल्या २
1548 A रुशंती ३
1549 A °नक्षरं २
1550 A रूक्षं ४
1551 A ग्राम्यं २; °पदकं १; °श्चास्फुटं ३
1552 A °र्थकं २
1553 A व्यर्थं २
1554 A क्लिष्टकं ३
1555 A °प्रियं २; °माकुलं २
1558 A °तथ्यं २
1559 A °अंबूकृतं १; गद्गदं १
1561 A °स्थितं १०
1563 °रवा.
1566 For lines 1566–91, D subst.:
मायुर्ह्रादश्च निर्ह्रादः स्वनः स्वानोऽपि निःस्वनः १५१
स्वरो रावोऽस्त्रियां रुञ्जी डिंवकोलाहलौ स्त्रियै(?)।
पुमान्कलकलो वीणेतरवाद्योद्भवस्तु सः ।

निह्रादि-मायू अपि रुत्पुनः स्त्री ।
सीत्कार एप प्रमदाजनस्य
दन्तक्षताद्यैरुदितः प्रदिष्टः ॥ ५७ ॥
रतिभवो रणितं मणितं समे
वसनपर्णभवः स च मर्मरः ।
पिकभवः स कुहू रुतमन्तिमे
पतगजे त्विह कूजि[46b]तकूजने ॥ ५८ ॥
भूपणजन्मनि शिञ्जितमन्त्ये
शिञ्जा गुञ्जा गुञ्जितमलिजे ।
वाशित-विरुते स्तश्च तिरश्चां
क्रन्दनकणिते पीडाभाजाम् ॥ ५९ ॥
शर्द्धनं पर्दनं पायुजे कर्द्दनं
कुक्षिजे सूतिजे कुन्थनं कुन्थितम् ।
क्षीजनं वेणुजे भेरिजे दर्दुरो
दर्दुरोत्थे रवो हंभ-रंभे गवाम् ॥ ६० ॥
रेषा रेपणमेप वृकोत्थः
कुक्कुरजे स्तो बुक्क[न]भपणे ।
विस्फारः स्याद्धनुषो नादो
मौर्वीनिनदष्टंकारः स्यात् ॥
समरेषु पराक्रम्य शूराणां हर्षजे ध्वनौ ।
पु(बु)क्कारः सिंहनादः स्यात्क्ष्वेडा क्ष्वेडितमन्तिमे ॥ ६१ ॥
मर्द्दलशब्दो गुन्दल उक्तः
मक्काणस्तु मकद(ण) उदितः ।
संकाणःॐसंकणयुक्तो
वीणाशब्देऽन्येऽपि तथेह ॥ ६२ ॥

---

1568 A सीत्कार १
1570 A मणितं २
1572 A °रुत१म°
1575 A थिञ्ञा २; °तम२लिजे
1576 A °विरुते २
1578 A पर्दनं २; फर्दनं १
1579 A कुन्थितम् २
1580 A क्षीजनं १; दर्दुरो १
1581 A रवो १ हंभर्रंभे २
1582 A रेषण२मेप
1583 A भपणे २
1587 A क्ष्वेडित ४
1588 A गुंदल १

क्वणः क्वाणो निक्वणश्च निक्वाणः क्वणनं तथा ।
वीणान्यवाद्यजे शब्दे प्रतिश्रुत्स्त्री प्रतिध्वनिः ।
समन्ततस्तु संरावे क्लीबे सांराविणं भवेत् ।
कोलाहलः कलकलोऽत्र च डिम्बमस्त्री
भेरी[47a]सहस्रशतके पटहायुते च ।
अभ्याहते युगपदारव एष कोणा-
घातः पुमान्विशिखपक्षरवस्तिसूत्कः (!) ॥ १६४ ॥
स्पार्शनः स्पर्शनः स्पर्शस्त्वव्ययः स चतुर्विधः ।
उष्णः शीतः कठोरश्च मृदुस्तद्वत्त्वमी त्रिषु ॥ १६५ ॥
क्रूरः खरः कठोरः कर्कशमस्त्री कठो जरठः ।
कक्खट-खक्खट-परुषा निष्ठुर-कठिनौ च कर्करोऽप्यत्र ॥ १६६ ॥
मृदु मृदुलं सुकुमारं कोमल-सोमाल-पेलवान्याहुः ।
म्रदिमा पुंसि मृदुत्वं मार्दवमन्त्ये स्त्रियां तु मृदुता स्यात् ॥ १६७ ॥
स्याद्विकाशो व्यजस्तालवृन्तं व्यजनमाम्बरम् ।
आलवर्तं तज्जलार्द्रं जलार्द्रा सा तु वारिमुक् ॥ १६८ ॥
ऊर्ध्वाधो मत उत्क्षेपो विस्तृतो वीजने ततः ॥ १६९ ॥
धुवित्रं च धवित्रं च व्यजनं मृगचर्मणः ।
मयूरपिच्छजं बार्हं व्यजने वीजनं न ना ॥ १७० ॥

---

1592 A क्वणनं ५; B निःक्वणश्च निक्वणः for निक्वणश्च निक्वाणः

1593 A प्रतिध्वानः २ For lines 1593–8 B subst.:

प्रक्वाणः प्रक्वणो वीणाभवः संक्वाणसंक्वणौ ॥ १५४ ॥
भेरीजन्मा दर्दुरोसौ गुंदलस्तु मृदङ्गजः ।
भेरीशतसहस्राणि ढक्काशतशतानि च ॥ १५५ ॥
युगपद्यत्र हन्यन्ते कोणाघातः स उच्यते ।
समंत(त)स्तु संरावे क्लीबे सांराविणं भवेत् ॥१५६॥ (=line 1594)
हंभारंभाश्च धेनूनां विरथां वाशितं रुतम् ।
कूजितं च विहंगानां पैकस्तु स्त्री मुहुः मुहुः ॥ १५७ ॥
अलिनां मिथुने गुञ्जा गूञ्जितं स्यात्तु गुञ्जनम् ।
रवो भेको वृक्षोत्थस्तु रेषा रेषणमित्यपि ॥ १५८ ॥
घुरणं भा (भ)षणं श्वोत्थः क्रंदनं वनितं रणः ।
घुक्षितः कर्दनं गुपः पुनः दार्धनवर्दनं ॥ १५९ ॥
भूषनानां शिंजितं च रणितं भणितं रवैः ।
मर्मरः शुष्कपर्णादेः क्ष्वीजनं वैणवो ध्वनिः ॥ १६० ॥
प्रतिशब्दस्त्वनुस्वानः प्रतिश्रुत्स्त्री प्रतिश्रुतिः ।

1594 A सारावियं १

1599 A त्वव्ययः ४; B त्वाचः for त्वव्ययः

1600 A उष्णः १ शीतः १ कठोर १ श्च मृदु १

1601 A खरः १; B दढो for कठो

1602 B जरठः for ऽप्यत्र

1603 A पेलवा ६. For lines 1603–4, B subst.:

मृदुलः सुकुमारः स्यात्सोमालः कोमलो मृदुः ।

1604 A मृदुता ४

1605 A व्यजन ४

1606 A °वर्तं १; जलार्द्रा १

1607 A विस्तृतो १; B विजने for वी°

1608 A धवित्रं २

1609 A बार्हं १

गन्धस्तु स्यान्नासावन्धुरथायं मनोहरा(रो?)जगतः ।
समर्दस्तु परिमलः स वकुलसुमनः[47b]समान इत्यन्ये ॥ १७१ ॥

गच्छति दूरं किल यो गन्धः
स समाकर्षी नरि निर्हारी ।
आमोदः स्यादतिनिर्हारी
कस्तूरीवत्किल यो गन्धः ॥ १७२ ॥

कर्पूरस्य समानः स्यादामोदी मुखवासनः ।
इष्टगन्धः सुगन्धिः स्यात्सुरभिर्घ्राणतर्पणः ॥ १७३ ॥
दुर्गन्धः पूतिगन्धिः स्यात्पूतिरप्यत्र संमतः ।
आमगन्धि भवेद्विस्रं दन्तोष्ठ्याद्यपि संमतम् ॥ १७४ ॥
गन्धेनोद्गतमुद्गन्धि त्रये सुरभिगन्ध्यपि ।
उपमाने पद्मगन्धि स्तोकार्थे घृतगन्धि च ॥ १७५ ॥
सौगन्ध्यं सौरभ्यं सौरभमपि तस्य भावेऽन्त्ये ।
गन्धद्रव्यक्रेतरि गान्धिक-सौगन्धिकौ त्रितये ॥ १७६ ॥
उशीरिको नलदिकस्तद्वत्किसरिको मतः ।
तत्क्रेता स्त्री तथा चेदुशीरिक्यादिका हि सा ॥ १७७ ॥

॥ इति धीवर्गः ॥

नाट्यं तौर्यत्रिकं तच्च गीतवादित्रनर्तनैः ।
संगीतं प्रेक्षणीयं तच्छास्त्रोक्तं नाट्यधर्मिका(कैः?) ॥ १ ॥
गीतिर्गीतं गानं गेयं गान्धर्वमप्यसिन् ।
अप्रस्थिततन्त्रीकं गेयपदं शुष्क[48a]गानं यत् ॥ २ ॥

---

1610 A नासाबन्धु २–For lines 1610–6, B subst.:
गन्धो जनमनोहारी निर्हारी घ्राणतर्पणः ॥ १६६ ॥
समाकर्षी च सुरभिः पुनः स्याचम्पकोपमः ।
कस्तूरीकावदामोदः सोऽतिदूरप्रसत्वरः ॥ १६७ ॥
कर्पूरवीटिकातुल्य आमोदी मुखवासनः ।
रतोपमर्दविकसद्देहसंगादिसौरभः ॥ १६८ ॥
भवेत्परिमलः प्रोक्तो बकुलाभः स केश्वन ।
1611 A परिमलः १
1613 A निर्हारि २
1614 A आमोद १
1617 A °तर्पणः ४. B एते सुरभिपुनद्दति for the latter half.
1618 A पूति ३
1619 A °द्यपि १
1620 A सद्गंधि १; °गंध्य२पि. B तथा for त्रये
1621 A पद्मगंधि १
1623 A °गांधिकौ २
1624 A नलदिक १; किसरिको १; B केस° for किस°
1625 A °दिका १
इति धीवर्गः
1626 A °त्रिकं २
1627 A °णीयं १
1628 A गीती गातगांपनं; गांधर्वं ५
1629 A गेयपदं १

प्राकृतसंस्कृतयुक्तं कामाद्युत्तापनैर्गीतम् ।
स्थितपाठ्यं तदवाद्यं विज्ञैरासीननामकं गदितम् ॥ ३ ॥
स्यात्पुष्पगण्डिका स्त्री स्त्रीपुंसव्यत्ययाद्भुतं गानम् ।
प्रच्छन्दस्त्वपराधे पत्युः सासूयमङ्गनागीतिः ॥ ४ ॥
अष्टनिकेतः प्राकृतवाण्या व्यक्तं गायति वीणायुक्तः ।
यत्तत्सैन्धवमुदितं रसवद्भावसमेतं चोत्तमसंज्ञम् ॥ ६ ॥
रसवत्पदसंदर्भश्लोकबन्धं सहावकम् ।
विलसान्वितगीतार्थमुक्तप्रत्युक्त उच्यते ॥ ७ ॥
त्रिगूढकं तु तद्भवेद्भ्रकुंसगीतिमञ्जुलं
द्विगूढमेतदीरितं चतुःस्वरैः पदैर्युतम् ॥ ८ ॥
पारापती स्त्रियां गोधुगीतिर्गीतरि गाथकः ।
कर्णाटो गायनो गेष्णुर्गान्धर्वो गातुरित्यपि ॥ ९ ॥
हारिकण्ठस्त्रिपु भवेत्स्वरो यस्य मनोहरः ।
वीणाकण्ठोत्थिताः सप्त स्वराः षड्जादयो नरि ।
षड्जो मयूरशब्दाभ ऋषभो वृषशब्दवत् ॥ १० ॥
गान्धारोऽजाविशब्दाभो मध्यमः क्रौञ्चशब्दवत् ।
पञ्चमः पिकशब्दाभो धैवतोऽश्वध्व[48b]निप्रभः ।
निषादो निषदोऽपि स्याद्गजशब्दितसंनिभः ।
कलः स मधुराव्यक्तेस्त्रिपु सूक्ष्मस्तु काकलिः ॥ ११ ॥
काकली च स्त्रियौ मंज्रो(द्रो?) गम्भीरोऽसावुरोभवः ।
उच्चैस्वरः स तारः स्याच्छिरोभूर्द्वाविमौ त्रिपु ॥ १२ ॥
ग्रामः स्यात्स्वरसंदोह आरोहस्त्ववरोहणम् ।

---

1631 A °पाठ्यं १; °रासीन १
1632 A °गंडिका १
1633 A प्रछंद १
1635 A धैर्त्तं १
1637 A °प्रत्युक्त १
1638 A त्रिगूडकं १
1639 A द्विगूढ १
1640 A पारापती १
1642 A °कंठा १. –For line 1642, B subst.:
हारिकण्ठो मनोहारी (रि?) स्वरोगानष्टनेपथ्वर ।
1643 A स्वराः १
1644 A षड्जो १
1645 A गोधारो १
1646 A पंचमः १; धैवतो १
1648 A फलः १.–For lines 1648-50, B subst.:
मन्द्रो मद उरोजन्मा मध्यमः कण्ठजः स्वरः ।
तारः शिरोभूस्तुर्यः कलस्तु मधुरास्फुटः ॥ १२ ॥
त्रिष्वम्प(ष्वप्य?)थ कले सूक्ष्मे काकलिः काकली स्त्रियौ ।
1651 A ग्रामः १.–[1])B [अ]थारोहश्चावरोहणं

क्रमात्स्वराणां सप्तानां मूर्छना प्रोच्यते बुधैः ॥ १३ ॥
तानः स्यान्मूर्छनाभेदे रागः कामगुणः समौ ।
रागाल्यपनमालप्तिर्गमकः स्वरकम्पनम् ॥ १४ ॥
प्लुतमाना प्लाविता स्यान्नमितो नमितस्वरः ।
ध्रुवाद्यो द्वयो गीति भपः(?)पाटो वाद्योद्भवो ध्वनिः ॥ १५ ॥
एकतालो गीतवाद्यनृत्यसाम्यसमन्वितः ।
वाद्यं वादित्रमातोद्यं कटम्बश्च स्वरध्वजः ॥ १३ ॥
दर्दरीकं तुरत्यूर्यः(?)धूमलाम्ये(?)स्त्रियां तथा ।

वीणादिकं ततमथो मुरजप्रकार-
मानद्धमेतदवनद्धमपि प्रदिष्टम् ।
वंश्यादिकं तु सुपिरं सुशिरं च कांस्य-
तालादिकं घनमितीह चतुर्विधं तत् ॥ १४ ॥
वीणा भवेद्घोषवती च वल्लकी
स्त्रियां विपञ्ची किल कं[49a]ठकूणिका ।
सा सप्ततन्त्रीः परिवादिनी तथा
नालम्बिका सा गदिता पिनाकिनः ॥ १५ ॥

सरस्वत्याः कच्छपी सा महती नारदस्य च ।
प्रभावती गणानां स्यात्तुम्बरोस्तु कलावती ॥ १६ ॥
विश्वावसोः स्याद्बृहती सूत्रवीणा तु लावुकी ।
चाण्डालानां तु कण्डोलवीणा चाण्डालिका च सा ॥ १७ ॥
ततभेदाः कैंनदी(री) स्याच्चित्रार्थालापिनीमुखाः ।

---

1652 A मूर्छना १–For lines 1652–9, B subst.:
क्रमात्तेषां मूर्छनाथ तानः स्यान्मूर्छनाभिदि ।
रागः कामगुणस्तुल्योपौडवःपञ्चभिः स्वरैः ॥ १४ ॥
षड्भिरेतैः षाडवोथ गमकः स्वरकम्पनम् ।
निषादः काकलीसंज्ञो द्विःश्रुत्युत्कर्षणाद्भवेत् ।
प्लुतमाना प्लाविता स्यान्नमितोन्नमितस्वरा ॥ १५ ॥
गीतिभेदो ध्रुवा द्वन्द्वे पाटो वाद्योद्भवो ध्वनिः ।
वाद्यं वादित्रमातोद्यं दर्दरीकं च तरवत् ॥ १६ ॥
कदम्बस्तूर्यमठी स्यात्तथैव मदनध्वजः ॥ १७ ॥
1653 A तानः १; °गुणः २
1654 A °मालप्ति १ गमक- १
1655 a) A corrupt. –b) A नमितो १
1656 A ध्रुवाद्यो १; पाद्ये १
1657 A °तालो १
1660 A तत १
1661 A °दवनद्ध १
1662 A सुशिरं २
1663 A घन १
1665 A °कूणिका ५
1667 A नालंबिका १
1668 A कच्छपी १; महती १
1669 A प्रभावती १
1670 A °द्बृहती १; लावकी १
1671 A °लिका१.–For lines 1671–2, B subst.:
चाण्डालानां काण्डवीणा धुवीणा किंनरी तथा ।
कण्ठोलवीणा कण्ठोलवीणा चाण्डालिकी च सा ।
1672 A कैंनरी १

वीणायास्तु गुणस्तन्त्रीः स्त्रियां कोलम्बकस्तु ना ॥ १८ ॥
कायो स्यात् शारिका कोणोऽस्त्रियां वीणादिवादनम् ।
न स्त्री प्रवालो दण्डोऽस्या उपनाहो निबन्धनम् ॥ १९ ॥
प्रसेवकः स्यात्ककुभो मूले वंशशलाकिका ।
कलिका कूणिका चाथ मृदङ्गो मुरजः समौ ॥ २० ॥
हरीतक्याकृतिः सोऽङ्क्यो यवमध्यस्तथोर्द्धकः ।
अर्धकाभोगिकालिङ्गया आनकः पटहोऽस्त्रियौ ॥ २१ ॥
ढक्का कुहकगुञ्जा च यशःपटह इत्यपि ।
क्रोशध्वनिश्च निःस्वानो लम्पापटह इत्यपि ।
प्रतिप[49b]त्पटहः क्रोकाना(?) लोटगुञ्जा तु सोल्पकः ।
आनको दुन्दुभिः पुंसि भेरिर्भम्भाश्च्ढावुभौ ॥ २३ ॥
काहला काहलं शब्दमाला दीर्घरवाथ सा ।
क्रीडनार्थं पत्रकृता बालायैश्चण्डकाहला ।
पिच्छला स्यादथ द्वंद्वे हुडुक्कस्तालमर्द्दलः ॥ २५ ॥
सूत्रकोणो डमरुको मड्डुः पणीय(?)वाद्यकम् ।
डिण्डिमः क्षुद्रपटहो गोमुखो गोमुखाकृतिः ॥ २६ ॥
पणवो मध्यतन्त्रीको झर्झरोऽस्त्री च झल्लरी ।

1673 A तंत्रीः१; कोलंबक१. B वपुः for तुना
1674 A °वादनं३. B खुंखुणी for कायो स्यात् and द्वयोः for स्त्रियां
1675 A प्रवालो १
1676 B [अ]श्री for स्यात्
1677 A कूणिका२· B कालिका for कलिका
1678 A सोक्यो १
1679 A भोगिका ३; पटहो २
1680 For lines 1680–95, B subst.:
स्याद्यशःपटहो ढक्का भंमा स्त्री जयमर्द्दलः ।
क्रोशध्वनिः क्रोशताळो निःसाणो दुन्दुभिर्नरि ॥२६॥
प्रतिपत्पटहो लंपापटहो डिंडिमश्च सः ।
गुंजा स्यादल्पपटहो डक्का कुहकगुंजिका ॥ २७ ॥
सूत्रकोणो डमरुको मड्ड(ड्ड)स्तु समद्स्वरः ।
दर्दुरः कलशीवक्त्रः समौ पणवकिंकिणी ॥ २८ ॥
गोमुखो मध्यतंत्रीके हुड्डकस्तु स्त्रियामपि ।
स्यात्ताळमर्द्दळोऽथ स्याद्भेरी भंमा च भेरिवत् ॥२९॥
आनको दुंदुभिर्ना स्याच्चण्डकोलाहला पुनः ।
कहाला शब्दमाळा च काहळा न नृलिङ्गभाक् ॥३०॥
बाळ(क)क्रीडनार्था सा पिछला पत्रकाहळा ।
शृङ्गवाद्यं शृङ्गमुखं झर्झरोऽस्त्री च झल्लरी ॥ ३१ ॥
पाविका स्यान्मधुकरी वंशी च मुरली तथा ।
मुखघंटा घुळघुटी वाद्ये तु स्वप्नबोधके ॥ ३२ ॥
द्रगडो द्रकडस्तूर्यगंडश्चेति समार्थकाः ।
देवपूजनवाद्ये तु घूमळोन्नी वळिर्द्वयोः ॥ ३३ ॥
महाजित्तूर्ये त्वश्वीकौ पटहाडम्बरावुभौ ।
रणोद्यमे त्वर्द्दतूरो मंगळे प्रियवादिका ॥ ३४ ॥
क्षुल्लकं मृतयात्रायां वाद्यभेदास्तु तूणवः ।
लुंचिका टहरी चेष्या तिमिरा किरिकिंचिका ॥ ३५ ॥
कलापूराद्योऽन्ये च वाद्यवर्गं तु पुष्करम् ।
निपूणगायन्वह्नस्या स भवेद्रुपवीणयन् ।
1683 A भंभा ३
1686 A पिच्छला२; °मर्द्दलः २
1687 A डमरुको२; °वाद्यकं २
1688 A °पटहो २
1689 A °तंत्रीको1; झल्री २

मुखघण्टा कुलकुटी किङ्किणी क्षुद्रघण्टिका ॥
किङ्किणीका प्रतिसरा घर्घरीका तु पादगा ॥ २७ ॥
पाठिका स्यान्मधुकरी पाठो वंशश्च कीर्त्यते ।
द्रगण(ड)स्तूर्यगण्डः स्याद्वंशी तु मुरली स्त्रियौ ।
स्यात्पुष्करं वाद्यमुखं टट्टरी पटहध्वनि ।
वीणया तूपगायेद्यत्स्विवसावुपवीणयन् ।
वीणावादो वैणिकः स्यात्नाडिध्म(?)स्ताडवादकः ॥ २८ ॥
वेणुध्मः स्याद्वैणविको भैरिको भेरिवादकः ।
मार्दङ्गिको मौरजिकस्तद्वत्पाणविकादयः ॥ २९ ॥
पाणिधमः पाणिघः स्या[50a]त्पाणिवादस्समार्थकः ।
मुष्टिंधमो मुष्टिवादोऽथो माड्डुकिक-माड्डुकौ ॥ ३० ॥
स्याज्झाझरो झार्झरिकस्त्रिषु स्युर्वैणिकादयः ।
कालस्य क्रियया मानं तालोऽथ करनिर्मितः ॥ ३१ ॥
करताली करर्द्धिः स्त्री तालमध्ये तु कुक्कुटी ।
स्त्रियां गुणनिका च स्याचाण्डवं तु न योपिति ।
नृत्यं नृत्तं नर्तनं च नाट्यं नटनं लास्ययुक् ॥ ३२ ॥
नारीणां मण्डली नृत्यं क्लीबं हल्लीस(श?)कं मतम् ।
ग्रामीणतोषकं नृत्यं तरामञ्जी भवेत्स्त्रियाम् ॥ ३३ ॥
पानगोष्ठ्यां तूत्तालं रणे वीरजयन्तिका ।
नर्तको लासको लिप्वो लप्वोऽपि स्यान्नृतूरपि ॥ ३४ ॥
शैलावसर एकोऽसौ नर्तकी लासिकाङ्गना ।

1690 A °कुटी २
1691 A प्रतिसरा४; तु १
1693 A °गण्डः २
1694 A °मुरी ३
1696 A वैणिकः२; °वादकः २.–¹) B ताडपः for नाडिध्मः
1697 A °विको२; °वादकः२. –¹) B भैरिको
1698 A मौरजिक२; °विका १ दयः
1699 A °वाद ३
1700 A °वादो२; °माड्डुकौ २
1701 A °रिक २
1702 A तालो१. B घयाम्मुष्टिकः for तथ कर°
1703 A करर्द्धि२; कुक्कुटीः १. –For lines 1703–8, B subst.:
साम्यं लयो द्रुतं त्वोघस्तत्त्विह विलम्बितम् ॥ ४० ॥
मध्यं घनं धानुगतमेकतालः समत्वभाक् ।
स्यात्कुक्कुटी गुणनिका करर्द्धिः करतालिका ॥ ४१ ॥
नाट्यं तु नटनं नृत्यं नृत्तं लास्यं तु नर्तनम् ।
तोटवीऽस्त्री तरामञ्जी पुनर्ग्रामिगनर्तनम् ॥ ४२ ॥
मण्डलेन तु यन्नृत्तं स्त्रीणां हल्लीसकोऽस्त्रियाम् ।
स्थानं नाट्यस्य रङ्गः स्यात्पूर्वरङ्ग उपक्रमः ॥ ४३ ॥
1704 A गुणनिका १
1705 A लास्ययुक् १
1706 A °सकं १
1708 A °तालं१; °न्तिका १
1709 A °तृत् ५
1710 A °सिका २

स्त्रीनर्तकः प्राकपिकोऽथासौ स्त्रीवेषधारकः ॥ ३५ ॥
भ्रकुंसश्च भ्रुकुंसश्च भ्र(भ्रू)कुंसश्च भ्रूकुंसवत् ।
सूत्रधारः सूचकः स्यात्स्थापकोऽप्ययमुच्यते ॥ ३६ ॥
पारिपार्श्विक उद्दिष्टः सूत्रधारस्य पार्श्वगः ।
नन्दी[50b]नान्दीकरो नान्दिवादी नान्दीकरी वधूः ॥ ३७ ॥
अक्षी नटः कृशाश्वी शैलाली सर्ववेशि-रसिकौ च ।
भरतोघः(?)शैलूषो रङ्गाजीवोऽङ्गनाजीवी ॥ ३८ ॥
धर्मीसुतो भौमिकः स्याद्भ्र्*तोऽथ महानटः ।
कटप्रूः पुंस्यथ स्तोत्रकारे चारण-वर्णकौ ॥ ३९ ॥
कुशीलवोऽथ वेश्यानामाचार्यः पीठमर्दकः ।
नर्मदः केलिसचिवः पीठमर्दोऽपि संमतः ।
　वासन्तिकः केलिकलो विदूषको
　　वैहासिकः प्रतिबुधः प्रहासः ।
　भवेद्विटः पल्लविकोऽपि पिङ्ग-
　　कोष्ठ(?)क्षुद्रा नटी तत्र च कारिका स्यात् ॥ ४० ॥
नेपथ्यं रङ्गभूमिः स्यादानर्तो वेषधारणम् ।
भूमिका वर्णका द्वंद्वे पात्राण्यत्राधिकारिणः ॥ ४१ ॥
　नाट्योक्तिषु स्याद्बहुधा प्रकाशं
　　श्रव्यं वचोऽथ स्वगतं तदन्यत् ।
　रहस्यमाखे परिवृत्य मन्यां
　　यदुच्यते स्यादपवारितं तत् ॥ ४२ ॥

---

1711 A प्राकपिको २
1713 A स्थापको ३. B बीजदर्शकः for ऽप्यय°
1715 A नंदा for नन्दी; °वादि २
1717 B बहुरूपः for भरतोघः
1718 A °भ्र्*तो ११.—For lines 1718-27, B subst.:
रङ्गावतारको धर्मिसुतो भरतपुत्रकः ।
भरतो भौमिकश्चाथ कटप्रूः स्यान्महानटः ।
कुशीलवः स्तोत्रकारश्चारणो वर्णकश्च सः ॥ ४९ ॥
वेश्याचार्यः पीठमर्दी केल्यमात्यस्तु नर्मदः ।
वासन्तिकः केलिकिलः प्रहासी च विदूषकः ॥ ५० ॥
वैहासिकः प्रीतिदोऽथ विटोऽस्त्री पिङ्गपल्लवौ ।
भण्डस्तु स्यादेकलटो हंभूः कथिक इत्यपि ॥ ५२ ॥
क्षुद्रा नटी कारिका च पात्राण्यत्राधिकारिणः ।
नेपथ्यं रङ्गभूमिः स्याद्भूमिका वर्णका द्वयोः ॥ ५३ ॥
1719 A कटप्रूः २
1720 A कुशीलवो ४
1721 A °मदो ३
1723 A प्रहासः ६
1725 A कोष्ठ ३
1727 A पात्राण्य १
1728 A प्रकाशं १
1729 A स्वगतं १
1731 A °रितं १

मध्ये कथापवार्यान्यांस्त्रिपताकेन पाणिना ।
क्लीबे जनान्तिकं तत्स्यान्निःशलाकोऽस्त्रियामपि ॥ ४३ ॥
तत्रभ[51a]वत्तत्र भवन्भगवन्नेवं च संबोध्याः ।
तत्तन्नाम्नश्च परैः पादाद्यैर्यजनीया ये ॥ ४४ ॥
राजा भट्टारको देवः स स्वामी मन्त्रिभाषिते ।
अधमोक्तौ स भट्टः स्यादथ वैहासिकोक्तिषु ॥ ४५ ॥
संबोधनं वयस्येति नृपे भावेति पण्डिते ।
देवी कृताभिषेकान्या भट्टिनी भोगिनी च सा ॥ ४६ ॥
युवराजो राजपुत्रः कुमारो भर्तृदारकः ।
राज्ञः श्यालो राष्ट्रियः स्यात्तत्सुता भर्तृदारिका ॥ ४७ ॥
सौम्यो भद्रमुखश्च स्या(स्या ?)दधमोक्तौ नृपात्मजः ॥ ४७ ॥
विदूषकोक्तौ राज्ञी(?)च भवति गदितोऽस्त्रियाम् ।
द्विजभार्या भट्टिनी स्यादार्या गोस्वामिनी च सा ।
आर्यपुत्रस्तथार्यः स्यात्स्त्रीणामामन्त्रणे पतिः ॥ ४५ ॥
आवुकः स्यात्पितावुत्तो भावुको भगिनीपतिः ।
ज्यायानार्यः प्रसूरम्बाथान्तिका चान्तिका स्वसा ॥ ५० ॥
बाला वासूः स्त्रियां शिष्टे त्वार्य-मारिष-मार्षकाः ।
अज्जुकानुचरैर्वेश्या वाच्या राज्ञानुनामतः ॥ ५१ ॥
सेनान्तं नाम[51b]वेश्यानां दत्तान्तं वणिजामिदम् ।
हण्डे हञ्जे अव्यये द्वे नीचां चेटीं प्रति क्रमात् ॥ ५२ ॥
वृद्धस्तातोऽथ वत्सः स्यात्पुत्रकश्च कनीयसि ।
आयुष्मन्निति संबोध्यो रथी सूतेन सर्वदा ॥ ५३ ॥

---

1732 B कथामध्येप°
1733 For line 1733, B reads:
अन्योन्यामंत्रणं यत्स्याज्जनान्ते तज्जनांतिकम् ।
1735 —²) B पदाद्यैः पूज°
1736 A देवः ३
1737 A भट्टः १
1738 A संबोधने
1739 A देवी १. –After line 1739, B adds:
भवतीति च संभाष्या राजपत्नी विदूषकैः ।
1740 °दारकः ४. B च कुमारकः for भर्तृदा°
1741 A राष्ट्रियः १; °दारिकाः १.–B transp. lines 1741 and 1742
1743 B om. line 1743.
1744 A गोस्वामिनी ३
1746 A आवुके; भत्तुको २
1747 A °नार्यः १ प्रसूरम्बा १; चांतिका २
1748 A °मार्षकाः ४
1749 A अज्जुका १
1751 A हण्डे १
1752 A पुत्रक २

सखीसंबोधने तु स्याद्धला स्त्री च हलाव्ययम् ।
अवध्य इति फूत्कृत्य शब्देऽब्रह्मण्यमन्तिमे ॥ ५४ ॥
सुगृहीतं क्लीबमामेत्यव्ययं स्वीकृतौ भवेत् ।
असूचितप्रवेशो स्यादपटीक्षेप इत्यपि ॥ ५५ ॥

दृश्यं तु काव्यं किल रूपकं स्यान्
नाकेतर(?)स्तत्तु दशप्रकारम् ।
अष्टादशोक्तान्युपरूपकाणि
स्युः प्रायशो नाटकलक्षणानि ॥ ५६ ॥

दिव्यादिव्यनृपर्षिनायकवरप्रख्याततृत्तान्वितं
पञ्चाद्यादशनिर्मिताङ्करचनं शृङ्गारवीराधिकम् ।
निष्ठोक्ताद्भुतपञ्चसंधिसरसं गोपुच्छतुल्याङ्ककं
भूयो भूतिगुणौचितीप्रचुरितं दृश्योत्तमं नाटकम् ॥ ५७ ॥

एतदेव यदा सर्वैः पताकास्थानकैर्युतम् ।
अङ्कैश्च दशभिर्भव्यं महानाटकमुच्यते ॥ ५८ ॥

धीरप्रशान्तस्तु[52a]कृतादिमतिद्विजाति-
सन्मन्त्रवाणिजनवीनकथाविधानम् ।
शृङ्गारमुख्यमिह नाटकलक्ष्मशालि
तद्वर्णितं प्रकरणं शरणं रसानाम् ॥ ५८ ॥

आकाशोक्त्या वर्णितामत्रणोक्ति-
प्रत्युक्त्याढ्यो भारतीवृत्तिशाली ।
एकाङ्कः स्याद्वीरशृङ्गारभाजा
भाणो युक्तो नायकेनैककेन ॥ ५९ ॥

नेता धीरोद्धतक्ष्मापतिरपि दिविजो हास्यशृङ्गारशान्ता
यत्र स्युर्नाङ्गिनोऽमी सुबहुतरनरः स्वल्पनारीजनश्च ।
एकेनाङ्केन युक्तो विरहितसुदतीहेतुयुद्धप्रयोगो
व्यायोगोऽयं विमर्शं न कलयति तथा कैशिकीं गर्भसंधिम् ॥६०॥

वीरो यत्र प्रधानं सुरदितिजगतं वृत्तमङ्कत्रयं स्यात्
आद्येऽङ्के द्वौ च संधी पृथगितरकयोर्निर्विमर्शः स एकः ।

---

1754 A स्यादला ।
1756 A °मामेत्य ।
1767 A °नाटक ।
1771 A प्रदरणं ।
1775 A युक्तो १. B न स्त्री for युक्तो
1779 A व्यायोगो ।

नेतारो द्वादश स्युर्विविधनिजफला नात्र बिन्दुप्रवेशो
कैशिक्यो नोद्यतार्थो भवति समवकाराह्वयोऽनल्परूपः ॥ ६१ ॥

इन्द्रजालरणरोषमायिकोद्भ्रान्तचेष्टितबहूपरागकः ।
रौद्रमुख्यचतुरङ्कसं[52b]युतः कैशिकीप्रभृतिवर्जितो डिमः ॥ ६२ ॥

एकोऽङ्कश्चतुरङ्कको भवति वा धीरोद्धतो नायको
मुख्यः स्यात्करुणो रसः क्वचिदहो शृङ्गार आभासतः ।
यस्मिन्निर्वहणं मुखं प्रतिमुखं मिश्रं च वृत्तं भवेत्
स्यादीहामृग एष केऽपि विबुधा उत्सृष्टिकाङ्कं विदुः ॥ ६३ ।

आकाशभाषितार्थैरुक्तिप्रत्युक्तिमिश्चित्रा ।
वीथ्येकनायकाङ्का साङ्गा शृङ्गारभूयिष्ठा ॥ ६४ ॥

यद्भाणवद्रचितसंधि तदङ्गशोभं
हास्यप्रधानमपि लास्यविराजदङ्गम् ।
विष्कम्भकादिरहितं कविकल्पवृन्दं
तत्प्रोच्यते प्रहसनं बहुनायकं च ॥ ६५ ॥

नाटिका तु कविक्लृप्तचरित्रा सानुरागनृपवंश्यनायिका ।
किं च धीरललितोत्तमनेत्री ज्यायसी वशगतद्वययोगा ॥ ६६ ॥

सप्ताष्टनवपञ्चाङ्कं दिव्यमानुषसंश्रयम् ।
त्रोटकं भूरिशृङ्गारं प्रत्यङ्कं सविदूषकम् ॥ ६७ ॥

शृङ्गारहासबहुला किल कैशिकीयुग्
गर्भावमर्शरहिताप्यनुदात्तवृत्ता ।
[53a]यस्यां नराश्च दश वा नव वा स्त्रियः स्युः
षट् पञ्च वा विलसदङ्कवरा च गोष्ठी ॥ ६८ ॥

नाटिकालक्षणोपेतं प्राकृतप्रायमद्भुतम् ।
निर्विष्कम्भं जवनिकानामाङ्कं सट्टकं भवेत् ॥ ६९ ॥

एकाङ्कके हास्यरसप्रधाने
यस्मिन्नुदात्तः खलु नायकः स्यात् ।

---

1783 A °कारा १
1785 A डिमः १
1789 A °ष्टिकाङ्कं २
1791 A वीथ्ये १
1794 B °रचितं कविकल्पवृन्दं
1795 A प्रहसनं १
1796 A नाटिका १
1799 A त्रोटकं १
1800 B °हास्य° for °हास°
1805 A सट्टकं १

तिस्रः पञ्च तथा च षड्दशवरा नाडीर्दधानैः क्रमाद्
वेदाङ्कैः सहिता विटादिललिता सद्भारती कैशिकी ।
गर्भं नैव दधाति नागरयुता न्यूनेन नेत्रा युता
शृङ्गारप्रचुरैर्युताखिलरसैर्दुर्मल्लिका सा मता ॥ ८१ ॥
नाटिकैव प्रकरणी सार्थवाहादिनायका ।
कैशिकीभारतीवृत्तियुतैकाङ्का सु[54a]नायका ॥ ८२ ॥
भाणिका श्लक्ष्णनेपथ्यतुल्यवंशोत्थनायिका ।
हल्लीशः पुनरेकाङ्कः सप्तादिस्त्रीजनैर्युतः ॥ ८३ ॥
उदात्तनायकः संधिद्वययुक्कैशिकीयुतः ।
बहुतानलयस्थानं शृङ्गारैकप्रधानकः ॥ ८४ ॥
अष्टौ द्वादश षोडश क्वचन वा चत्वारि वा प्रायशो
बिभ्राणा सुपदानि चन्द्रकमलक्षेमाभिधाभाञ्जि या ।
विप्रौघक्षतिकृद्विवक्षितकथासंसूचिकाशीर्नति-
माया स्यादिह पूर्वरङ्ग उदितो नान्दी च नान्दिः स्त्रियाम् ॥ ८५ ॥
श्लेषादिभिः प्रस्तुतार्थसूचनं मुखमुच्यते ।
प्रस्तुतेष्वभिनेयेषु प्रशंसा स्यात्प्ररोचना ॥ ८६ ॥
स्यादत्र सूत्रधारादेः संलापः प्रकृतोचितः ।
प्रस्तावना चामुखं च सा पुनः पञ्चधोदिता ॥ ८७ ॥
पदानि त्वगतार्थानि तदर्थगतये नराः ।
योजयन्ति पदैरन्यैः स उद्घात्यक उच्यते ॥ ८८ ॥
सूत्रधारस्य वाक्यं वा वाक्यार्थो वापि कारणम् ।
भवेत्पात्रप्रवेशस्य कथोद्घातः स उच्यते[54b] ॥ ८९ ॥
यदि प्रयोग एकस्मिन्प्रयोगोऽन्यः प्रयुज्यते ।
तेन पात्रप्रवेशश्चेत्प्रयोगातिशयो हि सः ॥ ९० ॥
कालप्रवृत्तिमाश्रित्य सूत्रधृग्यत्र वर्तयेत् ।
तदाश्रयस्य कार्यस्य प्रवेशः स प्रवर्तकः ॥ ९१ ॥

---

1837 A दुर्मल्लिका ?
1838 A प्रकरणी ?
1840 A माणिका ?
1841 A हल्लीशः ?
1847 B स्त्रियां संधिला for च नान्दिः स्त्रियाम्
1848 A मुख ?
1849 A प्रोचना ?
1850 A संजाप.(?)
1851 A चामुखं २
1853 A उद्घालक ?
1854 B omits lines 1854–5
1855 A कथोद्घातः ?
1859 A प्रवर्तकः ?

यत्रैकत्र समावेशात्कार्यमन्यत्प्रसाध्यते ।
प्रयोगे खलु तज्ज्ञेयं नाम्नावलगितं बुधैः ॥ ९२ ॥

आवर्षं व्यहतो निबद्धचरितः संलग्नबिन्दुः क्वचित्
नातिश्लोकयुतो रसादिबहुलश्चासन्नसन्नायकः ।
अन्ते निर्गतपात्रकश्चिचतुरैः पात्रैर्युतो बीजवान्
साक्षाद्युद्धवधादिभिर्विरहितः स्पष्टोक्तिरङ्को मतः ॥ ९३ ॥

अङ्कोदरप्रविष्टो यो रङ्गद्वारा मुखादिमान् ।
अङ्कोऽपरः स गर्भाङ्कः स बीजः फलवानपि ॥ ९४ ॥
वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः ।
संक्षिप्तार्थश्च विष्कम्भः स भवेदङ्कपूर्वगः ॥ ९५ ॥
मध्येन मध्यमाभ्यां वा पात्राभ्यां स प्रयोजितः ।
शुद्धः स्यात्स तु संकीर्णो नीचमध्यमकल्पितः ॥ ९६ ॥
अङ्कद्वयस्य मध्यस्थो विष्क[55a]म्भोदितलक्षणः ।
अनुदात्तोदितैर्नीचपात्रैर्युक्तः प्रवेशकः ॥ ९७ ॥
अन्तर्जवनिकासंस्थैः सूचनार्थस्य चूलिका ।
अङ्कान्ते सूचितः पात्रैस्तदङ्कस्याविभागतः ॥ ९८ ॥
यत्राङ्कोऽवतरत्येषोऽङ्कावतार इति स्मृतः ।
यत्र स्यादङ्क एकस्मिन्नङ्कानां सूचनाखिला ॥ ९९ ॥
बीजार्थस्यापनं तत्स्यात्तथाङ्कमुखमित्यपि ।
विष्कम्भप्रमुखाः पञ्च स्युर्थोपक्षेपकाभिधाः ॥ १०० ॥
यथार्थे चिन्तितेऽन्यस्मिंस्तल्लिङ्गोऽन्यः प्रयुज्यते ।
आगन्तुकेन भावेन पताका साभिधीयते ॥ १ ॥
वृत्तं वस्तु प्रसङ्गस्थं तन्नेतुः प्रकरी स्त्रियाम् ।
अपेक्षितं तु साध्यं तन्निष्पन्नं कार्यमुच्यते ॥ २ ॥
एकप्रयोजनो येन कथांशानामथान्तरे ।
प्रयोजनैर्भिन्नैर्योगः स संधिः परिकीर्तितः ॥ ३ ॥

1861 A °लगितं १
1867 A गर्भाङ्कः १
1869 A विष्कंभः १
1871 A शुद्धः १; संकीर्णो १
1873 A प्रवेशकः १
1874 A चूलिका १
1876 A °वतार १
1878 A °ङ्कमुख २
1881 A पताका १
1882 A प्रकरी १. B भवेद् for स्त्रियाम्
1883 A साध्यं १; कार्यं १
1885 A संधिः १

यत्र बीजसमुत्पत्तिर्नानार्थरससंभवा ।
प्रारम्भेण समायुक्ता मुखसंधिः स उच्यते ॥ ४ ॥
फलप्रधानोपायस्य मुखसंधिनिवेशिनः ।
लक्ष्यालक्ष्य इवोद्भेदो यत्र प्रतिमुखं मतम् ॥ ५ ॥
[55b]प्रागुद्भिन्नस्य यः किंचित्समुद्भेदो हि गर्भकः ।
यत्र मुख्यफलापाय उद्भिन्नो गर्भतोऽधिकः ॥ ६ ॥
शापाद्यैः सान्तरायः स्यात्स विमर्श इति स्मृतः ।
बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम् ॥ ७ ॥
ऐकार्थ्यमुपनीयन्ते निष्ठा निर्वहणं च तत् ।
समापनं च संहारोऽथोपक्षेपोऽर्थसंभवः ॥ ८ ॥
समुत्पन्नार्थबाहुल्यं भवेत्परिकरः पुमान् ।
परिन्यासोऽर्थनिष्कारो गुणाख्यानं विलोभनम् ॥ ९ ॥
या श्लक्ष्णनेपथ्यविशेषचित्रा
स्त्रीसंकुला प्रोज्ज्वलगीतनृत्या ।
शृङ्गारसारा प्रचुरोपचारा
स्यात्कैशिकी चारुविलासयुक्ता ॥ १० ॥
शौर्यदयार्जवयुक्ता बहुसत्त्वा स्तोकशृङ्गारा ।
हृतशोका धृतहर्षाद्भुतयुक्ता सात्वती वृत्तिः ॥ ११ ॥
वधबन्धादिनिबद्धा क्रोधोत्क्रान्तादिचेष्टिता या च ।
उद्धतवर्णनिबन्धा प्रचण्डवीरा मतारभटी ॥ १२ ॥
बन्धुरसंस्कृतयुक्ता मधुरसुधाधौ[त]वर्णार्थी ।
औचित्यचातुरीणां पात्रं सर्वत्र भारती वृत्तिः ॥ १३ ॥
संस्कृता सौर[56a]सेनी च पैशाची मागधी तथा ।
राक्षसी दैशिकी चेति भाषाभेदाः षडीरिताः ॥ १४ ॥
अङ्गहारोऽङ्गविक्षेपोऽङ्गाहारिस्तु स्त्रियां भवेत् ।
प्रसह्योर्ध्वीकृतः पादो दण्डपादोऽभिधीयते ॥ १५ ॥

1887 A मुखसंधिः १
1892 A विमर्षं १
1895 A संहारो ४; °क्षेपो १
1897 A °निष्कारो २; गुणख्यानं विलोभनं २
1898 B om. शेष
1901 A कैशिकी १
1903 A सात्वती १ वृत्तिः १
1905 A °रभटी १
1906 A °मुधा for °सुधा
1907 A भारती १
1908 A संस्कृता १ सौरसेनी २ च पैशाची ३ मागधी ४
1909 A राक्षसी ५ दैशिकी ६
1910 A °हारि १
1911 A दण्डपादो १

व्यञ्जकः स्यादभिनयो वाङ्निर्वृत्तः स वाचिकः ।
आङ्गिकस्त्वङ्गनिर्वृत्तः सत्त्वोत्थः सात्त्विको भवेत् ॥ १६ ॥
आरोप्यः पुनराहार्यो वाचिकाद्या विशेष्यगाः ।
प्रसारिताग्राः सहिता यस्याङ्गुल्यो भवन्ति हि ॥ १७ ॥
कुञ्चितश्च तथाङ्गुष्ठः स पताक इति स्मृतः ।
अयं तु त्रिपताकः स्याद्वक्रितानामिकाङ्गुलिः ॥ १८ ॥
पताकस्य यदाङ्गुष्ठो भवेदुच्चैः स्वदेशजः ।
अर्द्धचन्द्राकृतिर्यस्मादर्धचन्द्रः स कथ्यते ॥ १९ ॥
त्रिपताकस्य हस्तस्य मध्यमा दृष्टदेशगा ।
तर्जनी स्यात्तदा हस्तः कर्तरीमुख उच्यते ॥ २० ॥
तर्जन्यादिष्वङ्गुलीषु प्राच्याः प्राच्याः पराः पराः ।
दूरस्था वा मनाव(ग्व?)क्रा धनुर्वक्रा तु तर्जनी ॥ २१ ॥
तन्मूले कुञ्चिताङ्गुष्ठो यत्रारालः स उच्यते ।
तलमध्य[56b]स्थितानि स्युरङ्गुल्यग्राणि यत्र च ॥ २२ ॥
निःपीड्य तिष्ठत्यङ्गुष्ठो मध्यमा मुष्टिकाभिधः ।
अयमूर्ध्वीकृताङ्गुष्ठः शिखरो जायते करः ॥ २३ ॥
यदाङ्गुलाग्रलग्नाग्रा तर्जनी स कपित्थकः ।
यद्यनामाकनीयस्यावुत्क्षिप्ते कुटिलीकृते ॥ २४ ॥
विरली च कपित्थस्य स भवेत्कटकामुकः ।
यदा त्वरालहस्तस्य वक्रे तर्जन्यनामिके ॥ २५ ॥
शुकतुण्डस्तदा हस्तो जायते शुकतुण्डवत् ।
एवमन्येऽपि भेदाश्च ज्ञेयाः सूचीमुखादयः ॥ २६ ॥
विभावो रसहेतुः स्यादनुभावस्तु तद्भवः ॥ २७ ॥
रसोत्पत्तौ सहाया ये भावास्ते व्यभिचारिणः ।
काव्ये नाट्ये विभावाद्यैर्व्यक्तः स्थायी रसः स्मृतः ॥ २८ ॥

---

1912 A °नयो २; वाचिक १
1913 A आंगिक १
1914 A °राहार्यौ २
1916 A पताक १
1917 A त्रिपताक १
1918 B स्वदेशत
1919 A °र्दर्धचंद्रः १
1921 A °मुख १
1924 A यत्नाराल. १
1926 A मुष्ठिका १
1928 A कपित्यक १
1932 A °तुंड १ स्तदा, °तुंडवत् १
1933 A reads मुखादय ॥ २६ ॥ in marg.
1934 A विभावो १; °भाव १ स्तु
1936 B रसोत्पित्तौ

रत्यादयः स्थायिनः स्यू रसास्वादस्तु चर्वणा ।
शृङ्गोऽस्त्रीमन्मथोद्भेदो रतिस्त्वनुरतिः स्त्रियौ ॥ १८ ॥
अनुरागोऽपि रागोऽथ भावो मानसविक्रिया ।
ईषद्व्यक्ता रतिर्हावो हेला व्यक्ततरा रतिः ॥ १९ ॥
शृङ्गार-हास-करुणा भयानको रौद्र-वीर-बीभत्साः ।
शान्ता[57a]द्भुताविति रसा दशमो वात्सल्यनामापि ॥ २० ॥
शृङ्गारोऽस्त्री रसज्यायाञ्शुचिरुज्ज्वल इत्यपि ।
समौ संयोग-संभोगौ यूनोः पूर्णे मनोरथे ॥ २१ ॥
विप्रलम्भो विप्रयोगो वियोगो विरहस्तथा ।
हासो हसो हासिका स्त्री हसनं हास्यघर्घरे ॥ २२ ॥
सितं त्वदृष्टदन्तं तत्तु वक्रोष्ठिकं नरि ।
दृश्यदन्तं तु हसितं मध्यं विहसितं भवेत् ॥ २३ ॥
स्यादाच्छुरितकं चावच्छुरितं परोपकृत् ।
अट्टहासो महाहासोऽतिहासस्तु समं ततः ॥ २४ ॥
अपहासोऽकारणजः स्मेरस्तच्छीलवांस्त्रिषु ।
मिथोहासो व्यावहासी स्त्रियां विनिमयाद्धसेः ॥ २५ ॥
हासिका क्रमतो हासः शोक-खेदौ च शोचनम् ।
शुक् स्त्रियामथ दैन्यं स्यात्कार्पण्यं दीनता स्त्रिदा ॥ २६ ॥
कृपानुकम्पा करुणा घृणा च दयया सह ।
शूकोऽस्त्री ना त्वनुक्रोशः कारुण्यं च दरस्त्रिषु ॥ २७ ॥

---

1937 रत्याद १ यः
1938 A °थोद्भेदो २
1939 A रागो ४; भावो १
1940 A हावो ३
1941 A °करुणा १ भयानको १ रौद्र १ वीर १ बीभत्साः १
1942 A repeats शान्ता; °द्भुता १ वितिरसा १; वात्सल्य १.—After line 1942, B adds:
विना वीरं न शिवोमी वात्सल्यमपि नस्त्रियाम् ॥१४२
1943 A शुचिरुज्ज्वल ४. B शृङ्गारस्तु for °रोऽस्त्री
1944 A °संभोगौ २
1945 After line 1945, B adds:
तापे त्विष्टवियोगोत्थे तद्भातश्री न योपिदि ।
1946 A °घर्घरे ६
1947 A स्मितं१; वक्रोष्ठिकं १. B न तु for तत्तु
1948 A हसितं १; विहसितं १
1950 A महाहासो २
1951 A स्मेर१. B ऽकारणतस्
1952 A व्यावहासी२.—[1]) B हसनं स्फुरदोष्ठकं
1953 A हासिका१; शौचनं for शोचनम्
1954 A शुक् ४
1955 B मायादयापि च for च दयया सह
1956 B शुकोऽस्त्री नयंतु°.—[1]) B दरोऽस्त्रियां

आतङ्कोऽस्त्री पुमांस्त्रासो भयं साध्वसमन्तिमे ।
आशङ्का-भी-भीति-भियाः[57b]स्त्रियोऽथाग्न्यादिजन्म तत् ॥ २८ ॥
अदृष्टमथ दृष्टं स्याद्भयं स्वपरचक्रजम् ।
भूभृतां स्यादहिभयं स्वपक्षप्रभवं भयम् ॥ २९ ॥
अत्याहितं महाभीतिरथ पुंसि रसार्थकाः ।
भीषणो भैरवो भीमो भीष्मो घोरो भयंकरः ॥ ३० ॥
भयानकः प्रतिभयो दारुणश्च भयावहः ।
आभीरश्चाथ रौद्रः स्यादुग्रस्तद्वत्त्वमी त्रिषु ॥ ३१ ॥
उग्रा रौद्री भैरवीति विशेष्यं यदि कामिनी ।
रोषामर्ष-क्रोध-कोप-प्रतिघाः क्रुध्-क्रुधा-रुषाः ॥ ३२ ॥
रुट् स्त्री मन्युर्भाम-रुष्पौ वीरस्तूत्साहवर्धनः ।
उत्साह ऊर्ज उद्योग उद्यमश्चाभियोगवत् ॥ ३३ ॥
सर्गोऽर्थ(था ?)ध्यवसायः स्यात्सूत्रतन्तुः प्रगल्भता ।
समर्थता शूरता च प्रौढिः स्त्री कियदेतिका ॥ ३४ ॥
न पुंसि वीर्यं शौण्डीर्यमवज्ञा चातिशक्तिता ।
बीभत्सो विकृतः पुंसि वैकृतस्त्रिष्वथार्त्तनम् ॥ ३५ ॥
घृणा जुगुप्सा बीज्या स्यादृतीया च हृणीयमा(?) ।
ऋतिर्हृणीयाथ शमः शमथोपशमावपि ॥
तृष्णा[58a]क्षयः स्त्रियां शीतिर्विस्मयश्चित्रमद्भुतम् ॥ ३६ ॥
चोद्यमाश्चर्य-चीक्षे च चित्राद्या भेद्यलिङ्गगाः ।
ऋर्तिकरत्रिषु भवेज्जुगुप्साकृत्समार्थकाः ।

---

1957 B आतङ्कश्च; इत्यपि for अन्तिमे
1958 B om. भी
1959 A अदृष्ट १
1960 A °दहिभयं १
1961 A अत्याहितं १
1964 A आभीर ११.–For lines 1964 –70, B subst.:
भासुराभीरडमराः रौद्रस्तूग्रोन्यगस्त्रिषु ।
रुषः प्रतिचिकीर्षारमाऽमर्षं आमर्षवत्क्रुधः ॥ १५४ ॥
रोषः पुनः क्रोध-कोप-भाव-प्रति[घ]मन्यवः ।
रुष्पः क्रुधा रुषा रुट् क्रुध्वीरस्तूत्साहवर्धनः ॥ १५५ ॥
उत्साहोऽध्यवसायः स्यादूर्जः सर्गोभियोगवत् ।
न स्त्रियामुद्यमोद्योगो प्रौढिश्च कियदेतिका ।
1965 A भैरवी ३
1967 A °वर्धनः २
1971 A °शक्तिता ४; B °शक्तित्व
1972 A वैहृत ३.—For line 1972, B subst.:
रसे बिभत्सविकृतौ वैकृतस्तद्वति त्रिषु ॥ १५७ ॥
1973 B हृणीयया
1974 A हृणीया ७
1975 A शीति ५.—For lines 1975–7, B subst.:
शांतिर्निर्वेदशतिमोदो विस्मयो वीरफुल्लके ।
अद्भुतं चित्रमाश्चर्यं चोद्यं त्रिषु चतुष्टयम् ॥ १५९ ॥
1976 A °माश्चर्य ५

डम्बरः स्याच्चमत्कारः प्रश्रयः प्रेम न स्त्रियाम् ॥ ३७ ॥
प्रियता प्रणयः स्नेहो विद्वेषस्तु विरोधवत् ।
वैरं चाथ भवेद्वाम्यं प्रातिकूल्यं प्रतीपता ॥ ३८ ॥
उपनाहो वैरबन्धः कातिर्वश्यानुकूलता ।
आनुकूल्यं तु दाक्षिण्यमथ विप्रतिसारवत् ।
विप्रतीसार उद्विष्टोऽनुतापानुशयौ तथा ॥ ३९ ॥
पश्चात्तापोऽप्यथावज्ञा रीढा लीढावमानना ॥ ४० ॥
हेला त्रिष्ववहेलं स्यादसूर्क्षणमसूक्षणम् ।
अनादरोऽप्याभिभव-परिभाव-पराभवाः ॥ ४१ ॥
तिरस्कारः परिभवो न्यक्कारश्च निकारवत् ।
अत्याकारोऽपि धिक्कारः प्रतिध्वंसोऽवधीरणम् ॥ ४२ ॥
पुंसि मर्षः क्षमा क्षान्तिस्तितिक्षा च सहिष्णुता ।
सहनं चाप्यभिध्यानमभिध्यान्यस्वदुःस्पृहा ॥ ४३ ॥
असूयाभ्यसूया च मत्सरो दोषरोपणम् ।
ई[58b]र्ष्या स्त्रीर्क्ष्या तथेरस्या परोत्कर्षासहिष्णुता ।
स्पर्धा स्त्री पुंसि संघर्षो द्रोहस्तु स्यादपक्रिया ॥ ४४ ॥
निकारो विप्रकारः स्यात्खलीकारोऽपि संमतः ।
दर्पोऽवलेपोऽहंकारोऽभिमानो गर्व-गर्वरौ ।
अहंता ममता मानोऽस्त्री सायो मानसोन्नतिः ।
मानग्रन्थिर्भवेन्मन्तुः स स्मिरस्तु ग्रहो मतः ।
अहं पूर्वमहं पूर्वमित्यहपूर्विका स्त्रियाम् ।
अहोपुरुषिका दर्पाद्या स्यात्संभावनात्मनि ॥ ४६ ॥
अहमहमिका तु गर्वो मिथोऽथ विद्यापदीप्यादेः(?) ।

1978 A चमत्कारः२.—b) B प्रेम स्नेहश्च न स्त्रियो
1979 A स्नेहो ५. B प्रणयः प्रियता हार्दं for prior half
1980 A वैरं १; प्रतीपता २
1981 A उपनाहो१. —b) B कातिः ज्यासा-नुकूलता
1982 A दाक्षिण्य २
1984 A पश्चात्तापो ५
1986 A अनादरो ९
1990 A सहनं ६; °दुःस्पृहा २
1992 A तथेरस्या ३
1993 a) B स्पर्धा संहर्षसंघर्षौ. —b) A अप-क्रिया २
1994 a) B उपमर्दो विप्रकारः.—b) A खली-कारो ३ पि संमतः ३
1995 For lines 1995–6, B subst.:
दर्पः स्मयोऽवलेपोऽहंकारो गर्वरोऽभिमानश्च ।
ममताहंता चित्तोन्नतिरस्त्री मानचद्र्वः ॥ ११८ ॥
1997 b) B स्थिरस्तचेव for स स्मिरस्तु
1999 A अहोपुरुषिका १
2000 A अहमहमिका १

अवहेलनमात्मीयं निर्वेदो निर्विदा खेदः ॥ ४७ ॥
क्लमथस्तु क्लमो ग्लानिः क्लमि(?)र्ग्लानिर्बलक्षतिः ।
शङ्कानिष्टोत्प्रेक्षयोऽथ स्यान्मदो मुन्मोहसंगमः ॥ ४८ ॥
श्रमः परिश्रमः क्लेशः खेद आदीनवास्रवौ ।
व्यायामश्च प्रयासः स्यादायासः स्त्यानमन्तिमे ॥ ४९ ॥
कौसीद्यं मिद्धमालस्यं चिन्तश्चिन्ता च चिन्तिया ।
स्त्रियां स्मृतिः पंसनं(?)स्याद्ध्यानं [न] नरि चिन्तना ॥ ५० ॥
आध्यानं तूत्कण्ठापूर्वकचिन्ता द्वये तु चो[59a]त्कण्ठा ।
उत्कलिका रतिरायल्लकं तथा पुंसि रणरणक उक्तः ॥ ५१ ॥
औत्सुक्यं हृल्लेखो रुहिरुहिका मुण्मूसो(?)चिकस्तथा शूका ।
मोहो मूर्च्छा कश्मलमौढ्ये च शेश्च मूर्च्छायः ॥ ५२ ॥
तोषस्तु धैर्यं स्वास्थ्यं च स्वस्थता च धृतिश्चतुष्का(?) ।
हृदयं लिखति कर्मण यग् हृदयस्य हृल्लेखेति हृत् ।
द्वयोर्व्रीडस्त्रपा लज्जा ह्री ह्रीका ह्रीकया युता ।
नटाम्बि(न्ति)का च मन्दाक्षं तदन्यस्मादपत्रपा ॥ ५३ ॥
चापलं त्वनवस्थानं हर्षश्चेतःप्रसन्नता ।
संवेगः संभ्रमावेगावाटोपो रभसस्तथा ।
संरम्भोऽपि स्त्रियां तूर्त्ति-तूस्त्वरा-त्वरि-तूर्णयः ॥ ५४ ॥
जडता जडिम-स्तम्भौ मौर्ख्यं स्त्री तु विषादिता ।
विषादः खेद-सादौ चावसादोऽप्यथ संलयः ॥ ५५ ॥

2001 A खेदः ३
2002 B क्लमथुः for क्लमथः. –[5]) A स्नानि स्नाति (corrupt) for क्लमिर्ग्लानि, A बलक्षतिः ६
2003 A अनिष्टोत्प्रयो३; B अनिष्टोभयो B मादो for ऽथ स्यात्, A मदो१; °सगम २
2005 For lines 2005–15, B subst.:
प्रयासायासव्यायामास्तन्द्रा तु स्त्यानमित्यपि १७३
कौसीद्यं मिद्धमालस्यश्चिन्ता द्वंद्वे स्मृतिः स्त्रियाम् ।
चिन्तिया पंसनं(?)ध्यानमाध्यानं स्मरणं स्मृतिः ।
उत्कण्ठितस्तु द्वंद्वे रणरणकः पुंसि हृल्लेखः ।
उत्कलिका रतिरायल्लकमौत्सुक्यं समानार्थाः ॥१७५॥
अधिको रुहिरुहिका शुका गूर्छोडमुद्दप्तोपू (?) ।
मोहः शेर्मूर्छायः कश्मलमौढ्ये भामी मिथुने ।
धृतिस्तु स्वस्थता स्वास्थ्यं धैर्यं संतोष इत्यपि ।
द्वयोर्व्रीडो ह्रणीया ह्रीर्ह्रीका ह्रीका नटाम्बिका ॥१७७॥
त्रपा लज्जा च मन्दाक्षं तदन्यस्मादपत्रपा ।
2006 A °मालस्यं ४
2007 A चिन्तना ७
2008 A आध्यानं १
2010 A शूका २
2014 A युता १
2015 A मन्दाक्षं८; अपत्रपा १
2016 A °वस्थानं३; °प्रसन्नता २
2017 For lines 2017–8, B subst.:
सवेगसंभ्रमावेगास्तूस्त्वरात्वरितूर्णयः ।
पौर्वापर्याविचारेण संवेगे रभसो द्वयोः ॥ १७९ ॥
2018 A °तूर्णयः १७
2019 A मौर्ख्यं ४, B जडिमा जाड्यं for जडिमस्तम्भौ and विषण्णता for विषादिता
2020 A चावसादो ५

निधुवनं च रहो रहमन्तिमे
निगदिते च कुटारक-मैथुने ।
मदनकेलि-रती च पशुक्रिया-
थ विपरीतरते पुरुषायितम् ॥ ७० ॥
रजन्यां यद्रतं गोप्यं तत्खञ्जनरतं भवेत् ।
निर्वेश-प्रगमौ गाटिमीटिः कीला रताहतिः ।
अङ्गजाः स्युरलंकाराः स्त्रीणां भावादयस्त्रयः ॥ ७१ ॥
शोभा कान्तिश्च दीप्तिश्च माधुर्यं च प्रगल्भता ।
औदार्यं धैर्यमित्यासामलंकाराः प्रयत्नजाः ॥ ७२ ॥
लीला विलासो विच्छित्तिर्बिब्बोकः किलकिञ्चितम् ।
मोट्टायितं कुट्टमितं विभ्रमो ललितं मदः ॥ ७३ ॥
विकृतं तपनं मौग्ध्यं विक्षेपश्च कुतूहलम् ।
चकितं हसितं केलिरित्यष्टादश शीलजाः ॥ ७४ ॥
स्नानं वसनं तिलको लेपो हारोऽञ्जनं काञ्ची ।
नासामौक्तिककुण्डलनूपुरकुचकञ्चुकीमालाः ॥ ७५ ॥
कबरीबन्धो वलयं ताम्बूलं चातुरी चेति ।
[61a]षोडश योषाभूषा औपाधिक्यो बुधैः कथिताः ॥ ७६ ॥
रूपयौवनलालित्यैः शोभा स्यादङ्गभूषणम् ।
रूपं क्लीबे च लावण्यं सौन्दर्यं च समं त्रयम् ।
कामेनाप्यायिता कान्तिः सैव दीप्तिस्ततोऽधिका ॥ ७७ ॥

2064 For lines 2064–9, B subst.:
कुटारं स्यान्निधुवने मैथुनं पशुकर्म च ।
क्रीडारत्नं कामकेली रतिः स्त्री च रहोंति*[मेः]१९४॥
स्यात्खञ्जनरतं गोप्यं रजन्यां परयोषिति ।
विपरीते तु पुरुषायितं कीला रता हतिः ॥१९५॥
2066 A पशुक्रिया १९
2067 A °प्यायितं १
2068 A °नरते १
2069 A मीटिः ४ कीला १
2070 A अंगजाः १; B आंगजाः
2071 A दीप्ति १ थ माधुर्यं १; प्रगल्भता १
2072 A औदार्यं १ धैर्यं १. B अलजाः for प्रयत्नजाः

2073 A लीला १ विलासो १ विच्छित्ति १ र्बिब्बोकः १ किलकिंचितं १
2074 A मोट्टायितं १ कुट्टमितं १; मदः १
2075 A विकृतं १ तपनं १ मौग्ध्यं १
2076 A चकितं १; केलि १
2077 A स्नानं १ वसनं १ तिलको १ लेपो १ हारों १ जनं १ कांची १
2078 A °मौक्तिक १ कुंडल १ नूपुर १ कुचकं-चुकी १ मालाः १
2079 A °बंधो १ वलयं १; चातुरी १
2080 A भूषा १६ औपाधिक्यो १
2081 A सोभा १
2082 A वसन– for च समं
2083 A कांतिः १; दीप्ति १

सर्वावस्थासु सौन्दर्यं माधुर्यं परिकीर्तितम् ।
केलिकर्मणि वैयात्यं प्रागल्भ्यं समुदीरितम् ॥ ७८ ॥
सापराधेऽपि कान्ते स्यादौदार्यं विनयः सदा ।
धैर्यं स्थैर्यं मनोवृत्तेरथ क्लिष्टोक्तिचेष्टितैः ॥ ७९ ॥
प्रियस्यानुकृतिर्लीला क्रीडा खेला च खेलनम् ।
देवनं नर्मकेलिस्तु द्वयोः पुंसि तु बर्करः ॥ ८० ॥
परिहासः परीहासो द्रवश्च सदृशार्थकाः ।
विलासो वल्लभालोके सात्त्विकानां समुद्भवः ॥ ८१ ॥
स्तोकाप्याकल्परचना विच्छित्तिः कान्तिपोषकृत् ।
बिब्बोकस्त्वतिगर्वेण वस्तुनीष्टेऽप्यनादरः ॥ ८२ ॥
हर्षाद्रुदितगीतादिव्यामिश्रं किलकिञ्चितम् ।
क्रन्दितं रुदितं क्रुष्टं परिदेवनमित्यपि ॥ ८३ ॥
आक्रन्दश्चाथ तं धावन्भवेदाक्रन्दिकस्त्रिषु ।
[61b]स्त्री विशेष्या यदि भवेदसावाक्रन्दिकी मता ।
तद्भावभाविते चित्ते वल्लभस्य कथादिषु ।
जृम्भणं कर्णकण्डूयेत्यादि मोट्टायितं भवेत् ॥ ८४ ॥
पुंसि वक्त्रविकासः स्याज्जृम्भस्तु त्रिषु जृम्भणम् ।
केशस्तनाधरादीनां ग्रहे हर्षेऽपि संभ्रमात् ॥ ८५ ॥
नेति नेति शिरःपाणिधूतिः कुट्टमितं मतम् ।
त्वरया हर्षरागादेर्दयितागमनादिषु ॥ ८६ ॥
अस्थाने भूषणादीनां विन्यासो विभ्रमो भवेत् ।
सुकुमारतयाङ्गानां विन्यासो ललितं मतम् ॥ ८७ ॥
मादो मदो विकारो यो यौवनाद्यवलेपजः ।

2084 A माधुर्यं १
2085 A प्रागल्पं १; B प्रागल्भं
2086 A °दौदार्यं १
2087 A धैर्यं १
2088 —b) B क्रीडापि च सुखोत्सवः
2089 For lines 2089-90, B subst.:
किलो विनोदः स्याद्रागरसोपि परिहासवत् ।
द्रवोपि चर्करो नर्म देवनं ललनं चरत् ॥ २०५ ॥
2090 A द्रवश्च ११
2091 A बिलासो १
2092 A विच्छित्तिः १. B भंगिरित्यपि' for कान्तिपोषकृत्
2093 A बिब्बोक १
2094 A °किंचितं १
2096 A आक्रंद५; °क्रंदिक १
2097 A °क्रंदिकी १. B om line 2097.
2100 A जृंभणं ३
2101 A हर्षं वि- for हर्षेऽपि
2102 A कुट्टमितं १
2105 A ललितं १
2106 A मदो ३. B om. line 2106

वक्तव्यकालेऽप्यवचो लीलया विकृतं भवेत् ॥ ८८ ॥
नयनं प्रियविश्लेषे सरावेगोत्थचेष्टितम् ।
अज्ञानादिव या पृच्छा प्रतीतस्यापि वस्तुनः ॥ ८९ ॥
वल्लभस्य पुरः प्रोक्तं मौग्ध्यं तत्तत्त्वदर्शिभिः ।
भूपाणामर्थरचना वृथा विष्वगवेक्षणम् ॥ ९० ॥
रहस्याख्यानमीषच्च विक्षेपो दयितान्तिके ।
सा कर्णाकर्णिका प्रोक्ता रहस्योक्तिर्मिथःश्रुतौ ॥ ९१ ॥
रम्यवस्तुसमालोके लोलता स्यात्कुतूहलम् ।
कौतूहलं कौतुकं च कुतुकं च विनोदकः ॥ ९२ ॥
हसितं तु[62a]वृथाहासो यौवनोद्भेदसंभवः ।
विलासे सह कान्तेन क्रीडायां केलिरुच्यते ॥ ९३ ॥
देवनं कूर्दनं खेला खेलो विहृतिरित्यपि ।
क्रीडा च ललनं चाथ तस्यां प्रहरणं यदा ।
दण्डा हि(दि?)स्यात्तदा दाण्डा मौष्टा याष्टैवमुन्नयेत् ।
आवीनकं तर्णकानां स्थालीषु क्रीडनं मतम् ।
रासो रासे रसो गो(?)धुग्जनस्य क्रीडनं मतम् ।
विप्रलम्भो विसंवादोऽभ्युपपत्तिरनुग्रहः ॥ ९५ ॥
पुंस्याचारश्चरित्रं स्याच्चारित्रं चरणं तथा ।
चरितं वृत्तमस्त्री तत्रिप्वा(?)शीलोऽस्त्रियां शुचि ॥ ९५ ॥

---

2107 A विकृतं १
2108 A नमनं १
2110 A मौग्ध्यं१; B मौग्धं
2113 A °कर्णिका १
2115 A विनोदकः ५
2117 A केलि १.—For lines 2117-20, B subst.:
केलिखेले द्वयोः क्रीडा कूर्दनं ललनं तथा ।
विहारश्चाथ दांडा सा *दंडहरणान्विता ॥ २१८ ॥
2120 A दांडा१; योष्टे १ ष°
2121 A आवीनकं 1.—¹) B स्थाली क्रीडाय गोदुहां
2122 For lines 2122-51, B subst.:
रासो रासे रसो धर्ममायशीलास्तु न स्त्रियाम् ॥२१९॥
सर्गो निसर्ग आत्मा च सहजस्वसमावकाः ।
संसिद्धिः प्रकृति यामि(?)रनूकं च स्वलक्षणम् ॥२२०॥
आजानं स्वतत्त्वं च स्वतरं च स्वरूपकम् ।
माया कुसृतिर्निकृतिः शठता स्याच्छांबरी शली(?)द्वंद्वे
छद्म छलं च कुहकं कैतवं दांडाजिनं संधि(ध)त् ॥
उपधाधिका न योषित्कपटं कूटं न पुंसि जाली च ।
उपधिर्दंभोऽप मिषं लक्ष्यं लक्षं निभं चाली ॥२२२॥
अपदेशो व्यपदेशो व्याजो गुप्ती स्वरूपस्य ।
कुहना कुर्कुटीरचा दंभार्थेर्या मृषाचर्या ॥ २२३ ॥
चिंता वांछा स्मरणं प्रशंसनं प्रलाप उद्वेगः ।
व्याधिर्जडतोन्मादो मरणमिति रागिणां दशावस्थाः ॥
न स्त्री दोहदकामौ वशोभिलाषो मनोरथस्तर्षः ।
स्यात्कमनी च काङ्क्षा वान्छाशेच्छा स्पृहाशंसा ॥२२५
कांतिस्तृट् च धनाया मनोगवीप्सा रुचिर्लिप्सा ।
ईहा द्वयोरप्यधने लोभो गर्धो द्वयोर्धनाया च ॥२२६
तृष्णापि धनपिशाची गर्द्धिः स्याद्गर्धना गार्ध्यम् ।
स्याल्लालवाधिका सा द्वंद्वे स्वेच्छा यदृच्छा स्यात् ॥२२७
पुत्रस्येच्छा तु पुत्रीया पुत्रकाम्या पुत्रप्रिया ।
2123 A विसंवादो३; °ग्रहः २
2125 A वृत्त६; °शीलो२

भावः स्वभावः सहजो धर्मोऽस्त्री स्वो निसर्गकः ।
आजानलक्षणानूकरूपतत्त्वानि शीलकम् ।
ससिद्धि-प्रकृती रीतिः शीलीयं शीलजे त्रिषु ॥ ९६ ॥
माया स्त्री कुसृतिस्तथा च निकृतिर्व्याजोऽपदेशोपधी
दम्भः कैतवपक्ष(त्र?)शाठ्यकुहकं दण्डाजिनं स्यान्मिषम् ।
❊ ❊ ❊ ❊ ❊ ❊ ❊ ❊ ❊ ❊ ❊ ❊ ❊ ❊ ❊ ❊ ❊ ❊ ❊
छद्म स्याच्छलमस्त्रिया तु कपटं कूटं च सध्यन्निभम् ॥ ९७ ॥
वञ्चनमतिसंधानं प्रतारणा स्त्री व्यलीकमस्त्री न(?) ।
माया तु शाम्बरी[62b]स्यात्कुसृतिर्जालं तथा कुहकम् ॥ ९८ ॥
चिन्ताभिलाप[:]स्मरणं प्रशंसा
प्रलप उद्वेजनमामयश्च ।
जडत्वमुन्मादयुगन्तकालो-
ऽवस्था दशैता विरहातुराणाम् ॥ ९९ ॥
तर्षोऽभिलाषोऽपि मनोरथोऽस्त्री
कामो वशः स्त्री तु तृषा तृडाशा ।
काङ्क्षा स्पृहेहापि च कान्तिरिच्छा-
ऽऽशंसा च वाञ्छा कविरत्न(?)लिप्सा ॥ २०० ॥
प्रेप्सा च तृष्णापि च दोहदोऽस्त्री
स्याल्लालसात्यर्थमसौ न षण्ढे ।
लोभस्तु गर्द्धामिथुना(?) धनाया-
ऽथोद्वेग उक्तो विषयेष्वनिच्छा ॥ १ ॥
इच्छान्नस्याशनाया स्त्री जिघत्सा क्षुत्क्षुधा रुचिः ।
उदन्या स्त्री पिपासा च तृषा-तृष्णा-तृषोऽम्बुन[:] ॥ २ ॥
रोचको अथ तर्षः स्याद्दित्सा स्त्री चोपलासिका(?) ।
एवं स्त्रियस्तत्तदिच्छासूक्ताः पिपठिषादयः ।
यदृच्छा स्वैरिता स्वेच्छा तथा स्वाधीनता स्त्रियः ॥ ४ ॥
स्तम्भः स्वेदः स्वरभ्रंशो रोमाञ्चोऽपि विवर्णता ।
बाष्पश्च कम्पः प्रलय इत्यष्टौ सात्त्विका मताः ॥ २ ॥

2128 A शीलीयं १
2132 A व्यलीक ४
2140 A तृडाशा १
2143 A दोहदो १
2144 A °ह्लालसा १
2148 A तृषों ७ वुन
2151 A स्वाधीनता ४
2152 A स्तंभः१, °भ्रंसो १
2153 A सात्विका १

विष्टम्भः प्रतिबन्धो नरि प्रतिष्टम्भ ईरितो जडिमा ।
स्वेदः सिप्रोऽङ्गरसो निदाघ-घर्मौ स्वजोपि घर्मान्त्ये[63a] ॥ ३ ॥
स्वरभेदः स्वरसादो स्वरभङ्गः स्यात्स्वरध्वंसः ।
कण्टक-पुलकावल्ली रोमाञ्चो रोमहर्षश्च ॥ ४ ॥
रोमविकारो रोमाङ्कुरं रोमोद्भेद ईरितोऽपि पुलः ।
उद्धर्षणमुल्लसनं त्वक्पुष्पं च त्वदङ्कुरोऽस्त्री स्यात् ॥ ५ ॥
विवर्णता तु कालिका दृगम्बुबाष्पमस्त्रियाम् ।
तथैव लोतमस्तु चाश्रु सुस्रमश्र-रोदने ॥ ६ ॥
कम्पो वेपथुरत्र कम्पनमथो दर्दुः स शीताधिका
मूर्छा स्त्री प्रलयो विचेष्टनमथोद्धर्षोद्धवौ च क्षणः ।
पुंसि स्यान्मह उत्सवोऽथ चरमे सान्तं महः संमतं
प्रोक्तः खण्डरसश्च चित्ररसयुक्सर्वेऽपि यस्मिन्रसाः ॥ २०७ ॥

इति नाट्यवर्गः ।

स्त्रियामापो वारो बहुषु सलिलं वारि सरिलं
जलं पाथः पीथं दकमुदकमम्भोऽम्बु च पयः ।
कबन्धं कं पाथं घृतममृतमर्णो जनहितं
कृपीटं पानीयं जलदकुसुमं पावन-वने ॥ १ ॥
सम्बर-शम्बर-कीलालान्न-प्राणद-पुष्कर-नीरापांसि ।

---

2154 A जडिमा४.–For lines 2154–65, B subst.:
स्तंभो जाड्यं(!)स्त्वङ्गरसः स्यात्स्वजो घर्मः ।
सिप्रनिदाघो घर्मः स्वरभेदस्त्वस्फुटस्वरता॥२३०॥
रोमोद्गम उद्धुष(र्ष)णं त्वक्पुष्पं चोल्लसनकं च ।
रोमविकारस्तु पुलो रोमांचो रोमहर्षश्च ॥ २३१ ॥
रोमांकुरत्वदंकुरकंटकपुलका नयोपिह्वा: ।
विवर्णता तु कालिका तु सुप्तमश्रमस्त्रवत् ।
दृगंबुलोतरोदनाश्रुबष्प बाष्पमस्त्रियाम् ॥ २३२ ॥
प्रलयस्त्वचेतनत्वं कंपो वेपथुर्दर्द उच्छित ॥२३३
उद्वेगस्तच्चाविरमादस्थित्तविश्रांतिः ।
संगीह्वा विधाने च विसंवादोपि विप्रलंभः स्यात् ॥
क्षण उद्धव उद्धर्षोत्सवो महोन्ते महं तु न स्त्री स्यात् ।
खण्डरसचित्ररसः शबलीभावो रसानां चेत् ॥२३५॥
2156 A स्वरध्वंशः ४
2159 A उद्घुर्षन; त्वदंकुरो ११
2160 A कालिका २
2162 A कंपनमङ्थो दर्दुः १
2163 A विचेष्टन ३
2165 A चित्ररस २

इति नाट्यवर्गः ।

2168 B दिव्यं for पाथं. A जिनहितं
2170 For lines 2170–79, B subst.:
कीलालं कुशनीरनारशबवारापांसि वेपं शरं
तोयं पिप्पलवर्वतोमुरदभ्रापोंपांसि च प्राणदम् ।
सेव्यं पट्टसपुष्करे मृतवणे अश्वत्थवच्छंवरं
स्यात्पातालमलीमसं उदारेख: सर्वंगतामरम् ॥ २ ॥
कुम्भनसंमीरनजीवनीयपवित्रपूतांकुरकर्बुराणि ।
इरम्यं मधुमन्दनधंवलानि क्षरं तथोद्रु क्षणदं तथैव॥३
क्षीरं भुवनं कमलं यादो वासः स्त्रियां न चरवार: ।
रसपनरसविषदोषा दर्भेशिक्यवारिरम्यं कं च ॥४
अच्छं कारिममर्थ पद्मं शाद्वलं तु ।
कीलालगंधि मरुत्सारिदिमर्मभो मवेत्सारम् ॥ ५ ॥
गोपीथं स्यात्पीयमनी वद्रूवेन्दुनिर्मोचितम् ।

पिप्पल-वैप्प(?)-कुलीनस-नारं शरमृत[63b]मूत्रः(?)सर्वेग-तोयम् ॥ २ ॥
वार्जीवनं जीवनीयं दगर्णे(?) सर्वतोमुखम् ।
गर्व(?)सरः कर्बुरं च पवित्रं पूतमङ्कुरः ।
कम्बलं तामरं कृत्स्नं क्षणदं स्यन्दनं मधु ।
क्षरं कंत्वलिगं ※ ※ न स्त्री कोडं(?)रसं विषम् ॥ ३ ॥
कमलं क्षीरं भुवनोस्वीस्यं(?)घनरसं कुशम् ।
यादो वासो(?)वर्णसिर्णा नोड्डः पुंसि स्त्रियां त्विरा ॥ ४ ॥
तीर्थं त्वर्दवज्जलं(?)काजलं स्यात्काम्भः कोदकमित्यपि ।
※ ※ ※ ※ ※ ※ ※ ※ त्वर्थं त्रिष्वत्र देयके ।
अपां विकार आप्यं स्यादापमप्सव्यमम्मयम् ॥ ५ ॥
स्त्रियामाप्याम्मयी चापि स्यादापोविकृतौ पुनः ।
आपोमयं चापसं च स्त्रियामापोमयीति दिक् ॥ ६ ॥
अभिवृष्टं नवं दृष्टं तद्दिव्यं स्याद्दिवश्च्युतम् ।
धारं धाराप्रवृष्टं यत्कारं स्यात्करकोद्भवम् ॥ ७ ॥
तुषारजं तु तौषारं हैमं स्याद्धिमसंभवम् ।
गाङ्गं गङ्गाप्रवाहोत्थं सामुद्रं तु समुद्रियम् ॥ ८ ॥
दिवा सूर्यकरैस्तप्तं रात्र्यां चन्द्रकरैर्हिमम् ।
अगस्त्योदयनिर्दोषं हृसोदकमिति स्मृतम् ॥ ९ ॥
भौमं भूमिभवं चौण्ट्यं स्व[64a]यंशीर्णशिलाभवम् ।
औद्भिदं भूमिमुद्भिद्य जातं कौपं तु कूपजम् ॥ १० ॥
नादेयं स्यान्नदीजन्म ताडागाद्येवमुन्नयेत् ।
उदकार्हं उदन्यः स्याच्चद्वानुदकलो भवेत् ॥ ११ ॥
भवेदुदकिलश्चाथ पयसी देशनामनि ।
अतलस्पृशि रन्ध्रे स्यादगाधं चाप्यगाधकम् ॥ १२ ॥

2177 A त्विराद्दृ ५
2178 A तीर्थे १; कोदक २
2179 A त्वर्थं १
2180 B त्रिष्वव्विकार for अपां विकार
2181 B om. lines 2181–2
2182 A °मयी १ ति
2183 A अभिवृष्टं १; तद्दिव्यं १
2184 A धारं १. B कारको°
2185 A तुषारजं १; हैमं १
2186 A गागं १; समुद्रियं २
2187 B सूर्यकलैस्. A B रात्रि for रात्र्यां
2188 A हृसोदक १
2189 A भौम १; चौव्यं १
2190 A औद्भिदं १; कौपं १
2192 A उदक्यं २
2193 A पयसी १
2194 For lines 2194–5, B subst.:
अस्थाघास्थागमस्ताघ मगाधं चातलस्पृशि ॥१२॥

भवेदस्थाधमस्थागमस्थाघं च समार्थकम् ।
निम्नं गभीरं गम्भीरमुत्तानं तु ततोऽन्यथा ॥ १३ ॥
प्रसन्नमच्छं विमलं कलुषेऽनच्छमाविलम् ।
पिच्छिलं स्याद्विजपिनं द्राग्भृतं तत्क्षणोद्धृतम् ।
ऋक्षरं वारिधारा स्याद्धर्घरो वारिनिःस्वनः ।
देशं विनाद्भिरन्वीतमन्वीपं मेघलिङ्गम् ।
पारावारः समुद्रो जलनिधिरुदधिर्वीचिमाली समीचः
पारापारश्च पारीस्तिमिरपि पुरणः स्यात्सरस्वानुदन्वान् ।
गङ्गानाथो नदीनोदरथि-कधि-महाकच्छ-शीतांशुतात-
कूपारावारपारा भुविरविष-पयो एगप्से(?)पांपतिश्च ॥ १५ ॥
रत्नाकरः सिन्धु-महासरौ[64b]च तरन्त-मीरौ मकरालयश्च ।
महाशय-श्रीगुरु-सागराश्च मितद्रु-दश्रार्णव-पाथिपः स्युः ॥ १६ ॥
स्रोतःपतिस्तविष-ताविष-घेन-यादः-
पत्यूर्मिताल-वरुणालय-मीनकोषाः ।
वार्धिः कुपीटमणि-कुस्तुमकाविरावान्
क्लीवेऽत्र शैलशिबिरं च महासरश्च ॥ १७ ॥
लवणोदः क्षीरोदो दध्युद आज्योद-मद्योदौ ।
इक्षूदो मधुरोदः सप्त विभेदाः समुद्रस्य ॥ १८ ॥
तरङ्ग-भङ्गौ नरि पुंसि चोर्मिर्वीचिर्लहर्युत्कलिका'युवल्ली ।

---

2196 A उत्तानं १

2197 A विमलं १; °माविलं २

2198 A पिच्छिलं १ स्याद्विजेविनं २ द्राग्भृतं १. –B om. lines 2198–9.

2199 A वारिधारा १; घर्घरो १

2200 A देशान्यदद्भि° for देशं विनाद्भि°.–°) B अन्वीतं for °पं; °लिंगगाः

2201 For lines 2201–10, B subst.:
त्रिपुद्रैकदम्बुस्तिमिरुदधिरकूपारपायोनिधिस्वः (!)
पारापारश्च पारी पुरणयुगलयोर्वगधेनाः प्रचत्वा ।
पारावारः सरस्वान्भुविरविषपयोराशि गङ्गेशमीरा
कूपारोदन्वदुर्विश्वपतविषमहाकच्छरत्नाकराश्च ॥१५
स्रोतःपतिर्जलपतिर्वरुणालयोम्
प्रापारकुस्तुभमहाशयमीनकोषाः ।
याद.पतिश्च वारिधिरूर्मिमाली
लक्ष्मीगुरुः शशिपिता मकरालयश्च ॥ १६ ॥
मितद्रु दश्रपाथिपस्त्वरंततायिर्पाकधिः ।
समीच सागराविरावतायुतश्च मंदरः ॥ १७ ॥
दारदकुपीटमणिकाशुदराशिरतयालयः प्रेत्वां ।
नदपतिरपारपारार्णवोर्मिता ता महासरः क्लीबे॥१८

2211 A लवणोदः १ क्षीरोदो १ दध्युद १ आज्योद १ मद्योदौ १

2212 A इक्षूदो १ मधुरोदः १

2213 For lines 2213–47, B subst.:
क्षीरोदो विष्णुपदं तरंगभंगौ द्वयोरूर्मिः ।
उत्कलिका तोयलता वीचीर्महती तु सा लहरी॥२०
कल्लोलः कल्लोघावर्तः स्याद्भ्रमो वाराम् ।
जलगुल्मसलिलकंटौ ताल्लूरो वोलकश्चागो ॥ २१ ॥
स्याधवबुद्बुदवारिस्फोटा उत्ताः फणादं च ।
फेनो डिण्डीरडिंडीरा मत्यं कौशिकाध्ये द्विजः ।
समुद्रफेनो हिमलोयान्यगो फेनिकेनिलौ ॥ २२ ॥

कल्लोल उल्लोल इमास्तु तुङ्गास्त्वावर्तकोऽम्भोभ्रम-वारिगुल्मौ ॥ १९ ॥
जलरुण्डो जलावर्तस्तालूरो चोलकोऽप्यसौ ।
जलस्फोटो बुद्बुदः स्यात्स्थासकौगंतु(?)इत्यपि ॥ २० ॥
अथ फेनायमानः स्यात्फेनमुद्गमति त्रिषु ।
फेनिलः फेनलः फेनी फेनवांस्तद्युतो भवेत् ।
पुमांसौ विन्दु-पृषतौ विप्रुट् स्त्री तद्वयोः पृषत् ॥ २१ ॥
चक्रमस्त्री चक्रमन्त्ये पुटभेदो नरीरितः ।
ऊर्ध्वं निःसरणेऽधस्तोऽपांभ्रमो जल[65a]निर्गमः ॥ २२ ॥
जलाञ्चलं तु मन्दाकं स्रोतं स्रोतोऽपि चान्तिमे ।
उत्सः स्रवः प्रस्रवणं निर्झरस्तु झरो नरि ॥ २३ ॥
झरा झरिर्झरी स्त्रीत्वे प्रवाहो वाहसो रयः ।
ओघो धारा-वेणि-वेण्यः पूरोऽम्बुवर्धनं प्लवः ॥ २४ ॥
समुद्रपूरे वेला स्यात्सा मर्यादापि वारिधेः ।
वेलावनं समुद्रस्य समीपस्थितकाननम् ॥ २५ ॥
कूलदेशस्तु मर्यादा मपातो रोध आदिमे ।
कूलं तीरं प्रतीरं च कच्छं रोधस्तु यत्त्रिषु ॥ २६ ॥
पारं परमवासान्तं(?)क्लीवे स्यादवारं च स्त्रियौ(?) ।

---

फेनलश्चाथ फेनायमानः स्यात्फेनमुद्गमन् ।
बिंदुर्ना पृषता भूम्नि विप्रुट् स्त्रीपृषदन्तिमे ॥ २३ ॥
पुटभेदोऽस्त्रियां चक्रं वक्रं न नरयोपितोः ।
ऊर्ध्वं निःसारणे नालो नाभ्रमो जलनिर्गमः ॥२४॥
जलोच्छ्वासः परीवाहः प्रवृद्धजलवर्त्म यत् ।
जलोच्चलं तु मन्दाक-स्रोतसी स्रोतमस्त्रियाम् ॥२५॥
स्त्रतोंवुप्रस्त्रामुत्सोस्त्री स्रवः प्रस्रवणं समम् ।
स्तुनिर्झरो झराद्वन्द्वे झरि सरिमरुभे स्त्रियौ ॥२६॥
वेणिर्धारारयश्चौघः प्रवाहो वाहसोत्र च ।
क्षरं वाः परिवृद्धौ तु प्लवः पूरोथ सौंवुधेः ॥२७॥
वेलाथ तीरभूर्वेला मर्यादा च पयोनिधेः ।
कच्छमस्त्री कूलतीरं प्रतीरं रोधरोधसी ॥ २८ ॥
तटं त्रिषु प्रपातोऽथ पारं न स्त्री परं तटम् ।
अपारमस्त्रियामन्यत्प्राक्कारं पूर्वतीरवत् ॥ २९ ॥
दक्षिणं तरपाक्कारमुदक्कारं तदुत्तरम् ।
प्रत्यक्कारं प्रतीचीनं पारीणं पारसंभवम् ॥ ३० ॥
अवारपारीणमवारीणमेवं पृथक्त्रिषु ।
पारगस्तत्तैरीकः स्यात्पारीगोवारगः पुनः ॥ ३१ ॥
अवारीणोप्येवमूह्याः पारावारीणकादयः ।
पात्रं तु त्रिषु भाण्डे स्यान्मध्यं यत्कूलयोर्द्वयोः ॥३२॥
वक्रेत्र सरितां न स्त्री पंकोथान्तर्जले तटे ।
अंतरीपं द्वीपमस्त्री परीपं परितोंवु यत् ॥ ३३ ॥
अन्वद्वि द्वीपजे द्वैप्यं पुलिनो स्यंवुमुक्तटम् ।
सैकतं सिकतानां तत्पादन्यत्नर इत्यपि ॥ ३४ ॥
वा भूम्नि सिकताः शद्विवालुका शर्करोपमाः ।
वेधिन्यस्ताः पदोः पयास्तथा दश्यपदा अपि॥३५॥
शर्कराभिनिवृत्ते शर्करा स्त्री परे त्रिषु ।

2214 A उल्लोल १
2215 A बोलको ७
2217 A फेनायमानः १
2220 A पुटभेदो ३
2222 A स्रोतोऽपि
2223 A प्रस्रवणं ३
2225 A वेणिवेण्यः ६; प्लवः ३
2226 A वेला १
2228 A मर्यादा २
2229 A रोधस्तु ८
2230 A पारं १; °द्वारं १

प्राक्कारं पूर्वतीरं स्यादवाक्कारं तु दक्षिणम् ॥ २७ ॥
प्रत्यक्कारं प्रतीचीनमुदक्कारं तदुत्तरम् ।
पारीणः स्यात्पारभवोऽवारीणोऽवारसंभवः ॥ २८ ॥
भवेदवारपारीणोऽवारपारभवो हि यः ।
भवेदवारपारीणोऽवारपारं हि गामिनि ॥ २९ ॥
पारीणश्चाप्यवारीणः पारावारीण इत्यपि ।
पारगस्तर्तरीकश्च पारीणाद्या विशेष्यगाः ॥ ३० ॥
स्यात्पारावारयोर्मध्ये पात्रं भाण्डं समार्थकम् ।
नदी पा[65b]त्रे मद्गुरे स्याद्वङ्कः पुंसि नपुंसके ।
द्वीपोऽस्त्रियामन्तरीपं तटं पानीयमध्यगम् ॥ ३१ ॥
त्रिपु द्वैप्यं यदन्यम्भोनिधिद्वीपसमुद्भवम् ।
स्त्रियां द्वैप्या द्वैपमन्यदान्तरीपं तु तद्भवम् ॥ ३२ ॥
पुलीनोऽस्त्री तोयभवं सैकतं सिकतामयम् ।
स्यात्पादचत्वरः क्षुद्रवालुका शर्करोपमा ॥ ३२ ॥
सिकता[ः]मायशो भूम्नि स्त्रियां ता यदि पादयोः ।
वैधिन्यः स्युस्तदा पद्यास्तथा दृश्यपदा अपि ॥ ३३ ॥
शर्कराभिस्तु निर्वृत्ति शर्करा स्त्री परे त्रिपु ।
शार्करीयं शार्करिकं स्तः शर्करिक-शार्करे ॥ ३४ ॥
भवेच्छार्करकं वाथ देशे तद्वति योषितौ ।
शर्करा-सिकते शर्करिलः सिकतिलस्त्रिपु ॥ ३५ ॥
देशे तद्वत्यदेशे तु शर्करालोऽपि शार्करः ।
दूर्वाच्छिततटी भूमिः पांशुचामर उच्यते ॥ ३६ ॥
पङ्काम्बुरुरकौ न क्लीबे जम्बालः कृमिवल्लभः ।
निषद्वरः कर्दमश्च शादश्चावकि[की]लो दमः ॥ ३७ ॥

2231 A पूर्ववीरं २; °पारं १
2232 A प्रत्यपारं १; °मुदपारं १
2233 A पारीनः १
2234 A °पारीनो १
2235 A °पारीनो १
2236 A °वारीन° १ परावारीन १
2237 A पारीनाद्या २
2238 A भांडं २
2242 A द्वैप्या १; °रीं १
2243 A पुलीनो १; °तामयं २
2244 A °चत्वरः ३; °रोप्येला for °रोपमा
2246 A पद्या १
2250 A °निल ४
2251 A शार्करः २
2252 A °चामर १
2253 B °म्बुपंकर्दं पाल्का न प्रियः कृमि°
2254 A °धेर्नरको; B °धेचक्लिलो for °वाक- किलो

अकालजलकेशः स्यात्पङ्कारो जलनीलिका ।
हठपर्णी च कावारं जलशूक-जलाञ्चलम् ॥ ३८ ॥
शैवालमस्त्री शेवालं शैवलः शीवलं [66a] समम् ।
जलज्वरोऽस्त्री शेपालं जलचामरमीरितम् ।
परिवाहः परीवाहो जलोच्छ्वासो जलाशयः ॥ ३९ ॥
परिधायो जलाधारो द्रहोऽगाधजलो ह्रदः ।
अविदासी ह्रदः स स्याज्जलं यत्र न शुष्यति ।
अन्धुः पुंस्यास्त्रीनाही कारेटश्च प्रहिर्द्रुहिः ॥ ४० ॥
उदपानं पुंसि वा स्याद्द्रे कूपो जलाम्बिका ।
समप्यान(?)स्तथापीनो मेयवद्बुद्धिमान्यदि ।
कोट्टारश्चारघट्टश्च महाकूपोऽथ कूपकः ॥ ४१ ॥
उत्सो विदारकश्चुण्डि-चुर्यौ विवर-चूतकौ ।
अन्धकूपः खटः पुंसि स तृणादिभिरावृतः ।
कूपो दैर्घवरत्रः स्यान्निर्वृत्तो दीर्घवर्भय(?) ॥ ४२ ॥
निवृत्तो दत्तगुप्ताभ्यां दाचो गौप्तः क्रमान्मतः ।
आहावः स्यान्निपानं च पूपान्तिकजलस्थलम् ॥ ॥ ४३ ॥
नेमिश्रिका दारुयन्त्रमथास्य मुखबन्धनम् ।
नान्दीमुखो नन्दिमुखः स्यान्नान्दीपट इत्यपि ॥ ४४ ॥
वीनाहः स्यान्नन्दिपटो विनाहोऽप्यत्र कीर्तितः ।
उद्धाटनं घटीयन्त्रं पादावर्तोऽरघट्टकः ॥ ४५ ॥
महत्तरो ग्रामकूपो वापी वा[66b]पिश्च दीर्घिका ।

---

2255 For lines 2255-9, B subst.:
चिरखल्लोल जळनीळी तु हठपर्णी जळज्वरः ।
पंकारोऽकाळवाकेशः कावारं जळचामरम् ॥ ४० ॥
न स्त्री शेवाळ शेपाळ शैवाळानि च शीवळम् ।
शैवळं जळशूकं च सलिला चळमित्यपि ॥ ४१ ॥
2257 A शीवलं १०
2259 A जलोच्छ्वासे २
2260 [a]) B परिधारो. A जलाधारो ३. -[b]) B ह्रदो for द्रहो. A ह्रदः ३
2261 A अविदासी १
2264 A °पीनो २. -After lines 2264, B adds:
कूपस्तः पूपखनकः खनन्वापी च वापित. ।
2265 A महाकूपो ३
2267 B अन्धः कूप°. A खटः २
2268 A दैर्घवरत्नः १; B दीर्घ°
2269 A गौप्तः १. -After line 2269, B repeats the line inserted after line 2264
2270 A निपानंस; B निपानोऽस्त्री
2271 A °मिश्रका २
2272 For lines 2272-3, B subst.:
नान्दीमुखो नान्दिपटो वीनाहोऽस्त्री विनाहवत् ॥ ४८ ॥
2273 विनाहो ७
2274 A घटीयंत्रं २
2275 A महत्तरो १

चवोलः(?) प्रतिकूपस्तु जलाष्टीलाम्बुकूपिका ॥ ४६ ॥
स्त्रियां पुष्करिणी तल्लो बिलं खातं तलोऽस्त्रियाम् ।
कुण्डं देवजलाधारे न स्त्री स्याद्देवखातकः ॥ ४७ ॥
अखातश्च तडागोऽस्त्री तटाकः कूलमन्तिमे ।
पद्माकरश्चाथ पुंसि कासारः स्यात्तुलाङ्गकः ॥ ४८ ॥
सरं सरश्च क्लीबे द्वे सरसी तु महत्सरः ।
वेशन्त-पल्वलावस्त्री तल्लः स्वल्पसरोर्थकः ॥ ४९ ॥
जातौ मण्डूकसरसं नाम्नाम्बुसरसं मतम् ।
परिखा खातिका खेयं खातं यत्परितः पुरम् ।
पारिखेयी तु परिखा हिता भूम्यादिका त्रिषु ॥ ५० ॥
तोयेन सहिते शैलबिलटङ्को(?)नृपण्डयोः ।
आधारोऽम्भो बन्धनं स्यात्त्वालिः पालिश्च पिण्डिलः ।
पुंसि सेतुर्वरण्डः स्यात्समुद्रास्थ संवरः ॥ ५१ ॥
आवालमालवालोऽस्त्री पुंसि त्वावाप उच्यते ।
द्वयोः प्रणाल्यम्बुपथो घट्टः स्यात्तीर्थमस्त्रियाम् ॥ ५२ ॥
सिन्धुः स्त्री ह्रदिनी धुनी च तटिनी जम्बालिनी वाहिनी
कर्पूर्निर्झरिणी समुद्रगृहिणी शैवालिनी वार्वहा ।
स्रो[67a]तस्वत्यपगा नदी जलधिगा स्यान्निम्नगाप्यापगा ।
कुल्या द्वीपवती सरिद्गिरिभवा धेना च कूलंकषा ॥ ५३ ॥
तरङ्गिणी स्वर्णवर्णा रोधोवक्रा सरस्वती ।

---

2276 A चवोल ४. –[b]) B जलनील° for जलाष्टील°
2277 B तलं च तत् तलोऽस्त्रियाम्
2278 For lines 2278–82, B subst.:
देवद्वाराम्बाशयेऽस्त्री देवखातमखातवत् ।
कुंडं च न स्त्रियः पद्माकरः कूलंपरे स्त्रियः ॥ ५१ ॥
तडागश्च तडाकः स्यात्तटाकोय सरो न ना ।
रसं तुलांगः कासारमस्त्री तत्सरसी महत् ॥ ५२ ॥
वेशन्तकस्तो पुंस्यल्पो तस्मिन्पल्वलमस्त्रियाम् ।
2280 A पद्माकर ६
2281 A सर ४ श्च
2282 A तल्ल ३
2283 A °सरसं १. –[b]) B नामज (corrupt). A °सरसं १
2284 A खेयं ३. –[b]) B पारिखेयी तदर्हभूः
2285 A पारिखेयी १. –For lines 2285–89, B subst.:
नितयेद्विबेले तु स्याट्टंकोऽस्त्री तोयसंयुते ॥ ५४ ॥
आधारस्त्वंभसां बन्धोथावापो जलपिंडिलः ।
अलवालोऽप्यालवालमावालो न स्त्रियां त्रयः ॥५५॥
2286 A बिलटंको १
2287 A आधारो १ भोबंधनं २
2289 A त्वावाप ३
2290 B त्रिषु for द्वयो॰. A °पथो २; °तीर्थं २
2294 A कन्या
2295 For lines 2295–6, B subst.:
हिरण्यवर्णोर्मिमती रोधोवक्रा सरस्वती ।
स्रवंती च तल्वेदा स्याद्द्रा धोतो नदिस्यपि ॥ ५७ ॥

स्रवन्ती च तलोदा स्याद्ध्रदा स्रोतस्तु न स्त्रियाम् ॥ ५४ ॥
गिरेर्नदी गिरिणदी तथा गिरिनदी मता ।
क्लीबाव्ययं चोपनदं तथोपनदि च स्मृतम् ।
सप्तगोदावरं सप्तगङ्गं द्वियमुनं तथा ।
देशे तून्मत्तगङ्गं स्यात्तथा लोहितगङ्गकम् ।
पारेगङ्गं तु गङ्गायाः पारे पूर्ववदीरितम् ।
वहो नदो भिद्य उद्ध्यः सरस्वत्सम(स?)सिन्धवः ।
हिरण्यबाहुः शोणः स्यात्स्वर्णवाहोऽप्यसौ भवेत् ॥ ५५ ॥
शणीरः पुंसि शोणस्य मध्यस्थं पुलिनं भवेत् ।
गङ्गा विष्णुपदी तथा सुरनदी सिद्धापगा स्वर्णदी
स्वर्वापी सुरदीर्घिका मकरगा नद्युत्तमा जाह्नवी ।
त्रिस्रोता हरशेखरा त्रिपथगा भागीरथी भीष्मसूः
प्रोक्ता हैमवती कुमारजननी धर्मद्रवा स्यात्सिता ॥ ५६ ॥
मन्दाकिनी शंतनुकामिनी च व्योमापगा सा गदितर्षिकुल्या ।
[67b]शोणोदकान्तःसलिला तथैव सरस्वती.धातृसुता मता सा ॥ ५७ ॥
कालिन्दी रवितनया यमुना च यमस्वसाप्यसिता ।
तिसृणामासां सङ्गे त्रिवेणिरुक्ता मुनिप्रवरैः ॥ ५८ ॥
तीर्थराजः प्रयागोऽथ श्यामोऽक्षय्यो वटोऽत्रगः ।
पूर्वगङ्गेन्दुजा रेवा नर्मदा मेकलाद्रिजा ॥ ५९ ॥
गोदा गोदावरी गोला गौतमी चाभिधीयते ।
तपना तपती तापी सैत्वा(पा?) स्यात्तपनात्मजा ॥ ६० ॥
पूर्णा पयोष्णी शिप्रा तु क्षिप्रा मालवमालिनी ।
शतद्रुर्ना शुतुद्रिश्च विपाशा तु विपाट् स्त्रियाम् ।

---

2296 A स्रोत ३१ स्तु
2297 A गिरिनदी २
2298 A तथोपनदि २
2299 A °गंगं१ द्वियमुनं १
2300 A °गंगं१; °गंगकं १
2301 A पारेगंगं १
2302 A नदेः for नदो. A °सिंधवः ७
2303 A °नाहो ३
2304 A शणीर १; क्षोणस्य for शोणस्य
2308 B जह्नुजा for स्यात्सिता
2309 B °काल्पा for °कुल्या
2310 A धातृसुता १; B धातृसुधा
2311 A °प्यसिता ६; B सिता च यमी
2312 A त्रिवेणि १. B मुनिवरैः
2313 A प्रयागो २; °क्षय्यो २
2314 A मेकला आ ५
2315 A गौतमी ४
2316 A °नात्मजा ४
2317 A पयोष्णी २. –°) B शुभ्राच तत्समा for मालवमालिनी
2318 B क्षी for ना. A शुतुद्रि २

वैपाशायन्य-वैपाशौ वैपाशेयो विपाट्सुत(:) ॥ ६१ ॥
करतोया सदानीरा वितस्ता स्त्री वितस्तिका ।
चान्द्रभागी चान्द्रभागा चन्द्रभागा च चन्द्रिका ॥ ६२ ॥
सरयूः सरयुश्च स्त्री सारवं तद्भवे त्रिषु ।
दाविकं देविकाजातं कावेरी त्वर्द्धजाह्नवी ॥ ६३ ॥
बाहुदा बाहुदी च स्यादार्जुनी सैतवाहिनी ।
मौक्तिकाम्बा ताम्रपर्णी विष्णुखानिस्तु गण्डकी ॥ ६४ ॥
स्यात्कौशिकी [68a] मालिनी च वाशिष्ठी गोमती भवेत् ।
चर्मण्वती वेत्रवती वेणिका देविका मही ॥ ६५ ॥
भीमा कृष्णा तुङ्गभद्रा दुग्धिनी च शरावती ।
इरावती कर्मनाशा प्रणीताद्याश्च निम्नगाः ॥ ६६ ॥
अल्पा नदी सारणी स्यात्कुल्यानीका प्रजालिका ।
समौ संभेद-संवेधौ सरितोः संगमे मिथः ॥ ६७ ॥
आदायः संनिपातः स्यात्ताम्रपर्णीसमुद्रयोः ।
जानुदघ्नी जानुमात्री स्याज्जानुद्वयसी तथा ॥ ६८ ॥
जान्वादिकप्रमाणायां नद्यामन्यत्र मेधवत् ।
नाव्यं तु त्रिषु नौतार्ये नाव्या स्यात्स्त्री विक्रोपणे ॥ ६९ ॥

तरीस्तरन्ती तरणिस्तरी नौर्
वेडा च मङ्गिन्यपि तारणिश्च ।
न स्त्री तरण्डोऽप्युडुपश्च पादा-
लिन्दी स्त्रियां पुंसि तु कोल-भेलौ ॥ ७० ॥

---

2320 A सदानीरा२. -[a]) B तु for स्त्री. A पितस्तिका २
2321 A चन्द्रिका ४
2322 A सरयु २ श्च; सारवं १
2323 A दाविकं १; °जाह्नी २
2324 A °वाहिनी ४
2325 A °पर्णी२; गंडकी २
2326 A मालिनी च २. —After line 2326, B adds:
मुरंदला तु मुरला मुरलेन मुनन्दिनी ।
2327 A चर्मण्वती १ वेत्रवती १ वेणिका १ देविका १ मही१. B दविका for वेत्रवती
2328 A भीमा १ कृष्णा १ तुंगभद्रा १ दुग्धिनी १ च शरावती १
2329 A इरावती १ कर्मनाशा १
2330 B सल्पापानं for अल्पा नदी. -[b]) A प्रजालिका ४
2332 A आदायः १
2333 A °द्वयसी१.—For lines 2333–44, B subst.:
नावा तु तार्यां नाव्या सा कथिता स्वविशेष्यवत् ७५
सांयात्रिकः पोतवणिक् नौतर्नी तरित्तरीः ।
तरणिस्तारणीर्वेडा मंगिनी च द्रुणिः पुनः ॥ ७६ ॥
द्रोणी च काष्ठाम्बुवहा मंगस्तु स्त्री न नौधिरः ।
नौकादंडः क्षिपणिः स्त्री क्षेपणिः कूपकः पुनः ॥ ७७ ॥
गुणवृक्षो यत्र काष्ठे रज्जुभिर्बध्यते तरीः ।
पोतिका मध्यस्तम्भाः स्युः पाशालिकाश्च पंक्तिलाः ॥
2335 A नाव्यं १; नाव्या १

अम्भोरथेऽसौ प्लव आलु चान्तिमे
द्रोणिर्द्रुणिः काष्ठकृताम्बुवाहिनी ।
स्यात्क्षेपणिः स्त्री क्षिपणिश्च मङ्गिनी-
दण्डोऽथ मङ्गस्तरिमस्तकोऽस्त्रियाम् ॥ ७१ ॥

पोलिन्दा मध्यदण्डाः स्युः कूपको[68b]गुणवृक्षकः ।
कर्ण-नौरथ-केपाता अरित्र कोटिपात्रकम् ॥ ७२ ॥
काष्ठकुद्दालकोऽभ्रिः स्त्री वारुण्डो स्त्री च सेचनम् ।
सेकपात्रमथावाप आतरोऽनुतरं तथा ॥ ७३ ॥
तरपण्यं तारकस्तु कर्णधारश्च नाविकः ।
* * * * * * * * बोहित्थं वहनं तथा ।
तस्मिन्प्रवहणं तर्त्तरीकमप्यन्तिमे मतम् ।
पोतवाहः पोतवहो नियामश्च नियामकः ॥ ७५ ॥
स्यर्धनावं त्वर्धनावी नावार्धे न नृलिङ्गके ।
द्विनावं च त्रिनावं च पञ्चनावं समाहृतौ ॥ ७६ ॥
त्रिष्वतीतनु यन्नावमतिक्रान्तं भवेदिह ।
द्विनावरूप्यो यो द्वाभ्यां नौभ्यामभ्यागतो भवेत् ॥ ७७ ॥
नावा तरन्नाविकः स्यान्नाविका स्त्री च तादृशी ।
बाहुका घटिकश्चैवं मता गौपुच्छिकादयः ॥ ७८ ॥
स्त्री गौपुच्छिक्यौडुपिकी तथा माङ्गिनिकीति च ।
तरिपस्तु तरीता स्याच्चरकश्च तरश्च सः ।

---

2340 आलु ८
2341 A द्रुणिः २
2343 A दंडो ३ थ; °मस्तको २
2344 A पालिंदा १; °वृक्षकः २
2345 B transp. lines 2345 and 2346. B °केपातावरित्रं
2346 A °कोभ्रिः २; नारुंडो २
2347 For lines 2347–50, B subst.
यानपात्रं प्रवहणं वहनं तर्त्तरीत(क)वत् ।
बोहित्थं च वह(हि)त्रं च वहितं पोत इत्यपि ॥८०॥
पादालिन्दी स्त्रियां कोळमेळावंभोरथः प्लवः ।
उडुपोऽस्त्री तरंडोऽपि न स्यादालु(!)नरस्त्रियो· ॥८१
तरपण्यं त्वनुतरमावापश्चातरो नरि ।
न नार्द्धनावी नावोऽर्द्धद्विनावादिसमाहृती ॥ ८२ ॥
त्रिषु द्विनावरूप्योऽथो नौभ्यामभ्यागतो भवेत् ।
(cf. l. 2355).
अतिनु स्यादतितरि ताभिः क्रीतं च पंचनु ॥८३॥
2348 A तरपण्यं४; नाविकः ३
2350 A °रीक ११
2352 A °नावी १. –For lines 2352–60, B subst.:
नाविकः कर्णधारोऽथ तरोपस्तरकस्तरः ॥ ८४ ॥
तरीताथ तरंतो ये वेन गोपुच्छकादयः ।
2353 A त्रिनावं १
2355 A °रूप्ये १
2356 A °न्नाविकः १
2357 A वाहुका १ घटिक १
2358 A °क्यौ१डुपिकी१; °निकी १ ति

पञ्चनौः पञ्चभिर्नौभिः क्रीतः क्लीबे तु पञ्चनु ॥ ७९ ॥
कैवर्तो जालिकश्छोटी धीवरो दाश-दाशकौ ।
न पुंसि जाली स्त्वानायः [69a] शणसूत्रं पवित्रकम् ।
संकोचोऽस्त्री मत्स्यबन्धः कुवेणी मत्स्यतूलिका ।
मत्स्याधानी मत्स्यपात्री तथा मत्स्यकरण्डिका ॥ ८१ ॥
बडिशं बलिशं क्लीबेऽथाल्पेऽस्मिन्बडिशी स्त्रियाम् ।
पलवः पञ्जरः खेटो मात्स्यिको मैनिकस्त्रिषु ॥ ८२ ॥
मत्स्यो मच्छो झषो मीनोऽण्डज आम्भसिकस्तिमिः ॥ ८० ॥
विसारः शकली शल्की पृथुरोमाप्सुजेस्चलौ ।
वैसारिणः संघचारी कण्टकी स्वकुलक्ष[क्ष]यः ॥ ८१ ॥
स्थिरजिह्वश्चानिमिष आत्माश्यप्सुचरस्तथा ।
स्याद्दण्डपालः शकुलः गडकः शकुलार्भकः ॥ ८३ ॥
रोहितो मत्स्यराजः स्यान्मद्गुरो राजशृङ्गकः ।
शृङ्गी तस्य प्रियोऽथ स्यात्पाठीनश्चित्रलोचनः ॥ ८४ ॥
सहस्रदण्डो वादालस्तथा रूप्योदरः स्मृतः ।
उलूपी पुंसि शिशुकः मोष(ष्टः?)स्तु शफरो द्वयोः ॥ ८५ ॥
स्याच्छ्वेतकोलकश्चाथ नडमीनश्चिलीचिमः ।
चिलीचिमीर्बृहन्मीनोऽम्भोधिजस्तिमिरित्यपि ॥ ८६ ॥
तिमिंगिलस्त्[69b]द्गिलः स्याच्चिमिंगिलगिलस्तथा ।

---

2361 A दासदोशकौ ६.–For line 2361, B subst.:
कैवर्तो धीवरो दासो दाशोऽथानाय आदिमे ॥८५॥
2362 A स्वानायः २. B नपुंसि जालं शाणं तत् for prior half –b) A पवित्रकं २
2363 A मत्स्यबन्धः २; B स्यान्मीनबंधः for ऽस्त्रीमत्स्यबन्धः
2364 A °करंडिका ५. –For 2364, B subst.:
मत्स्या*नी च छोटी च सैव स्यान्मत्स्यबंधनी ।
2365 B नावे for क्लिबे. –b) A बडिशी १. B मत्स्यवेधनमित्यपि.
2366 A खेटो १; B नद्यौ. B मत्स्यादेर्बंधनम्यकं for post. half.
2367 B मत्स्यो for मच्छो
2371 For line 2371, B subst.:
पुंभित्तः शम्पठो रोमपक्षः शैवो सुपिधिकः (?) ९०
मत्सी स्त्री दंडपालु(ल)स्तु शकुलः फलकः समाः ।
गडकः शकुलापत्यं चापतुंडस्तु चंचलः ॥ ९१ ॥
2372 A मत्स्यराजः २; °शृङ्गकः २. B om. स्यान्
2373 A शृंगी १. B प्रिया for प्रियो. –b) B पाठिनश्चित्रवल्लिकः.
2374 A रूप्योदरः ५. –For line 2374, B subst.:
मृदुपीठोऽथ वाद्दालो वदालो जालवालकः ।
सहस्रदंष्ट्रोऽप्यजन(!) प्रोष्टनदा तु सैरिणी ॥ ९३ ॥
2375 B उलपी. A शिशुकः २
2376 A °कोलक १. B नीलिचामश्चीलिचिमः for post. half
2377 B नडमीनोरक्तेक्षणः for post. half
2378 A तिमिंगिल १; °गिल १. –For line 2378, B subst.:

राघवः स्यान्महामीनो राजी राजीव इत्यपि ॥ ८७ ॥
शालः शालो महामत्स्या नन्द्यावर्तादयः परे ।
क्षुद्राण्डमत्स्यवृन्दं तु पोताधानं जलाण्डकम् ॥ ८८ ॥
क्रूरं जलचरं सत्त्वं यादोऽन्त्ये मालवः पुमान् ।
यादोज्वरस्त्विन्द्रमदः शुण्डा तु जलहस्तिनी ।
कुम्भी कुम्भीर आलास्यो नक्रः स्याज्जलशूकरः ।
महामुखो गोमुखश्च शङ्खास्यस्तालुजिह्वकः ॥ ८९ ॥
शिशुमारो जलकपिः पलाङ्गश्चासिपुच्छकः ।
महारसोष्णवीर्यौ च स्यादुद्रोऽम्बुबिडालकः ॥ ९० ॥
जलप्लवोऽम्बुनकुलो नीराखुश्च वसी पुमान् ।
अवहारो नक्रराजो ग्राहो जलविराटकः ॥ ९१ ॥
जलाटकस्तन्तुनागो नाग-तन्तुणकावपि ।
पद्मग्राहर्ष्य-मकर-यादोभेदास्तु भूरिशः ॥ ९२ ॥
कर्कटो जलबिल्वः स्यात्पिङ्गचक्षुर्द्विधागतिः ।
तिर्यग्यानः कुलीरश्च कुरुचिल्लोऽपि शेगवः ॥ ९३ ॥
षोडशाङ्घ्रिश्चाथ कूर्मः क्रोड[70a]पादश्चतुर्गतिः ।
पञ्चाङ्गगुप्तो दौलेयो गुप्तः पारीरणस्तथा ॥ ९४ ॥
कमको(ठो?)ऽस्त्री कच्छपः स्याद्वालाङ्गो नरि जीवथः (?) ।
दुलिर्दुली कच्छपी च कर्कटी माघमा भवेत् ॥ ९५ ॥
गण्डूपदः किंचुलको गर्गः कुसूर्महीलता ।
गण्डूपदी शिली चाथ निहाका गोधिकापि च ॥ ९६

तिमिंगिलस्तुतिमुख (?) तिमिंगिलगिलोऽपरः ॥९५॥
कुलीरोऽस्त्री पिंगचक्षुस्तिर्यग्यानो बहिश्चरः ।
द्विधागः शेगवस्तात भक्षपार्श्वोदरप्रियः । ?
कुरचिल्लः षोडशाङ्घ्रिः कर्कटो [जल] बिल्ववत् ॥१०३
माघमा कर्कटी चाथ कूर्मे कमठकच्छपौ ।
चतुर्गतिः क्रोडपादः दमुह्ो हारजीवथा (?) ॥१०४॥

2379 A °मीनो२; राजीव २
2380 B सालः सालो. –°) B चिरल्लिप्रमुखाः परे
2381 A जलांडकं २
2382 A मालवः २
2383 A °मदः१ शुंडा १
2386 A °श्चापि for °श्चासि–
2387 B °सोल्पवीर्यौ
2388 A वसी६, B च सः for पुमान्
2389 B नक्रूरजो for नक्रराजो
2390 A °नागो ६
2391 B पंक॰ for पद्म–A मकर ३
2392 For lines 2392-4, B subst..
2394 A षोडशाङ्घ्रि ९
2395 B दोलेयो; B च सः for तथा
2396 B om, line 2396
2397 A कच्छपी३. B च कमठी for कच्छपी च.
—) B ग्राह्यो पंकगलाभिधा
2398 B transp. गर्गः and कुसूः
2399 A शिली२. B स्त्रियां for अपि च

लत्तिकापि स्त्रियां नित्यं भायो मूर्ध्नि जलौकसः ।
जलायुका जलौका च जलुका च जलाटनी ॥ ९७ ॥
रक्तपाम्भःसर्पिणी स्याज्जलूकाव्रणवेधिनी ।
मुक्तास्फोटोऽब्धिमण्डूकी शुक्तिरब्जोऽम्बुपोदरः ॥ ९८ ॥
त्रिरेखः षोडशावर्तः शङ्ख-कम्बू तु ना(नृ?)स्त्रियौ ।
दक्षिणावर्त्तशङ्खोऽस्त्री तस्मिन्वार्दरमन्तिमे ॥ ९९ ॥
क्षुद्रशङ्खः शङ्खनको नरि स्यात्क्षुल्लकोऽप्यसौ ।
शम्बूका शम्बुका द्वंद्वे जलडिम्बश्च वण्ठरः ॥ १०० ॥
जलशुक्तिर्घोङ्घपङ्कमण्डको श्वेतकस्तु ना ।
कपर्दश्च हिरण्यः स्यात्पणास्थिक-वराटकौ ॥ १ ॥
वराटिका वटी [70b] सोऽल्पः काकिणी ताश्च विंशतिः ।
दुर्नामा दीर्घकोशी स्यात्पङ्कशुक्तिः सितालिका ।
चिकिटः स्यान्महाशल्क इञ्चिका जलवृश्चिकः ॥ २ ॥
वर्षाभूः पुंसि मण्डूको हरिमैकः प्लवंगमः ।
प्लव-शालूर-सालराजिह्व-प्लवग-दर्दुराः ॥ ३ ॥
व्यङ्को नर्दकश्चाथ वर्षाभूः प्लवगी प्लवी ।
वर्षाम्वी वाथ मण्डूकापत्ये माण्डूकिरीरितः ॥ ४ ॥
माण्डूकेयश्च माण्डूको मण्डूकापत्यमङ्गना ।
माण्डूकायन्युच्यते सा स्थलजास्तु नरादयः ॥ ५ ॥
ते जले जलपूर्वाः स्युर्मत्स्याः संमूर्छनोद्भवाः ॥ ६ ॥

---

2400 A लत्तिका ३, B लत्तिकाथ द्वयोः क्लीबे for prior half
2401 B जलालोका for °युका; जलातटी for जलाटनी
2402 B च for स्यात्.—⁵) B जलसूची जलायुका
2403 A शुक्ति३ for शुक्तिर्. B चाथ for अब्जो
2404 B स्त्रियः दंतोज्जकं वरः for post. half
2305 A वार्दर २
2406 A क्षुल्लको ३
2407 For lines 2407–10, B subst.:
जलशुक्तिर्घोङ्घपंकमंडको वन्टरश्च सः ॥ ११० ॥
जलडिंबश्च शंबूकशंबुकौ न नपुंसके ।
वराटश्च कपर्दोऽशुभ्रश्वेतचूर्णः पणास्थिकः ॥ १११ ॥
हिरण्यं च त्रिषु स्वल्पे वटीद्वंद्वे वराटिका ।
2408 A °मंडको ३
2410 A वटी २
2411 A सितालिका ४
2412 A °वृश्चिकः २
2414 B–शालूर– for–सालरा–
2415 A नर्दक१३. B शालः for चाथ
2416 A वर्षाम्वी४. B याथ for वाथ
2417 A माण्डूको ३
2418 A °यन्युच्य १
2419 B om. ऊनो

पुटकिनी नलिनी च मृणालिनी
    भवति पङ्कजिनी वसुपर्णिका ।
विसवती बिसनाभिरिमाः स्त्रियः
    कुमुदिनी कथिता च कुमुद्वती ॥ ७ ॥
राजीवं कमलं नलं शतदलं पङ्केरुहं पङ्कजं
    पाथोजं सरसीरुहं सरसिजं नालीकमम्भोरुहम् ।
अम्भोजन्म कुशेशयं च जलजं कंजं करुट् पुष्करं
    श्रीपर्णं च सहस्रपत्रम[71a]रविन्दाह्वं कचारं तथा ॥ ८ ॥
स्त्री नोत्पलं तामरसं च सारसं
    बिसप्रसूनं सरसीरुहं च ।
प्रोक्तं तु पद्मं नलिनं च न स्त्रियां
    श्रीवासमत्राम्बुजमस्त्रियां च ॥ ९ ॥
स्त्री नोत्पलं कुवलयं कुवलं कुवं च
    श्वेतं तु कैरवमिदं [कुमुदं] कुमुच ।
स्याद्गन्धकान्तमपि गर्दभ-गन्धसोमे
    इन्दीवरं त्वसितमुत्पलमामनन्ति ॥ १० ॥
सौगन्धिक-कह्लारे हल्लकमपि रक्तसंध्यकं तुल्यम् ।
स्त्री कर्णिका न तु पुमान्नाजा(स्त्वब्ज ?)नालं सरोजस्य ॥ ११ ॥

---

2420 For lines 2420–46, B subst.
मृणालिनी कमलिनी नलिनी पुटकिन्यपि ।
बिसनाभिः कैरविणीकुमुदिन्यौ कुमुद्वती ॥ ११७ ॥
    कुशेशयं तामरसं सहस्र-
        पत्रं कचारं च बिसप्रसूनम् ।
    श्रीपर्णराजीवबीसप्रसून-
        श्रीवासवार्जन्ममहोत्पलानि ॥ ११८ ॥
    सरसीरुहे सरसिजं च सरोजं
        शतपत्रपंकजकजानि सरोरुट् ।
    अरविन्दवारिरुहसारसपंके-
        रुहपंकरुट्सलिलरुहनळ च ॥ ११९ ॥
स्यात्पुष्करं च नलिनं त्रिषु पद्ममस्त्री
    नालीकवत्कमलमम्बुजमेवमेव ।
रक्तोत्पलं भवति कोकनदं च रक्ते
    तस्मिन्सिते त्वतितरामपि पुण्डरीकम् १२०
उत्पलकुवले न स्त्री कुवलयमन्त्ये कुवं कुवेलं च ।
श्वेते कैरवकुमुदी गर्दभयज्ञ च गन्धगोमं च ॥ १२१
कन्दोद(ट)गन्धकाते निशाहवं स्त्री न कुमुदं च ।
नीले त्वसितमिन्दीवरमिन्दीवरनीलाब्जे ॥ १२२ ॥
कह्लार सौगंधिकमथ हल्करकासंध्यकेतुतुल्ये (?) ।
स्त्री कर्णिकाम्बुजानां वराटको बीजकोपश्च ॥१२३॥
    बिसं त्रिसं तंतुलमब्जजालं
        त्रय्या मृणालं च नभोऽस्य सूत्रम् ।
    न ह्यम्बुजाद्यालिषु शंडषंडौ
        सवर्तिकाब्जादि दलं नवं यत् ॥१२४॥
करहाटकर्व(दे)टौ द्वौ कंदो न स्त्री धिकाब्जानाम् ।
शालूकमुत्पलानां केसरकिञ्जल्ककेस(श)रा न स्त्री ॥
नालानाल्यौ त्रये *इमं दंडेऽस्त्री ऋषभो ज्वरः । (?)
2422 A बिसनाभि ७
2423 A कुमुद्वती २
2431 A °मत्रांबुज २०
2432 A कुवं च ४
2436 A–कहारे२; °संध्यक २
2437 A नाल २

त्र्यां मृणालं बिस-तन्तुले नभः
क्लीबे लिशं चाथ गणेम्बुजादिनः ।
पण्डश्च शण्डो गदितौ किलास्त्रियां
कन्दः शिफा स्त्री करहाट-कर्दटौ ॥ १२ ॥
अट्टो(?)निशाहसोऽप्यत्र शालूकं तूत्पलादिनः ।
निर्वृत्तादौ कौमुदिकं तथा कुमुदिकं त्रिषु ।
सूक्ष्मकन्दः कन्दलः स्यात्रिलिङ्ग्यां समुदीरितः ॥
वराटको बीजकोशः कर्णिका केसरः पुनः ।
न स्त्री केशर-किञ्जल्कौ दलं संवर्तिका नवम् ।
पद्माक्षं पद्मबीजं स्यात्का[71b]लोड्यं(?) पद्मकर्कटी ॥
जलालुकं पद्ममूलं शृङ्गाटं जलकण्टकः ॥ १२ ॥
पद्मचारिण्यतिचरा पद्मा पद्मावती च सा ।
चारटी गन्धमूला च लक्ष्मीः श्रेष्ठा सुपुष्कला ॥ १३ ॥
त्रिकस्त्रिकोणस्त्रिकटो वारिपर्णी तु कुम्भिका ।
वृकधूमो ढण्टणश्च हठः पानीयपादपः ।
वारासनं वाःसदनं पर्णसिर्जलमन्दिरम् ।
समुद्रगृहमिलाहुर्जलयन्त्रनिकेतनम् ॥ १४ ॥
धारायन्त्रं प्रणालीभिर्यत्र वारि प्रणीयते ।
करपत्रं जलक्रीडा व्यात्युक्षी करपत्रिका ॥ १५ ॥
इत्थं परात्म-सद्व्योम-काल-धी-नाट्य-वारिभिः ।
वर्गैः सप्तभिराम्नातः स्वःकाण्डः साङ्ग आदिमः ॥ १६ ॥
इति श्रीविश्वनाथविरचिते कोषकल्पतरौ स्वर्गकाण्डः
प्रथमः समाप्तः ॥ १ ॥ श्री ॥

2439 A त्रिशं ५
2446 A-किञ्ज-कौ ३
2447 A °कर्कटी ४
2448 A °मूले१.—For lines 2448-53, B subst.:
जलालुकं पद्ममूलं पद्ममूलं स्थलपद्मं तु सनकः ।
त्रिकस्त्रिकोणस्त्रिकटः शृङ्गाटोऽप्यंबुकण्टकः ॥१२७॥
कुम्भीके वारिपर्णी स्याद् टेरको वृकधूमकः ।
हठः पानीयपादोऽपि पद्मा पद्मवती चरा ।
चारटी गन्धमूला श्रीः सुपुष्पा मरुपारिणी ।
2449 A ष्ठा २
2450 A सुपुष्कला १
2451 A त्रिकटो ५
2453 A °मंदिरं ४
2454 A °गृह १
2456 After line 2456, B reads इति जलवर्गः
2457 For lines 2457-8 and the colophon, B subst.:
श्रीविश्वनाथरचिते कोषकल्पतराविह ।
वर्गैः सप्तभिराम्नातः स्वःकाण्डः साङ्ग आदिमः ॥१०
इत्यं स्वर्गकाण्डिनादिनाभिधर्मशास्त्रकोशस्थ-
महाकविश्रीविश्वनाथरचिते सरलोषकल्पद्रुमे ।
यः स्वर्गः सुधियां मुदे कृत परात्मस्तबिरकाश्रयी
मात्मादिगोपनलामके[illegible] वर्गैः द्रुमैः शाखिभिः ॥
इति स्वःकाण्डः । १ । श्रीः

श्रीमन्मङ्गलमूर्तिर्जयति ।

मही महीयसी यस्य सर्वबीजा तनुस्तनुः ।
शंभोर्नमास्यहं[तस्मै] कुर्वे सर्वैनसां छिदे ॥ १ ॥
पृथ्वी-पुर-धरारण्यौषधि-सिंह-नर-द्विजैः ।
क्षत्र-विड्-वृषलैः साङ्गैर्वर्गैर्भूकाण्ड उच्यते ॥ २ ॥
भूः पृथ्वी पृथिवी रसा च पृथवी धात्री धरित्री धरा
भूमिर्भूर्णिरिला अुरिग्वसुमती क्षोणी क्षितिः क्ष्मा क्षमा ।
गौर्गोत्रा जगती स्थिरा कुरवनिर्विश्वाथ विश्वंभरा-
ऽनन्ता ज्या च वसुंधरा च वसुधा सर्वंसहा मेदिनी ॥ ३ ॥
उर्वीराम्बुधिमेखला च विपुला स्याद्रत्नगर्भाचला
मह्यम्भोनिधिनेमिरब्धिवसना रत्नप्रसूर्बीजसूः ।
गन्धाम्बा धरयित्रिका च धरणिः स्याद्भूतधात्री धरा-
धारा तत्र च काश्यपी च बलजा दक्षा न ना रोदसी ॥ ४ ॥
भरिमा सहुरिश्च स्त्री रोदसी भूरिहाव्ययम् ।
द्यावापृथिव्यौ रोदस्यौ द्यावाभूमी च रोदसी ॥ ४ ॥
दिवस्पृ[2a]थिव्यौ स्तो द्यावाक्षमे क्लीबे तु रोदसी ।
उर्वरा सर्वसस्योर्वी सोन्नता मालमन्तिमे ॥ ५ ॥
प्रवणः क्रमनिम्ना भूर्निपत्या सातिपिच्छला ।
पट्टस्तु शासनं राजदत्ता भौमं तु भूमवे ॥ ६ ॥
मृन्मृत्तिका विकारेऽस्या मार्त्तिको मेद्यलिङ्गकः ।
मृत्सा मृत्स्ना प्रशस्ता सा क्षारा तृषा द्वयोरुषः ॥ ७ ॥
उषवानूषवांलव्यामूषरश्चोषरेरिणौ ।
स्थलं स्थला कृत्रिमं तत्स्थली तु स्यादकृत्रिमम् ॥ ८ ॥
कृष्णभूमः पाण्डुभूम उदग्भूमो द्विभूमकः ।
कृष्णादिभूमिके देशे कृष्णभूमादयस्त्रिषु ॥ ९ ॥

☞ The readings given below are from the only MS. designated A, as MS. D ends with the first Kāṇḍa.

2472 वलजा
2473 भू ५६ रिहाव्ययं १
2475 रोदसी ७
2476 उर्वरा १. माल १ मतिमे
2477 निपत्या १
2478 पदस्तु शासन २, तौमं १ for भौमं.
2479 मन्मृत्तिका २; मार्तिको १
2480 मृत्स्ना २; द्वयोरुषाः २
2481 °रेरिणां ४
2482 स्थलं १ स्थला १, स्थली १
2483 पाडुभूम १ उदग्भूमो १ द्विभूमकः १

मरुर्धन्वा जाङ्गलोऽथ जगती वैष्टकं जगत् ।
भुवनं विष्टपं चास्त्री पिष्टपं विश्वमन्तिमे ॥ १० ॥
लोकोऽथ लोकधातुः स्याज्जम्बूद्वीपं तु न स्त्रियाम् ।
इलावृतं तु फल्मूर्मर्तो भूर्लोक उच्यते ॥ ११ ॥
भुवर्लोकः स्व(सुव)र्लोको महर्लोकादयोऽपरे ।
[2b] लोकोऽयं भारतं वर्षमस्त्रियां वर्समित्यपि ॥ १२ ॥
पुंसि स्याद्विषयो देशो निर्गश्चकं च मण्डलम् ।
उपवर्तनमन्त्येऽथ नीवृत्स्त्री राष्ट्रमस्त्रियाम् ॥ १३ ॥
पुमाञ्जनपदश्चाथ वृत्तिर्जानपदी भवेत् ।
जाता जनपदे याथ नदी यावच्छरावतीम् ॥ १४ ॥
देशः प्राग्दक्षिणः प्राच्यः स्यादथोदीच्यपश्चिमः ।
उदीच्यः स्यादथ म्लेच्छदेशः प्रत्यन्त उच्यते ॥ १५ ॥
हिमवद्विन्ध्ययोर्मध्यं यत्प्राग्विनशनादपि ।
प्रत्यगेव प्रयागाच्च मध्यदेशः स मध्यमः ॥ १६ ॥
राष्ट्रियस्त्रिषु राष्ट्रे यः कृतक्रीतादिको भवेत् ।
दैशिकः स्याद्वैषयिको देश्य–माण्डलिकावपि ॥ १७ ॥
षष्ठ्यादियोजनोन्मानो देशो देशान्तरं भवेत् ।
आर्यावर्तः पुण्यभूमिर्जन्मभूमिश्च सा भवेत् ॥ १८ ॥
आचारवेदिरप्युक्ता मध्यं विन्ध्यहि[3a]मागयोः ।
गङ्गायमुनयोर्मध्यमन्तर्वेदिः समस्थली ॥ १९ ॥
ब्रह्मावर्तः सरस्वत्या दृषद्वत्याश्च मध्यतः ।
धर्मक्षेत्रं कुरुक्षेत्रं पञ्चरामहृदान्तरम् ॥ २० ॥
क्लीबे विनशनं तस्मिन्ब्रह्मवेदिः स्त्रियां भवेत् ।
त्रिषु शैवः शिवीनां यो देशोऽस्त्यत्यन्तशीलितः ॥ २१ ॥

---

2485 जांगलो १
2488 फल्भू २
2489 भुवर्लोकः १ स्वर्लोको १ महर्लोक १ ९°
2490 वर्स २ मि°
2492 उपवर्तन ६
2493 °पद१; जानपदी १
2495 प्राच्य १ स्याद°
2496 उदीच्यः १; प्रत्यंत २
2497 For lines 2497–8, cf. manu 2. 21
2498 मध्यमः २
2499 राष्ट्रिय १
2500 वैषयिको २
2501 देशांतरं १
2503 °वेदि°र°
2504 समस्थली २
2505 ब्रह्मावर्तः १
2507 ब्रह्मवेदिः ५
2508 शैवः १

राजन(न्य)कस्तु राजन्यदेशो वैराटकीस्तथा ।
एवं शैलूषको दैवयाजकः पौत्रकोऽपि च ॥ २२ ॥
स्याद्गौरिकिविधं मौलिकिविधं च नपुंसके ।
स्यादेषुकारिभक्तं * * * * * * * * * ।
* * * * * * * * * * * * पि नड्वलः ॥ २४ ॥
एवं वेतसकीयः स्याद्वेतस्वान्बहुवेतसः ।
कुमुद्वान्कुमुदावासो महिष्मान्महिषाश्रयः ॥ २५ ॥
शाद्वलः शादहरितः पङ्किलः पङ्कसंयुतः ।
उत्करीयस्तूत्करवान्पलाशीयः पलाशवान् ॥ २६ ॥
तृणादिभिस्तु निर्वृत्तस्तृणशः पर्णशस्त[3b]था ।
अश्मरस्त्वश्मवान्देशो गुडरः खण्डरस्तथा ॥ २७ ॥
कुञ्चायाः कुञ्चकीयोऽसौ तक्षणः स्यात्तक्षकीच[य]कः ।
औदुम्बरो बाल्वजश्च पार्वतस्तत्तदन्वितः ॥ २८ ॥
प्रागधः स प्रगदिनी कौविदार्यस्तु तद्युतः ।
स्यान्नदीमातृको देशो यः स्यान्नद्यम्बुपालितः ॥ २९ ॥
वृष्ट्यम्बुपालितो देशः प्रोच्यते देवमातृकः ।
मधुमान्मधुसंपन्न आसन्दीवांस्तु तद्युतः ॥ ३० ॥
सौराज्ययुक्तु राजन्वान्राजवांस्तु ततोऽपरः ॥ ३१ ॥
प्राग्ज्योतिषाः कामरूपा अङ्गार्धयो(श्चम्पो)पलक्षिताः ।
वङ्गाः स्युर्हरिकेलीयास्त्रैपुरा डाहलाः स्मृताः ॥ ३२ ॥
डाहालाश्च डहालास्ते कौङ्कणाः कुङ्कणा अपि ।
आङ्गका वाङ्गकाश्च स्युस्त्रिषु तद्भक्तयो हि ये ॥ ३३ ॥
अवन्तयो मालवाः स्युर्मागधाः कीकटाभिधाः ।
आवन्त्यः स्यादवन्तीशस्त्रि[4a]ष्ववन्ती तदीश्वराः ॥ ३४ ॥

2510 शैलूषको १ दैवमाजकः १ पौनको १
2511 मौलिकिविधं २
2513 नड्वलः ३
2514 °वेतसः ३
2515 °वासो२; °श्रमः २
2516 °हरितः१; °संयुतः १
2517 °रवान्२; °शवान् २
2518 तृणसः १ पर्णस १
2519 °श्मवान्दे२ शो गुदरः १
2520 °कीचकः १
2521 औदुंबरो १ बाल्वज १ थ पार्वत १
2522 प्रागधः१; °दार्य १ स्तु
2523 °मातृको १
2524 °मातृकः १
2525 मधुमा१; °न्दीवां १ स्तु
2526 राजन्वान् १ राजवां १,स्तु
2527 कामरूपाः २
2528 °केलीया २
2529 डहाला४स्ते; कुंकणा २
2530 आंगका १ वागका १
2531 स्यूसगिधाः for स्युर्मागधाः
2532 आवंत्सः१; °ष्ववंती १

देशाश्चैयाश्चेदयः स्युर्मरवस्तु दशेरुकाः ।
साल्वाः स्युः कारकुक्षीयाः साल्वकस्तद्भवो नरः ॥ ३५ ॥
पदातिस्त्वेष साल्वः स्याद्यवागूर्गौश्च साल्वका ।
साल्वि[स्तु ?] साल्वराजः स्याद्बहुत्वे साल्वयो मताः ॥ ३६ ॥
जालंधरास्त्रिगर्ताः स्युस्तद्भूस्त्रैगर्तकस्त्रिषु ।
कश्मीराः स्युर्माधुमतास्ताजीकास्ताजिकाभिधाः ॥ ३७ ॥
वाहीका वाह्लिकाः सारस्वतास्तु स्युर्विकर्णिकाः ।
वाहीका द(ट)क्कसंज्ञाः स्युः कारूषाः स्युर्बृहद्गृहाः ॥ ३८ ॥
खशास्तुरुष्का हूणाः स्यू रोमकाः साखयश्च ते ।
वनायवः पारसीका अरव्याश्च समार्थकाः ॥ ३९ ॥
प्रोक्ता मुरण्डा लम्पाकाः सौवीराः स्युः कुसालकाः ।
आनर्तास्तु सुराष्ट्राः स्युस्तीरभुक्तिस्तु निच्छविः ॥ ४० ॥
प्रभासं सोमतीर्थं स्याद्दशार्हाः सा[4b]त्वताश्च ते ।
यदवः कुकराः प्रोक्ता दशार्णा अपि तत्समाः ॥ ४१ ॥
उशीनराः क्षीरपाणा राढाः सूला(सुह्माः)प्रकीर्तिताः ।
स्यात्सौघ्नागरः स्रुघ्ननगरे त्रितये भवः ।
पञ्चापाः स्युः पञ्चनदाः सिन्धवः सिन्धुलक्षिताः ॥ ४२ ॥
सिन्धुकः सैन्धवश्च स्यात्सिन्धुजन्मादिषु(त्रिषु) ॥
प्रत्यग्रथास्त्वहिच्छत्राः केरलौड्रौत्कलाः समाः ॥ ४३ ॥
कुन्तला उपहाराः स्युरान्ध्रास्तैलङ्गनामकाः ।
देशभेदास्तु पञ्चाला मत्स्या मद्राश्च गुर्जराः ॥ ४४ ॥
काम्बोजा दरदाश्चोलाः शकाश्चीनाश्च पुण्ड्रकाः ।
कर्णाट द्रविडा लाटाः कुरु-कोशल-काशयः ॥ ४५ ॥

2533 °श्चेदयः२; दशेरुकाः २
2534 °कुक्षीया २ साल्वक १
2535 शाल्वका १
2536 साल्वि १; मताः १
2537 °गर्ताः२; °र्तक १
2538 माधुमता२; °जिका २ भिधाः
2539 °कर्णिकाः २
2540 °गृहाः २
2541 शाखय ५ च
2543 लंपाकाः २
2544 सुराष्ट्राः२; निच्छविः १
2545 °तात्र
2546 दशार्णा ३
2547 क्षीरपाणा२; सूला २
2549 °नदा२; °क्षिताः २
2550 सैंधव २ च
2551 °च्छत्राः २; °त्कला ३
2552 °हाराः२; तैलंग २
2553 पंचाला१; मद्रा १ च गुर्जराः २
2554 कांबोजा १ दरदा १ चोला १ शका १ चीना १ च पुंड्रकाः १
2555 करार्णाटा १ द्रविडा १ लाटाः १ कुरु १ कोशलकाशयः १

दशार्णाश्च महाराष्ट्रा विदर्भाद्या अपीतरे ।
काम्बोजराजः कम्बोजः पञ्चालाधास्तदीश्वराः ॥ ४६ ॥
कौरव्यः कुरुदेशेशः कुरुः स्त्री चेत्तदीश्वरा ।
नैषध्यो नि[5a]षधेशः स्यान्नैषध्योऽन्यः प्रकीर्तितः ॥ ४७ ॥
स्यात्सुपाञ्चालकस्तद्वत्सर्वपाञ्चालकोऽपि च ।
अर्धपाञ्चालकस्तद्वत्पौर्वमद्र इमे त्रिषु ॥ ४८ ॥
कुरुपाञ्चालसंभूतः कौरुपाञ्चाल ईरितः ।
कुरुजङ्गलजे कौरुजाङ्गलः कुरुजङ्गलः ।
कच्छोऽस्त्री सजले तस्मिंस्त्रिष्वनूपं च लञ्जकः ॥ ४९ ॥
आनूपं काच्छकं तज्जे विशेष्यवदुदीरितम् ।
कटः परिसरः पुंसि तस्मिन्पर्यन्तभूमिका ॥ ५० ॥
कर्मान्तः कर्मभूमिः स्याद्यज्ञवाटस्तु यज्ञकः ।
वास्तुरस्त्री वेश्मभूमिर्गोष्ठं गोस्थानमीरितम् ॥ ५१ ॥
गोगोष्ठं चाथ तद्भूतपूर्वं गौष्ठीनमन्तिमे ।
त्रिष्वाशितंगवीनं तद्गावो यत्राशिताः पुरा ॥ ५२ ॥
गोस्थानजः स्याद्गोस्थानो गोशालोऽप्येवमन्यवत् ।
वम्रीकूटं शक्रमूर्धं कृमिपर्वतवाचकः ॥ ५३ ॥
स्मीकः स्मिको वामलू[5b]रो वल्मीकमस्त्रियाम् ।
पाणिघमोऽन्यवत्पन्था योऽन्धकारादिसंवृतः ॥ ५४ ॥
पन्थाः पत्सल-चारौ निगमो मार्गः पथोध्व-पद्व्राजाः ।
पद्या-पद्धति-पदवी-सृति-वर्तन्येकपद्यश्च ॥ ५५ ॥
सरणिर्वर्त्मनि-वीथ्यौ शरणिः स्त्री चायनं वर्त्म ।
अतिपन्थाश्च सुपन्थाः सत्पथ एते पुमांसः स्युः ॥ ५६ ॥

---

2556 दशार्णा १, °राष्ट्रा १ विदर्भाद्या १
2557 कंबोज १ पंचाला १ धा°
2558 कौरव्यः १ कुरुदेशेश २ करू १
2559 नैषध्यो १ न्यः
2560 °लक १ स्तद्भू, °र्वो १ पि च
2561 °लक १, °मद्र १
2562 °पांचाल १
2563 °जंगल. २
2564 लंजक १
2565 काच्छकं २
2566 °भूमिका ३
2567 °भूमि २, यज्ञक २
2568 °भूमि २
2569 गोष्ठीन १
2570 °गवीनं १
2571 गोस्थानो १ गोशालो १
2577 वर्त्म २१
2578 सत्पथ ३

प्राध्वः स्यात्प्रहतः पन्थाः कान्तारोऽस्त्री स दुर्गमः ।
प्रान्तरं दूरशून्योऽन्त्येऽस्या[पन्था] अपथं भवेत् ॥ ५७ ॥
कदध्वा तु दुरध्वो व्यध्वोऽस्त्री विपथ-कापथौ ।
आरण्यकस्तु स भवेत्पन्था योऽरण्यसंभवः ॥ ५८ ॥
स्यात्प्रातिपथिकी प्रातिपथिकापेति तत्स्मृतिः ।
सुरङ्गा सन्धिला गूढमार्गो यः स्याद्भुवोऽन्तरे ॥ ५९ ॥
द्विपथं स्याच्चारपथस्त्रिपथं त्रिकमित्यपि ।
शृङ्गाटकं स्यात्संस्थानं चतुष्कं [च] चतुष्पथम् ॥ ६० ॥
चत्वरं च द्विपाध्वा तु मार्गो यः स्यादसंकुलः ।
घण्टापथो राजमार्गः श्रीपथश्चोप[6a]निष्क्रमः ॥ ६१ ॥
महापथः संसरणं तत्पुरस्योपनिष्करम् ।
चतुर्विंशत्यङ्गुलः स्याद्धस्तः किष्कुर्द्वयोर्भवेत् ॥ ६२ ॥
दण्डोऽस्त्रियां चतुर्हस्तो धनुरत्र न योषिति ।
हस्तषोडशकोन्माने दण्डे काण्डं न योषिति ।
धनुषां तु सहस्रे द्वे क्रोशः क्रोशद्वयं पुनः ॥ ६३ ॥
गव्यूतं गोरुतं गव्या गव्यूतिर्मिथुने तथा ।
योजनं मार्गधेनुः स्त्री भवेत्क्रोशचतुष्टयम् ॥ ६४ ॥
नल्वोऽस्त्रियां किष्कुचतुःशती हस्तशती च सः ।
पुंस्येकाहगमोऽध्वा स्याद्य एकाह्नेन गम्यते ॥ ६५ ॥
त्रिष्वाध्वीनो ह्यस्तासौ पथ्यं नापेतमध्वनः ।
तत्स्यादौत्तरपथिकं यदुत्तरपथाहृतम् ॥ ६६ ॥
यौजनीको योजनगो यौजनशतिकस्तु तच्छतं गच्छन् ।
गच्छेत्क्रोशशतं यः स क्रौशशतिक उदीर्यते सद्भिः ।

---

2579 कांतारो १
2580 प्रांतरं १; अपथं २
2582 °ध्वक १
2583 °दिका २
2584 संधिला २
2585 °पथ २ त्रिपथं त्रिक २
2587 चत्वरं५; द्विपाध्वा १
2589 °निष्करम् १
2590 किष्कु २
2591 धनु २ रत्न
2592 कांडं १
2593 क्रोशः १
2594 गव्यूति ५
2595 °धेनुः २
2596 नल्वो १
2597 °गमो १
2598 पथ्यं १
2599 °पथिकं १
2600 °नीको१; °शतिक १ स्तु
2601 °शतिक १

पान्थोऽध्वगोऽल्कः पथिकोऽध्वनीनो-
ऽध्वन्यः प्रवासागमथश्च गन्तुः ।
स्यादेशिकोऽयं पथि[6b]लोऽपि गातुर
गोतुश्च पान्था पथिकी तथा स्त्री ॥ ६८ ॥
दूरेत्य,आगतो दूरादौत्तराहस्तथोत्तरात् ।
हारिः स्त्रियां पान्थराजिः पाथेयं शम्बलोऽस्त्रियाम् ॥ ६९ ॥
त्रिषु सर्वपथव्यापी भवेत्सर्वपथीनकः ।
पथिकः स्यात्पथिबुद्धिः पथिका योषिदीदृशी ॥ ७० ॥
पन्थकः पथि जातो यः पथिका तादृगङ्गना ।
अत्यन्तीनोऽत्यन्तगामी मन्दगामी तु मन्थरः ॥ ७१ ॥
जाङ्घिको जवनो जङ्घाकरिको धावको जवी ।
जङ्घालस्त्वरितो वेगी तरस्वी जव इत्यपि ॥ ७२ ॥
स्यात्संदेशहरो दूतो दूत्यं तद्भाव-कर्मणोः ।
दूतः सौम्रः सुम्रगामी पन्था वा यदि तादृशः ॥ ७३ ॥

॥ इति पृथ्वीवर्गः ॥

पुरं त्रिलिङ्ग्यां नगरी न पुंसि
द्रङ्गो नृलिङ्गो निगमः स्त्रियां पूः ।
निवेशनं पत्तन-पट्टने च
स्थानीयमुक्तं पुटभेदनं च ॥ १ ॥
मात्रंशमथ यन्मूलनगरोपान्तगं पुरम् ।
तदभिष्यन्दि[7a]मणं शाखानगरमित्यपि ॥ २ ॥
भवेदुपपुरं गृह्या नौभिर्गम्यं च पत्तनम् ।
नौभिर्गम्यं पट्टनं स्यात्खेटोऽर्धपुरमस्त्रियाम् ॥ ३ ॥
अतिपूः शोभनपुरं पुरतुल्यं यथापुरम् ।
आयथापुरमेतस्य भावेऽयाथापुरं तथा ॥ ४ ॥

---

2605 °गोतु १३ श्च; पथिकी २
2606 दूरेत्य१; °राह १ स°
2607 शंबलो २
2608 °पथिदक: १
2609 पथिका १
2610 पन्थकः१; पथिका १
2611 °गामी२; मन्थरः २
2612 धातुको for धावको, जवी १
2613 जव १०
2614 दूतो १
2615 सौम्र- १
2620 मात्रेश ११
2622 गृह्या ४
2623 पुरम २
2624 शोभनपुरं२, यथापुर १ म्

द्विजानां पूर्द्विजपुरं वेशो वेशाजनाश्रयः ।
कोट्टो दुर्गं राजधानी स्कन्धावारश्च सा भवेत् ॥ ५ ॥
मथुरा स्यान्मधूपघ्नी मधुरा द्वारका पुनः ।
कुशस्थली द्वारवती भवेद्विष्णुपदी च सा ॥ ६ ॥
विशालावन्त्युज्जयिनी सेयं पुष्पकरण्डिनी ।
एतस्या निकटोद्यानं भवेत्पुष्पकरण्डकम् ॥ ७ ॥
माया तु स्याद्धरिद्वारं कान्तिः काञ्चिरुभे स्त्रियौ ।
विदेहा मिथिला चाथ गजाह्वं हस्तिनापुरम् ॥ ८ ॥
हास्तिनं च गया तु स्त्री गयपूरथ पुंसि ना ।
कन्याकुब्जं कन्यकुब्जं कौशं द्वंद्वे महोदयम् ॥ ९ ॥
कुशस्थलं गाधिपुरं [7b] कौशाम्बी वत्सपत्तनम् ।
चम्पा तु मालिनी लोमपादपूः कर्णपत्तनम् ॥ १० ॥
त्रिपुरी चेदिनगरी विदर्भा कुण्डिनं भवेत् ।
निषधा स्यान्नलपुरी दामलिप्तं तमालिनी ॥ ११ ॥
तामलिप्तं तामलिप्ती स्तम्बपूर्विष्णुमन्दिरम् ।
एकचक्रं चाथ पुष्पपुरं पाटलिपुत्रकम् ॥ १२ ॥
तद्भवस्तु त्रिलिङ्ग्यां स्यात्पूर्वपाटलिपुत्रकः ।
कोटिवर्षं बाणपुरं स्याच्छोणितपुरं च तत् ॥ १३ ॥
देवीकोटमुमारण्यमिन्द्रप्रस्थं तु दिल्लिका ।
माहिष्मती हैहयपूर्वह्निभाकारिणी च सा ॥ १४ ॥
माहिष्मतेयस्तज्जः स्यात्कौण्डिनेयस्तथा त्रिषु ।
सौवास्तवं सुवास्तोर्यददूरे नगरं भवेत् ॥ १५ ॥
वैदिशं वार्णशं चैवं विदिशादेरदूरजम् ।
दत्तामित्रेण निर्वृत्ता दात्तामित्री पुरी त्रिषु ॥ १६ ॥

---

2626 द्विजपुर१; °श्रयः २
2627 दुर्गं२; °वार १ श्च
2629 °पदी ४
2630 °करंडिनी ४
2631 पुष्करंटकं १
2632 °द्वार२, कांचि २
2634 हास्तिनं २
2636 गाधिपुर६; वत्सपत्तनं २
2638 °नगरी२; कुंडिनं २
2639 नलपुरी २
2641 एकचक्रं७; °पुत्रकम् ॥ २
2642 °पुत्रक १
2644 °रण्य५, दिल्लिका २
2645 °कारिणी १
2546 °ष्मतेय१, °नेय १
2647 सौवास्तव १
2648 वैदिश १ वार्णशं १
2649 दात्तामित्री १

वैधूमाग्नी विधूमाग्निनिर्वृत्ता नगरी भवेत् ।
सांकाश्यकस्तु सांकाश्ये भवः काम्पिल्य[8a]कस्त्रिषु ॥ १७ ॥
पूर्वेषुकामशम्युक्ता तद्भवस्त्री त्रिलिङ्गके ।
स्यान्नागरेयकः पौरो नागरो नगरोद्भवः ॥ १८ ॥
सकुत्सितः प्रवीणो वा भवेन्नागरकस्त्रिषु ।
स्यात्पौर्वनगरेयश्च यः पूर्वनगरीभवः ॥ १९ ॥
तथैव नान्दीपुरक एकचक्रिक इत्यपि ।
कास्तीरं तु द्वयोर्न स्यादीषत्तीरयुतं पुरम् ॥ २० ॥
पुरभेदा भजस्तुन्दं वत्सगुल्मं तथा परे ।
मुखं निःसरणं तुल्ये पुरोटिः पुरसंस्कृतिः ॥ २१ ॥
खगं साल्वपुरं सौभमथ तन्मायया कृतम् ।
गन्धर्वनगरं प्रोक्तमथ पांसुकुलं भवेत् ॥ २२ ॥
रथ्या प्रतोली विशिखा निषद्या हट्ट आपणः ।
क्रयारोहो महाघोषं जन्यं ग्राममुखं च तत् ॥ २३ ॥
अट्टोऽट्टी निगमो द्वंद्वे विपणिः स्याद्वणिक्पथः ।
क्रयस्थली पण्यवीथी वासनी विपणिर्द्वयोः ।
बहुमानवसंकीर्णं निर्मुंदं च कचङ्गनम् ॥ २४ ॥
वीथी गृह[8b]तटी हट्टी पलिघः शालगोपुरम् ।
शालः सालश्च वरणः प्राकारोऽथाश्मपीठमूः ॥ २५ ॥
वप्रः पुमान्वप्रमस्त्री नेमं * * * * * * ।
प्राकारीया इष्टकाद्या याः प्राकारहितास्त्रिषु ॥ २६ ॥
कपीशीर्ष(१)तु तस्याग्रं प्राचीनं वाटिका वृतिः ।
आवेष्टकोऽन्त्ये प्राचीरं कुड्य भित्तिश्च भित्तिका ॥ २७ ॥

---

2650 वैधूमाग्नी १
2651 साकाश्यक १, कापिल्यक १
2652 °शम्यु १ स्ता
2653 °रोद्भव ४
2654 नागरक १
2655 °रेय १ श्च
2656 °पुरक १ एकचक्रिक १
2658 °स्तुद १, °गुल्म १
2659 नि सरण १, °सस्कृति २
2660 सौभ ३
2662 विशिखा ४
2663 °मुखं ७
2665 विपणि ४
2667 हट्टी ३
2668 शाल. ३, प्राकारो ४
2669 नेम ३
2670 प्राकारीया १
2672 प्राचीर ५, भित्तिका ३

भवेदेडूकमेडोकं तदन्तर्न्यस्तकीकसम् ।
कन्था तु मृन्मयी भित्तिः प्राग्भारोऽस्यावतारभूः ॥ २८ ॥
स्यादिष्टकचिता या स्यादिष्टकाभिश्चिता त्रिषु ।
एवं पक्वेष्टकचिताथाश्रयो वृषयः पुमान् ॥ २९ ॥
ओकः पदास्पदे स्थानमल्युपघ्नोऽन्तिकाश्रयः ।
भीत्स्थानं तु गदितं चकितस्याश्रयो हि यः ॥ ३० ॥
अधस्पदं पदं चाधः शिरसस्तच्छिरस्पदम् ।
त्रिषु स्यात्प्रतिवेशी स्वगृहोपान्तगृहाधिपः ॥ ३१ ॥
वासो निवासो निलयो निवेशः
क्षयो निकाय्यावसथाश्रयाश्च ।
प्राणन्त(?)आवास इहा[9a]लयः स्यात्
संस्त्याय उक्तोऽत्र गृहा नृभूम्नि ॥ ३२ ॥
कुटिर्द्वयोः पुंसि न मन्दिरा स्यात्
स्त्रियां न गेहं भवनं च वास्तु ।
स्थानं च धानं वसतिश्च शाला
सभा निशान्तं च निकेतनं च ॥ ३३ ॥
आगारं स्यादुदवसितमगारं गृहं चोकमोको
वस्त्यं पस्त्यं सदन-शरणे सादनं धाम धामम् ।
धिष्ण्यं घर्त्रं विशिपकुलयुक् समवाथं च (?) घरं स्याद्–
वेश्याथास्मिन्मणिविरचिते न स्त्रियां कुट्टिमः स्यात् ॥ ३४ ॥
त्रिष्वावसथिको ह्यावसतिकान्तिकवासिनि ।
स्त्रियां त्वावसथ्युक्ता गोमुखं कुटिलं गृहम् ॥ ३५ ॥
अल्पकुड्यां कुटीरोऽस्त्री साटिस्त्वल्पगृहे स्त्रियाम् ।
जलवाट् जङ्गमकुटी कावारी मूर्धकर्पटी ॥ ३६ ॥
चतुःशालं चतुःशाली क्लीबे संजवनं भवेत् ।
चयुनं स्यादायतनं देवलो देवतागृहम् ॥ ३७ ॥

---

2673 एडोकं २
2674 कंथा१; प्राग्भारो १
2675 °कचिता १
2676 °कचिता १
2677 स्थान ६
2678 भीत्स्थानं १
2679 अधस्पदं १
2680 प्रतिवेशी २
2692 वेश्या४६; कुट्टिमः १
2693 °सथिको १
2694 °थ्यवस्तु १ था गोमुखं १
2695 कुटिरो१; साटि १ स्त°
2696 °कर्पटी ४
2697 संजवनं ३
2698 °गृहं ४

देवक्षितीशयोर्गेहे प्रासादः पुंसि संमतः ।
सौधोऽस्त्री[9b]नृभुजां गेहे हर्म्यं धनवतामिदम् ॥ ३८ ॥
बुद्धादेस्तु विहारोऽस्त्री चैत्यं गन्धकुटी स्त्रियाम् ।
आवसथ्यं क्लीबमावसथः पुंसि मठस्त्रिषु ॥ ३९ ॥
शिष्यवेश्मन्यथास्त्री स्यादुटजः पर्णशालिका ।
तृण्यागेहं कायमानं छप्परं मयटस्तथा ॥ ४० ॥
सप्तमः स्यात्कटकुटिः सौधाग्रं चन्द्रशालिका ।
आश्रमोऽस्त्री मुनिस्थानं सिद्धौकः क्षेत्रमस्त्रियाम् ॥ ४१ ॥
होत्रीयं स्याद्धविर्धानी प्राग्वंशः प्राक्तो गृहम् ।
आथर्वणं शान्तिगृहं कोशोऽस्त्री भाण्डमन्दिरम् ॥ ३० ॥
अपवरको गर्भगृहं भोगावासोऽपि शय्यौकः ।
इन्द्रकमास्थानगृहं संधानी कुप्यशाला स्यात् ॥ ३१ ॥
अरिष्टं सूतिकागारं गञ्जा स्त्री मदिरागृहम् ।
तैलशाला यन्त्रगृहं चित्रशाला तु जालिनी ॥ ३२ ॥
तन्तुशाला गर्त्तिका स्यात्सत्रशाला प्रतिश्रयः ।
आवेशनं शिल्पिशाला कर्मशा[10a]ला च सा भवेत् ॥ ३३ ॥
अन्वासनं चाथ कुम्भशाला पाकपुटी भवेत् ।
संदानिनी तु गोशाला वाजिशाला तु मन्दुरा ॥ ३४ ॥
गोशालः खरशालश्च तत्तच्छालाभवे त्रिषु ।
वत्सशालो वात्सशालो वाजिस्थानश्च तद्भवः ।
स्यात्पौर्वशाला पूर्वस्यां शालायां हि भवा त्रिषु ।
पूर्वशाला प्रिया यस्य पूर्वशालाप्रियश्च सः ।
चतुरं हस्तिशाला स्यादुष्ट्रगोष्ठं मयस्थलम् ।
वापशाला खरकुटी भवेन्नापितशालिका ॥ ३५ ॥

---

2700 सौधो१; हर्म्यं १
2701 °कुटी १
2702 मठ ३
2705 °कुटिः६; °शालिका २
2706 आश्रमो१; मुनिस्थानं २
2707 °र्धानी २
2708 आथर्वणं १
2709 गर्भगृहं २
2710 इंद्रक१; संधानी १ कुप्यशाला २
2711 अरिष्टं१; °गृहं २
2712 °गृहं२; जालिनी २
2713 गर्त्तिका२; °शाला १
2715 अन्वासनं४; °पुटी २
2716 गोशाला २
2717 गोशालः १ खरशाल १ श्च
2718 वात्सशालो१; °स्थान १ श्च
2721 हस्तशाला१; °स्थलं २
2722 वापशि ( corrupt ) for वापशाला; °शालिका २

प्रपा पानीयशाला स्याच्छ्रीग्रहः शकुनिप्रपा ।
रुय ※ ※ ※ ※ शुद्धान्तोऽस्त्री क्लीबे त्ववरोधनम् ॥ ३६ ॥
अन्तःपुरं च राज्ञां यत्स्त्रीजनस्य निकेतनम् ।
अट्टोऽस्त्र्यट्टालको द्वंद्वे क्षौमं कथितमस्त्रियाम् ॥ ३७ ॥
अन्नकोष्ठः कुशूलः स्याद्वलतो(?)ऽथोपकारिका ।
उपकार्याथ वलभी गृहोपरि कुटी मता ।
पूर्वेषां वसतिस्थानं भवेदभिजनः पुमा[10b]न् ।
आत्मना वसतिस्थानं निवासः परिकीर्त्यते ।
मण्डपोऽस्त्री जनस्थानमथ वातायनोऽस्त्रियाम् ॥ ३९ ॥
गवाक्षो जालकं जालीः सिंहद्वारं प्रवेशनम् ।
तोरणोऽस्त्री बहिर्द्वारं तदूर्ध्वं मङ्गलस्रजि ॥ ४० ॥
स्त्रियां वन्दनमाला स्याद्द्वारं बलजमन्तिमे ।
प्रतिहारः स्त्रियां च द्वाः पक्षद्वारं तु पक्षकः ॥ ४१ ॥
प्रच्छन्नमन्तर्द्वारं च तस्मिन्खिडक्किका स्त्रियाम् ।
बलजं गोपुरं कूटोऽस्त्री पुरद्वारि संमतः ॥ ४२ ॥
तत्क्षुप्राद्यभिनिष्पन्नं सौघ्नं माथुरमन्यवत् ।
द्वारपिण्डी तु वारुण्डी ※ ※ ※ ※ ※ ※ ※ ※ ।
द्वाराधोदारुणि शिला शिली नासा त्विहोर्ध्वगा ॥ ४३ ॥
उत्तरङ्गं मतं तिर्यग्द्वारस्योपरि दारु यत् ॥ ४३ ॥
शालारं स्याद्धस्तिनखः पुरद्वारावरोहणः ॥ ४४ ॥
स्तूपोऽस्त्रियां मृदां कूटोऽलिन्दस्त्वालिन्दकोऽस्त्रियौ ।
प्रघाण–प्रघणौ पुंसि बहिर्द्वार–प्रकोष्ठके ॥ ४५ ॥
स्त्रियां कक्षा प्रको[11a]ष्ठः स्यात्कलाची च निगद्यते ।
गृहावग्रहणी देहल्युम्बरोदुम्बराम्बराः ॥ ४६ ॥

---

2723 °शाला ३; छीद्वहः (corrupt)
2725 °पुरं ४
2726 क्षौमं ३
2727 °द्वलतो ३
2728 °कार्या २ थवलभी १
2730 निवासः १
2731 °स्थानं ४
2732 जाली ३
2733 °द्वारं ४
2734 °माला १
2735 द्वा°४; पक्षकः २
2736 खिडकिका ३
2737 कूटो ३
2738 सौघ्नं १ माथुर १
2740 नासा १
2741 उत्तरंगं १
2742 °नख. २
2744 °प्रघणौ ४
2745 कलाची ३
2746 °राम्बराः ५

नन्यावर्तादयोऽन्ये च भेदा वैच्छन्दका मताः ॥ ५९ ॥
संमार्जनी शोधनी स्याद्वर्धनी च समूहनी ।
भवेद्बहुकरीक्षिप्ते संकरोऽवकरस्तथा ॥ ६० ॥
अवस्करोऽवस्करजे स्यादवस्करकस्त्रिषु ।
संवसथः परिवसथः प्र[12a]तिवसथो पवसथौनिवसथश्च ।
※ ※ ※ ※ ※ ※ ※ ※ ※ ※ ※ ※ ग्रामः ॥ ५७ ॥
ग्रामार्धं पाटकः पुंसि ※ ※ ※ ※ ※ ※ ※ ※ ।
द्विशतग्राममध्ये यो महाग्रामो मनोहरः ।
स कर्वटः खर्वटोऽस्त्री भवेद्द्रोणमुखं पुनः ॥ ६२ ॥
चतुःशतग्राममध्ये महीयान्ग्राम उच्यते ।
ग्रामेवासो ग्रामवासो ग्रामेवास्यादयस्तथा ।
दर्दुरो ग्रामजालं स्याद्ग्रोमुखं तु विलेपनम् ॥ ६३ ॥
प्रकरी चत्वरमही ग्रामेया त्रिषु तद्धिता ।
ग्रामेयकस्तु कथितो ग्रामीणो ग्राम्य इत्यपि ।
दाक्षीग्रामीय उदितो यो दाक्षीग्रामसंभवः ।
एकग्रामीयमेवं स्यात्समूहे ग्रामता स्त्रियाम् ।
ग्रामान्त उपशल्यं स्यादत्र सीमेयनादिते (?) ।
अवधिर्घट आघाटः सीमा स्त्री सीम पुं सिमः ॥ ६४ ॥
स्थितिः स्युन्तोऽवसानं च मर्यादाथ तयोज्झिते ।
निःसीममपसीमं च क्लीबाव्ययमुदीरितः ॥ ६५ ॥
अल्पग्रामस्तु पल्ली स्याद्भवेद्ग्रामटिका च सा ।
[12b]पक्कणः शंबरावासो घोष आभीरपल्लिका ॥ ६६ ॥
वेदानामेष वैदः स्याद्गार्गो दाक्षश्च तादृशः ॥

। इति पुरवर्गः ।

---

2771 °वर्ता १८°
2773 °कर २ स्तथा
2775 °स्करक १
2776 ग्रामः ७
2779 खर्वटो२; °मुखं १
2782 दर्दुरो १
2783 °मही २
2784 ग्राम्य ३
2785 °ग्रामीय १
2786 °ग्रामीय १
2790 °मपसीमं ३
2791 °टिका २
2792 °वासो २
2793 वैदः१; गार्गो १ दाक्ष १

शिलोच्चयो ❊ ❊ भूभृद्धर-भूधर-पर्वताः ।
कुध्रः कुध्रीलः(?)कुट्टारो नगो भावाचलो गिरिः ॥ १ ॥
शिखरी सानुमानद्रिरहार्यः कन्दराकरः ।
वातंधमोऽपि जीमूतो दन्ती गोत्राग-कूटिनः ॥ २ ॥
अविर्वलाहकोऽस्योपगिरं स्यादुपगिर्यपि ।
उदयः पूर्वशैलः स्यादस्ताद्रिश्चाञ्जनागिरिः ।
उदगद्रिश्चाद्रिराजो मेनकेशो हिमालयः ॥ ३ ॥
हिमवांश्च हिमप्रस्थो भवानीजनकस्तथा ।
हिरण्यनाभो मैनाकः सुनाभश्च तदात्मजाः ॥ ४ ॥
मेनका तस्य कान्ताथ क्रौञ्चः कुञ्चोऽपि कौञ्चवत् ।
मलयोऽस्त्री दक्षिणाद्रिरापादे जकुटोऽस्त्रियाम् ॥ ५ ॥
माल्यवान्स्यात्प्रस्रवणो विन्ध्यः स्याज्जलवालकः ।
इन्द्रकीलो मन्दरः स्यान्मन्थाना[13a]द्रिरपि स्मृतः ॥ ६ ॥
शत्रुंजयस्तु विमलशैलो रैवतकः पुनः ।
उज्जयन्तः सुदारुस्तु पारियात्रक उच्यते ॥ ७ ॥
सुवेलस्तु त्रिमुकुटस्त्रिकूटस्त्रिककुच्च सः ।
रोहणो मणिगर्भः स्याच्छ्रीशैलः स्कन्दपर्वतः ।
गोवर्धनो हरिच्छत्रं महेन्द्रस्त्विन्द्रपर्वतः ।
लोकालोकश्चक्रवालश्चक्रवाडोऽपि कथ्यते ॥ ८ ॥
शैलभेदास्तु निषधो गन्धमादनमस्त्रियाम् ।
ऋक्षः सह्यश्चित्रकूटो भाकूटोऽन्ये च भूरिशः ॥ ९ ॥
हिमवान्हेमकूटश्च निषधो मेरुरेव च ।
चैत्रः शृङ्गी च कर्णी च सप्तैते वर्षपर्वताः ॥ १० ॥

---

2798 °हकोऽ६; °गिर्यं २ पि
2799 °शैले २ स्याद्
2801 °जनक ७ स्तथा
2802 °नाभो १ मैनाकः १ सुनाभ १
2803 मेनका१; कौंच ३ वत
2804 °रापाढे ३ जकुटो ४
2805 °वणो१; °वालकः २
2806 °नादि ३
2807 °शैलो २
2808 उज्जयंतः३; °यात्रक २
2809 °कक ४ च
2810 °गर्भः२; °पर्वतः २
2811 °च्छत्रं २
2812 °वाडो ३ पि
2813 निषधो१; °मादन २
2814 ऋक्षः १ सह्य १ श्चित्रकूटो १ भाकूटो १
2815 °कूट १ श्च निषधो १ मेरु १
2816 चैत्रः १ शृंगी १ च कर्णी १

महेन्द्र-शुक्ति-मलय-पारियात्रक-ऋक्षकाः ।
सह्यो विन्ध्य इमे सप्त कुलशैलाः प्रकीर्तिताः ॥ ११ ॥
पर्वतीयं पार्वतं च त्रिपु पर्वतजं फलम् ।
पर्वतीयो नरस्तादृक् नैषधं त्विदमादिशः ॥ १२ ॥
शैलाग्रं शृङ्ग-शिखर-कूटानि त्री[13b]णि न स्त्रियाम् ।
कूटनिः(?)स्त्री नितम्बोऽद्रेर्मेखला कटकोऽस्त्रियाम् ॥ १३ ॥
भृगुः प्रपातोऽप्यतटः स्त्रियां दरदपि स्मृता ।
बहिर्निर्गतदेशस्तु प्राग्भारो दन्तको गिरेः ।
द्रोणिस्तु शैलयोः संधिः पादाः प्रत्यन्तभूधराः ॥ १४ ॥
दरी गुहा कन्दरी च कन्दरास्त्रिपु कन्दरः ।
कटीरं गह्वरं त्वली स्नुः प्रस्थः सानुरस्त्रियौ ॥ १५ ॥
अधित्यका तूर्ध्वभूमिरासन्ना भूरुपत्यका ।
स्थूलोच्चयो गण्डशैलश्च्युतः स्थूलोपलो गिरेः ॥ १६ ॥
पाषाणः प्रस्तरो ग्रावा काठोऽश्माख्युपलः शिला ।
शिलेयं स्याच्च शैलेयं शिलावत्त्रिपु यद्घनम् ।
शिला दृषत्स्त्रियः पट्टः पेषणाश्मा दृषद्(?)स्त्रियाम् ॥ १७ ॥
घर्षनालः शिलापुत्रो गृहाश्मा गृहकच्छपः ।
घरट्टः पेषयन्त्रं स्याद्धुचकं गन्धपेषणी ।
भैषज्यपेषणी खल्वो नारकीटोऽश्मकीटकः ॥ १८ ॥
अमृताश्मो भवेज्जातौ पिण्डा[14a]श्मो नाम्नि च स्मृतः ।
आश्ममश्ममयं च स्याद्विकारोऽथाश्मनं परम् ॥ १८ ॥
उद्देशो गण्डकूपोऽद्रेः खनिः खानिः स्त्रियामुभे ।
आकरो ना द्वयोर्गञ्जा चाथाकरिक-खानिकौ ।

---

2817 महेंद्र १; °मलय १; ऋक्षका° १
2818 विंध्य १; °शैलाः १
2819 च २
2820 पर्वतीयो १; नैषधं १
2821 °कूटानि ४
2822 कटको ४
2823 दर ४ दपि
2824 °र्गतदे ४ प्राग्ध; दंतको १
2825 द्रोणि १ स्तु; पादाः १
2826 कंदर ४
2827 सानु ३
2828 °भूमिर, °रुपत्यका १
2829 °शैल २
2831 शैलेयं २
2832 दृषद ३
2833 °पुत्रो २; °कच्छपः २
2834 °यन्त्रं २; रुचकं १
2835 °कीटो १२ श्म°
2836 अमृताश्मो १; पिण्डाश्मो १
2837 °मयं २; °थाश्मनं १
2838 °कूपो २ द्रेः
2839 °गंजा ४

त्रिष्वाकरे नियुक्तौ यौ रुमा स्त्री लवणाकरः ॥ १९ ॥
रुमण्वाल्लवणाद्रिः स्यात्कवरं लवणं रुम ।
तीक्ष्णं क्षारं च न द्वंद्वे पट्टु वारिरसं तथा ॥ २० ॥
सैन्धवोर्मा( ना? ) माणिमन्थं माणिबन्धं यदुत्तमम् ।
वरं शीतशिवं चाथ रोमकं स्याद्रुमाभवम् ॥ २१ ॥
वसूकं वसुकं चाथ बिडं पाक्यं च कृत्रिमम् ।
सौवर्चलं हृद्यगन्धं रुचकं चाक्षमित्यपि ॥ २२ ॥
तद्दुर्गन्धं शूलहृत्स्यान्नीलकं यदि मेचकम् ।
तीक्ष्णं सामुद्रमक्षीवं वशिरः कटकोऽस्त्रियाम् ॥ २३ ॥
यवक्षारस्तु पाक्यः स्याद्यावशूको यवाग्रजः ।
यवनालज उक्तोऽथ स्वर्जिः सुग्वी सुवर्चिका ॥ २४ ॥
स्वर्जिका सर्जिकाक्षारः कापोतः सु[14b]सवर्चकः ।
योगवाही टङ्कणस्तु मालतीतीरसंभवः ॥ २५ ॥
रसशोधी पाचनको लोहश्लेषणकोऽपि सः ।
चूर्णोऽस्त्रिया सुधा तु स्त्री क्षारे ताम्बूलयौगिके ।
औद्भिदं पांसुजं शाकमरं तत्स्थानसंभवम् ॥ २६ ॥
धूर्तं तु खण्डलवणे ससृष्टे लवणस्त्रिषु ।
सैन्धवं रुचक पाक्यं सामुद्रं चौद्भिदं तथा ।
स्यात्पञ्चलवणं पांसूत्थेन षड्लवणं भवेत् ।
सौभाञ्जनपलाशास्तु क्तिलापामार्गमुज्ञुकैः (?) ।
यवजस्वर्जिकायुक्तैः क्षाराष्टकमुदाहृतम् ।
त्रिपु लावणिकः प्रोक्तो यः स्याल्लवणविक्रयी ।
धातुः पुमान्गैरिकोऽस्त्री रक्तधातुः गवेरुकम् ॥ २७ ॥
गिरिमृच्चवनीरक्त(?) मृदु स्यात्स्वर्णगैरिकम् ॥
शुक्लधातुः पाकशुक्ला कठिनी खटिनी खटी ॥ ५२ ॥

---

2840 °करः २
2841 °ण्वाद्रि. २; कवरं २
2842 °रस ६
2844 शीतशिवं ७
2845 वसुकं४, तथाक्य २ for पाक्य
2846 चाक्ष ४
2847 °जिलकं ३
2848 कटको ५

2850 °नालज ५
2852 °वाही २
2853 °पको ५ पि
2855 औद्भिद १ पासुज २ शाकंभर १
2856 धूर्त१, लवण १
2858 °लवण १
2861 °णिक १
2863 °रक्त५, °गैरिक १

सितरङ्गा मको(क्रो)लो ना गौरग्रावा सितोपलः ।
काक्षी काच्छी सती मृत्स्ना सौराष्ट्री पार्वती तथा ।
तुवरी पर्पटकं कंसोद्भवाढक्यौ मृत्तालिका ॥ २९ ॥
[15a]कालिका चाथ कासीसं धातुकासीस–खेचरे ।
स्याद्धातुशेखरं पुष्पकासीसं त्वक्षिभेषजम् ॥ ३० ॥
लोमशं कंसकं च स्यात्कुनटी तु मनःशिला ।
मनोगुप्ता नागमाता गोला दिव्यौषधिः शिला ॥ ३१ ॥
नागजिह्वा च नेपाली करवीरा च रोचना ।
रसनेत्री च पाली च मनोह्वा नागरक्तकम् ॥ ३२ ॥
सिन्दूरं चीनपिष्टं च नागरेणुश्च नागजम् ।
शृङ्गारभूषणं नागगर्भं श्रीमदपि स्मृतम् ॥
रक्तचूर्णं च गन्धारं रक्तवालुकमित्यपि ।
वसन्तमण्डनं चाथ हिङ्गुलिर्हिङ्गुलोऽस्त्रियाम् ॥ ३३ ॥
दारदो हंसपादः स्यात्कुरुविन्दोऽपि रक्तकः ।
मणिरागकरो म्लेच्छो नरि स्याद्रक्तपारदः ।
अर्बुदोत्थं सीससत्त्वं तथा चोदारसञ्ज्ञकम् ।
हरितालमलं तालमालं न स्त्री बिडालकम् ॥ ३४ ॥
वङ्गारिर्लोमहृद्विस्रगन्धि स्याद्वंशपत्रकम् ।
गोदन्तं पीतनं च स्यात्खर्जूरं पिञ्जरं समम् ॥ ३५ ॥
पीतनं पिञ्ज[15b]नं क्लीबे भवेत्तन्नटमण्डनम् ।
तुत्थं तुत्थाञ्जनः शस्तं शिखिग्रीवं मयूरकम् ॥ ३६ ॥
भूपातुत्थं कांस्यनीलं हेमतारं वितुन्नकम् ।
भवेत्कर्परिकासञ्ज्ञममृतासङ्गमञ्जनम् ॥ ३७ ॥
रसगर्भं तार्क्ष्यशैलं तार्क्ष्यजं तार्क्ष्यमित्यपि ।
रसाञ्जनं तुत्थदार्वी रसकाथसमुद्भवः ॥ ३८ ॥
स्रोतोञ्जनं तु कापोतं स्रोतोजं च नदीभवम् ।
सौवीरं यामुनं कृष्णं रीतिपुष्पं तु पौष्पकम् ॥ ३९ ॥
पुष्पाञ्जनं च गदितं पुष्पकेतनमित्यपि ।

2868 कालिका १२
2869 °शेखरं ४
2870 कंसकं ४
2873 मनोह्वा ४
2880 °संज्ञकं ३
2885 मयूरकं ५
2887 °मञ्जनं ३
2891 कृष्णं ३
2892 °केतन ४

क्षारः काचः सितस्त्वेष देवलः परिकीर्तितः ॥ ४० ॥
चक्षुष्या तु कुलाली स्यात्तथारण्यकुलत्थिका ॥ ४१ ॥
गन्धाश्मा गन्धको लेलीतको लेली च गन्धिकः ॥ ४४ ॥
सौगन्धिकः शुल्ववैरी पामारिः कुष्ठहृद्बलिः ।
वैगन्धिकः कीरपुच्छोऽस्त्रियां बलिवसा च सा ॥ ४१ ॥
मानिनीपुष्पमप्यत्र ताप्यं स्त्री तु न माक्षिकः ।
कदम्बश्चक्रनामा च ताराविरजनाम[16a]कः ।
नदीभवश्च तापीयः कामारिर्विटमाक्षिकः ।
आवर्तश्चाम्बुधातुश्च शुक्लोऽसौ तारमाक्षिकः ।
कङ्कुष्ठं काक(ल)कुष्ठं च विडङ्गं रङ्गनायकम् ॥ ४२ ॥
रेचनं पुलक हासं शोधनं काकवालुकम् ।
वल्कि-गैरिक-कासीस(?)काङ्क्षी-तालशिलाञ्जनम् ॥ ४३ ॥
कङ्कुष्ठं चेत्युपरसाः प्रोक्ताः पारदकर्मणि ।
अश्मी स्यादश्मनिर्यासः शिलाजत्वथ्यमश्मजम् ॥ ४४ ॥
गैरेयं गिरिजं चेन्द्रजतु स्याज्जतुपर्वतम् ।
धातुजं च शिलाह्वं च शिलानिष्यन्दजं च तत् ॥ ४५ ॥
अभ्रं स्यादभ्रकं व्योमाभिधं विमलमद्रिजम् ।
गिरिजामलमच्छं तदमलं गिरिजं समे ॥ ४६ ॥
कृष्णाभ्रकप्रभेदौ स्तो भेकं दार्दुरमित्यपि ।
धान्याभ्रं शोधितं तत्स्याच्छृङ्गाराभ्रं तु योगिकम् ॥ ४७ ॥
रसो रसेन्द्रः सूतश्च पारदः पारतोऽस्त्रियाम् ।
हरबीजं च चपलः स्वामी देहनिधिश्चलः ॥ ४७ ॥
सर्वं तु तै[16b]जस लोहं तान्यष्टौ हेमरूप्यकम् ।
ताम्रं रीतिः सीस-कांस्ये त्रपु पारशवं तथा ॥ ४८ ॥
चाम्पेयं हाटकं भर्म भूरि चामीकरं वसु ।
कल्याणं कनकं रुक्मं रिक्थं काञ्चन-कर्बुरे ॥ ४९ ॥

---

2893 काच.२; देवलः १
2894 °कुलत्थिका ३
2898 °पुष्प १५
2901 °धातुश्च १२
2904 वलि १ गरिक १ कासीस १ कांक्षी १
2905 कंकुष्ठं१, °रसाः १
2908 शिलाह्वं च ११; तत् १२
2910 °जामल६; गिरिजं २
2911 भेक १ दार्दुर १
2914 °श्चल· १०
2915 लोह१; हेम १
2916 °कांस्ये १ त्रपु १ पारशवं १

कार्तस्वरं शातकुम्भं भूत्तमं भूषणोत्तमम् ।
गारुडं गैरिकं पारगाङ्गेयं पुरटार्जुने ॥ ५० ॥
पिञ्जरं पीतकं जातरूपं लक्ष्मीनिकेतनम् ।
तपनीयाग्निवक्काग्निबीज-हेम-सुलोहकम् ॥ ५१ ॥
स्यान्महारजतं जाम्बूनदं च कलधौतकम् ।
चारुरत्नं च पिङ्गाशं हरिणं काञ्चिघः पुमान् ।
हारिद्रं स्त्री तु सुरभि ङ्कूर्वर्णिः(?)सानसिश्च राः ॥ ५२ ॥
हिरण्यमस्त्रियां हेमं निष्कमष्टापदं गमत् ।
स्वर्णं सुवर्णं रजतं कुमारं स्विदमुत्तमम् ॥ ५३ ॥
अलंकारसुवर्णं तु शृङ्गीकनकमायुधम् ।
शृङ्गी स्त्रियां चाथ हेमविकारे स्याद्धिरण्मयम् ॥ ५५ ॥
त्रिषु प्रतिकृतिस्त्वस्य हरिणी च हिरण्मयी ।
वर्णावलीपरीक्षार्थं स्या[17a]पितेऽस्याल्पभागकः ।
अकुप्यं च हिरण्यं च कोषः कोशोऽस्त्रियामुभौ ॥ ५५ ॥
कृतेऽकृते हेम्नि रूप्ये कुप्यं ताभ्यां परं हि यत् ।
आहतं तद्द्वयं रूप्यमथ स्याद्रजतोऽस्त्रियाम् ॥ ५६ ॥
रूप्यं च कलधौतं च तारं श्वेतं हिमांशु च ।
खर्जुरं च भवेद्धंसाह्वयं च कुमुदाह्वयम् ॥ ५७ ॥
हेम्नि रूप्ये च संश्लिष्टे न स्त्रियां घनगोलकः ।
ताम्रं शुल्वं म्लेच्छमुखमौदुम्बरमुदुम्बरम् ॥ ५८ ॥
द्व्यष्टं वरिष्ठं सूर्याङ्गं रक्तकं मुनिपित्तलम् ।
मर्कटास्यं शावरास्यं सूर्याहं ब्रह्मवर्धनम् ॥ ५९ ॥
हेम्नि तारे च ताम्रे च संसृष्टे स्यात्त्रिलोहकम् ।
रिरी रीरी च रीतिः स्त्री पीतलोहं सुलोहकम् ॥ ६० ॥
सुवर्णकं कीशलोहमारः स्त्री पित्तला न ना ।
सिंहलं चारकूटोऽस्त्री राजरीतिर्महेश्वरी ॥ ६१ ॥
ब्राह्मी स्यात्कपिला राज्ञी ब्रह्मरीतिरथानरि ।
कांस्यं विद्युत्प्रियं पञ्चलोहं घोषं प्रकाशकम् ॥ ६२ ॥

2927 रजतं ४०
2929 °ष्मयं १
2932 कोशो ४
2933 कुप्यं १
2934 रूप्य १
2936 °दाह्वयं ८
2937 गोलकः १
2940 °वर्धनं १४
2944 चारकूटो ११
2945 °रीति ६

घण्टाशब्दं[17b]वङ्गशुल्वभवं रवण-लोहजे ।
कंसं कंसास्थि वाथासिन्सौराष्ट्रं पञ्चलोहकम् ॥ ६३ ॥
वर्त्तलोहं वर्त्तकं स्यादथ नागं सुवर्णकम् ।
गण्डूपदभवं वप्रं वभ्रं योगेष्ट-सीसके ॥ ६४ ॥
यवनेष्टं सुवर्णारि सीसपत्रं वरिष्ट(ष्ठ ?)कम् ।
सिन्दूरं तच्चीनपिष्टं सिन्दूरतिलकोऽस्त्रियाम् ॥ ६५ ॥
वङ्गं रङ्गः स्वर्णभवं पिच्चटं नागजीवनम् ।
मृद्वङ्गं तमरं चक्रसञ्ज्ञं कास्तीरक त्रपु ॥ ६६ ॥
सिंहलं गुरुपत्र स्यादालीनं नागसभवम् ।
त्रिपु त्रपुविकारे स्यात्त्रापुषं वाङ्गमित्यपि ॥ ६७ ॥
लोहोऽस्त्री गिरिसारं स्याच्छिलासारमयो घनम् ।
शस्त्रं पिण्डं पारशवं तीक्ष्णं कालायस तथा ॥ ६८ ॥
पिण्डाश्ममश्मसारं च कृष्णं चीरं च पीवरम् ।
अयं च काठचीरं च स्थुलाया. श्राणमन्तिमे ॥ ६९ ॥
गौरीः स्त्री लोहचूर्णं स्यादथ शिङ्घाणमस्त्रियाम् ।
धूर्त-मण्डूर-सरण किट्टालानि च तन्मले ॥ ७० ॥
द्वयोर्मणि[18a]श्चारुशिला रत्नं वसु तु न द्वयोः ।
सम्यकरत्नाकरे शुद्धो मण्यादिर्भेदलिङ्गकः ।
हीरक. शिखरी पुंसि दधीच्यस्थि वरारकम् ॥ ७१ ॥
सूचीमुखं रत्नमुख्य वज्राहं चाथ सुन्दरम् ।
गोमेदकं पीतमणिस्तथा तृणचरं मतम् ॥ ७२ ॥
गारुत्मतं मरकतमश्मगर्भो हरिन्मणिः ।
इन्द्रनीलो मसार. स्यान्नीलको मन्दरश्च सः ॥ ७३ ॥
कुरुविन्दो लोहितकः शोणोऽस्त्री पद्मरागक. ।
श्रीपुष्पं च सुरक्तं च माणिक्यं हंसपादकम् ॥ ७४ ॥
शिखरोऽस्त्री तस्य खण्डं वैडूर्यं वालवायजम् ।

2948 कसास्थि ११, सौराष्ट्रे, °लोहक ११
2949 वर्तकं २
2952 °तिलको १४
2955 °समव १४
2956 वाग २
2960 काठचीरं च १७; श्राण १
2961 गौरी १
2962 त ४ न्मले
2963 वसु ४
2964 सम्यक १
2966 वज्राह ७
2967 तृणचरं ३
2968 हरिन्मणि ४
2969 मदर ४ श्च
2972 शिखरो १, °वायज २

प्रवालोऽस्त्री विद्रुमो ना रक्ताङ्गो हेमकन्दलः ॥ ७५ ॥
रत्नामणी रक्तकन्दोऽथार्काश्मा दहनोपलः ।
सूर्यकान्तः सूर्यमणिश्चन्द्रकान्तो विधूपलः ॥ ७६ ॥
चान्द्रश्चन्द्रमणिः स्वच्छो गल्वर्कः स्फटिकोऽस्त्रियाम् ।
अयस्कान्तविशेषाः स्युश्चुम्बकभ्रामकादयः ॥ ७७ ॥
मुक्ता स्त्री मौक्तिकं मुक्ताफलं * * * शुक्तिजे ।
[18b]रसोपलमथाहेयं तत्सर्पस्य फणाभवम् ॥ ७८ ॥
जीमूत-करि-मत्स्याहि-वंश-शङ्ख-वराहजाः ।
शुक्त्युद्भवाश्च विज्ञेया अष्टौ मौक्तिकजातयः ॥ ७९ ॥
विराटजो राजपट्टो राजावर्तश्च कथ्यते ।
चिन्तामणिः काममणिर्वैक्रान्तोऽसितहीरकः ॥ ८० ॥

। इति शैलवर्गः ।

अरण्यमस्त्री विपिनं कान्तारं समजं त्रसम् ।
गहनं गुहिनं वार्क्षं सत्रं षण्डं च काननम् ॥ १ ॥
वनं कुत्रं च नीभ्रं च गोत्रं च दुमलं च तत् ।
ततं [लं] तल्कं दवो दावो झषः कक्षोऽटवी स्त्रियाम् ।
प्रस्तारस्तु तृणाटव्यामरण्यानी महावनम् ॥ २ ॥
वनी तदल्पं वन्या तु वनानां संहतिः स्त्रियाम् ।
आरामः स्यादुपवनं वेलं चापवनं च तत् ॥ ३ ॥
गृहारामा निष्कुटाः स्युः पल्याटा अथ पौरकाः ।
बहिर्गृहाच्छून्यवाटी भृष्टीः क्षुद्रप्रसीदिका ।
आक्रीडोऽस्त्री तथोद्यानं राज्ञां[19a]साधारणं वनम् ॥ ४ ॥

---

2974 °कंदो ९
2975 °मणि ४
2976 °मणि४; स्फटिको ३
2977 चुंबक १ भ्रामका १ दयः
2979 रसोपल ९ मथाहेयं १
2980 जीमूत १ करीमत्स्या १ हि १ वंश शंख १
वराहजाः १
2981 °द्भवा १ श्च; अष्टौ १
2982 °पदो (for °पट्टो). °वर्तं १ श्च
2983 काममणि२; °हीरकः २
इति शैलवर्गः ।
2985 गुहिनले for गुहिनं
2987 °टवी २३
2988 प्रकार १ स्तु; महावनं ३
2989 वनी१; वन्या १
2990 चापवनं ४
2991 पल्याटाः ३
2992 भृष्टीः १

उद्यानपालकस्तु स्यात्कक्षावेक्षकनामकः ।
प्रमदवनं प्रमदानां
प्रमदावनमप्यदो महीपानाम् ।
स्याद्वृक्षवाटिका तन्
मल्ल्यादीना प्रसूनवाटी च ॥ ५ ॥
न पुंसि दण्डका जम्बूमार्गं सैन्धव-नैमिषे ॥ ६ ॥
त्रिपुष्करं चार्बुदोऽस्त्री हिमवान्कुरुजाङ्गलम् ।
उत्पलावर्तकं चेति नवारणी प्रकीर्तिता ॥ ७ ॥
स्यात्कोटरावणं नाम्नि कोटराणां हि यद्वनम् ।
क्रीडोद्यानं केलिवनं पुरगाणां तु यद्वनम् ।
पुरगावणमेतत्स्यादप्रस्थेऽग्रेवणं वने ।
सारिकावणमेवं स्यादथानाम्न्यप्यमी परे ॥ ९ ॥
प्रवणं निर्वणं चान्तर्वणं शरवणादि च ॥ ८ ॥
दूर्वावणं तु दूर्वाणा स्याद्दूर्वावनमित्यपि ॥ १० ॥
देवदारुवनं तु स्याद्वने यद्देवदारवम् ।
स्यादीरिकावनाद्येवं वन्यं त्रिषु वनोद्भवम् ॥ ११ ॥
वीथिर्माला च विञ्जोलिर्घोरण्यावलि-वीचयः ।
[19b]द्वयोः श्रेणिः पङ्क्ति-तति * * रेखालि-राजयः ॥ १२ ॥
कुडङ्गो वृक्षवल्लीना वनं स्यादथ वल्लरम् ।
झाटो गह्वः कुञ्जमस्त्री निकुञ्जं च लतावृतम् ॥ १३ ॥
द्रुर्द्रुहिर्द्रुद्रुमः शाखी शिखरी विटपी कुठः ।
कारस्करो निष्टरोऽद्रिर्नगोऽगः पुष्पदोऽगमः ॥ १४ ॥
फलदो भूरुहो भूजस्तरु-जर्ण-पलाशिनः ।
सालः स्थिरः पुलाकी च रुह्वानोकह-पादपौ ॥ १५ ॥

---

2996 प्रमदावन २
2998 °वाटी २
2999 दडका १ जंबूमार्ग १ सैंधव १ नैमिषे १
3000 चार्बुदो१; हिमवान १
3001 नवारणी १
3002 काटेरावणं १
3003 केलिवनं १
3004 °गावण१; °प्रेवणं १
3005 °वण १
3006 प्रवणं १ निर्वण १
3007 °वन २
3008 °दारुवन १
3009 °वना १ येवं वन्यं १
3010 रिछोलिः; पचयः (carrupt) for वीचय.
3011 °राजय. १३
3012 कुडगो १
3013 निकुं ५ जं

वनस्पतिर्वृक्ष-गच्छ-नन्द्यावर्त-करालिकाः ।
पुष्पतः फलवान्वानस्पत्योऽपुष्पो वनस्पतिः ॥ १६ ॥
छायातरुः स्थिरच्छायो ह्रस्वशाखाशिफः क्षुपः ।
स्थाणुरस्त्री ध्रुवः शङ्कुः शाखापत्रविवर्जितः ॥ १७ ॥
ओषधिस्त्वौषधिः स्त्री स्यात्फलपाकावसानिका ॥ १७ ॥
फलेग्रहिः फलवन्ध्योऽप्यवकेशी तु सोऽफलः ।
पुष्पितः स्यात्कुसुमितः फलवान्फलिनः फली ॥ १८ ॥
फुल्ल-प्रफुल्ल-संफुल्ल-प्र[20a]फुल्लोत्फुल्ल-जृम्भिताः ।
प्रबुद्धोन्मीलितो जृम्भ-व्योकोच-विकच-स्फुटाः ॥ १९ ॥
सेरः सितो विकसितो दलितः स्फुटितोऽपि च ।
विकास्युन्मिषितोन्निद्र-विनिद्राण-विकस्वराः ॥ २० ॥
उल्लीलः स्यादुच्छ्वसित-हसितोन्मिषिता अपि ।
मि(मी?)लितः स्यात्संकुचितः फलेग्रह्यादयस्त्रिषु ॥ २१ ॥
प्रततिः प्रततिर्वल्लिर्लता वल्लरिरित्यपि ।
वीरुत्प्रतानिनी गुल्मिन्युलपः पुंनपुंसकम् ॥ २२ ॥
उलपस्तृणभेदे स्याद्गुल्मिन्यामुलपं मतः ।
कणीचिः स्त्री पुष्पितास्या ग्रन्थिकस्तु लताज्वरः ।
प्ररोहोऽस्त्री त्वङ्कुरः स्यादङ्कूरः कन्दलस्त्रिषु ॥ २३ ॥
पूर्वोऽर्थो वलिशं(?)स्युस्तु शिखा-शाखा-लताः स्त्रियः ।
अस्त्री स्याद्विटपश्चाथ शास्त्यं शाखेव यत्रिषु ।
वातावर्जितशाखायां भवेद्योषिद्गुकेरुका ।
शाला साला स्कन्धशाखाथाशाखं मूलतस्तरोः ॥ २४ ॥
प्रकाण्डोऽस्त्री पुंसि गण्डिः[20b]स्कन्धस्त्वस्य शिरो भवेत् ।
प्रधाणो मस्तकोऽस्त्री ॐ शिफाया तु जटा झटा ।
जटिः स्त्रियां नृलिङ्गे तु मूलेरो विनिगद्यते ॥ २५ ॥

---

3018 °करालिका: ११
3019 °स्पत्यो१; °स्पतिः १
3020 स्थिरच्छायो २
3021 शंकुः १
3022 °स्त्वोपधिः २
3023 °वन्ध्यो २ प्यवकेशी १
3024 कुसुमितः२; फली १० (१?)
3029 °न्मिषिता २६
3030 °चितः २
3031 °लता ४ पल्लरि ५
3032 °न्युलपः ४
3034 कणीचि १; ग्रन्थिक १ स्तु
3035 कंदल ४
3036 पलिशं १
3037 °द्विटप ४ थाथ शास्त्यं १
3039 °शाखा ३
3040 गण्डिः २
3042 मूलेरो ४

शाखा शिफावरोहो ना मूलान्त्वग्रं गता लता ।
लतोद्गमोऽथाप्रकाण्डे गुल्मोऽस्त्री विटपोऽपि च ॥ २६ ॥
स्तम्बोऽप्यथ शिरोऽग्रं स्यात्तस्मिञ्छिखरमस्त्रियाम् ।
बुध्नोऽङ्घ्रिनामा मूलोऽस्त्री त्वचा-त्वक्-त्वचयः स्त्रियः ॥ २१ ॥
छल्ली त्वचश्चोचमन्त्ये न स्त्रियां वल्क-वल्कलौ ।
मज्जायां सारमज्जानौ विस्तारो विटपोऽस्त्रियाम् ॥ २८ ॥
दैर्घ्यमायाम आनाह आरोहस्तु समुच्छ्रयः ।
उत्सेधोऽस्त्री समुच्छ्राय उदयस्तूच्छ्रयः ❋❋ ।
अल्पारोहपरीणाहा वृक्षाद्याः स्युर्निधा इति ।
दारु न स्त्री काष्ठमन्त्ये दलिरु(कं?) चाथ दीप्तिकृत् ॥ ३० ॥
एध इन्धनमग्ने(?)स्तदेधः पुंसीध्ममस्त्रियाम् ।
समित्स्त्री समिधायां स्यान्निष्कुहः कोटरोऽस्त्रियाम् ॥ ३१ ॥
मिथुने वल्लरिर्मञ्जा चमरा[21a]मञ्जरा न ना ।
पत्रबर्हिश्छदा न स्त्री पर्णं पत्रं दलं तथा ॥ ३२ ॥
पलाशं छदनं पर्फरीकं कि[स]लयं नवे ।
किसलं पल्लवस्त्वस्त्री प्रवालस्त्वचिरोद्गतः ॥ ३३ ॥
स्याल्लतायावकं चाथ तच्चेदङ्गुलिसंनिभम् ।
स्यादाङ्गुलिकनामा स्यात्कोशी शृङ्गो नरस्त्रियोः ।
मर्गटो ना स्त्रियां मादिः पर्वरीणं च तच्छिरा ॥ ३४ ॥
दौर्वीणं मृष्टपर्णं स्याज्जीर्णे त्वेतत्कशंवर(?) ।
कण्टक-द्रुणखौ न स्त्री दलसूचिश्च वङ्किलः ॥ ३५ ॥
शिताग्रोऽप्यथ वृन्तं स्यात्क्लीबे प्रसवबन्धनम् ।
कलिका जालकं क्लीबे क्षारकः कोरकोऽस्त्रियौ ॥ ३६ ॥
मुकुलो मकुलश्च स्यात्कुड्मलः कुड्मलोऽस्त्रियः ।

---

3043 °रोहो २
3044 लतोद्गमो १
3045 स्तंबो३; शिखर ३
3046 मूलो ३
3047 °वल्कलौ ८
3048 °मज्जानौ ३
3049 आनाह ३
3051 अल्पा २ रोह°; निधा १
3052 काष्ठ३; दलिरुचाथ
3053 इन्धन २
3054 समिधायां४; कोटरो २
3055 मंजरा ४
3057 छदनं ८
3058 पल्लव ४
3060 °गुलिक १ नामा २ स्या; शृंगो २
3061 पर्वरीणं ३
3064 शिताग्रो५; °बंधनं २
3066 कुड्मलो ४

गुच्छो गुञ्छो गुत्स[क]श्च गुलुच्छो ग्लप्स इत्यपि ।
स्तबकोऽस्त्री स्त्रियां लुम्बिः कोषविद्भिर्निगद्यते ।
स्त्रियः सुमनसः प्रायो भूम्नि स्युः प्रसवः पुमान् ॥ ३७ ॥
पुष्पं प्रसूनं सूनं च सुमं कुसुममस्त्रियाम् ।
मणीचकं चाथ पुंसि परागः पुष्पजं रजः । [21b] ॥ ३८ ॥
मकरन्दो मरन्दश्च तद्रसो मधुरस्त्रियाम् ।
आरण्याः स्युः सुमनसो या अरण्येसमुद्भवाः ।
फलं परीरं किंपाकं शस्यं सस्यमथ त्रिपु ।
व्युष्टं पर्युषितं शुष्कं त्वद्यानं वानमित्यपि ।
गौणं धारु(?)स्तु पुंस्त्वे स्यादथापकं शलाटु तत् ॥ ४० ॥
पेशी कर्कटकी च स्त्री पक्वं तत्तु पचेलिमम् ।
निर्यासोऽस्त्री वृक्षरसो बीजं त्वङ्कुरकारणम् ।
परु-ग्रन्थी ग्रन्थव(गु ?)ल्माः स्तः पर्व-परुषी समे ।
* * * * * * * * बीजकोशी शमी शिमिः ।
शिम्बिः शिम्बा चाथ सर्वं मूले पुष्पे फले भवेत् ॥ ४१ ॥
द्वयहीनं यथैरण्डमशोकं चाम्रमित्यपि ।
जात्यादयः स्वलिङ्गाः स्युः पुष्पे जाती च मल्लिका ॥ ४२ ॥
मूले पुष्पे विदार्याद्याः पुष्पे क्लीबेऽपि पाटला ।
साल्वं मूले फले तु स्युर्हरीतक्यादयः स्त्रियाम् ॥ ४३ ॥
स्वलिङ्गाः सूरणाद्याः स्युः कन्दे जम्ब्वास्तु जाम्बवम् ।
जम्बु क्लीबे स्त्रियां जम्बूः फलं जम्बूस्तु तज्जय(?) ॥ ४४ ॥
प्लाक्षं शैमव[22a]माश्वत्थं नैयग्रोधं च बार्हतम् ।
वैणवं वैङ्कुदं च स्यात्फलं प्लक्षादिसंभवम् ॥ ४५ ॥
अन्यत्रैते स्वलिङ्गाः स्युः फलपाकशुक(?)पुनः ।

---

3071 परागः १
3072 मधु ३
3073 आरण्या. १
3074 सस ५
3075 व्युष्टं १
3076 स्या १ दथा°
3077 कर्कटकी ३
3078 निर्यासो१; बीजं १
3079 समोः १
3080 ३ बीजकोशी
3081 शिम्बा ५
3082 चाम्र १
3083 जाती १ च मल्लिका १
3085 साल्वं १
3087 जंबू३ः; जंबू १ स्तु
3088 प्लाक्षं १ शैमव १ माश्वत्थ १ नैयग्रोधं १ च बार्हतम् १
3089 वैङ्गुदं १

फले प्रकृतिलिङ्गाः स्युर्यथा माषा यवास्तिलाः ॥ ४६ ॥
पञ्चाङ्गं तु तरोर्मूलवल्कपुष्पफलच्छदैः ।
पुष्पज्वरस्तु पर्वा स्याज्ज्यौतिष्कस्त्वौषधिज्वरः ।
दशाङ्गं रसनिर्यासससारकण्टकवृन्तकैः ।
अश्वत्थः पिप्पलो बोधिश्चलपत्रो गजाशनः ।
मङ्गल्यः केशवावासः श्रीवृक्षः क्षीरपादपः ॥ ४७ ॥
कपीतनो गर्दभाण्डः कपिकू(चू ?)तः कमण्डलुः ।
कन्दरालः सुपार्श्वश्च प्लवः पूगोऽपि मौञ्चिगः ॥ ४८ ॥
तरुप्ररोहः प्लवगः सुशीतकवचोऽस्त्रियाम् ।
कपिया(वा ?)सः फलीशश्च विलम्बः सुप्रतिष्ठितः ॥ ४९ ॥
अन्यस्थाली द्रुमः पिप्लक्षीरी कुञ्जरपादपः ।
स्यात्प्ररोही जयतरुर्नदीवृक्षो वनस्पतिः ॥ ५० ॥
प्लक्षः कपीतनः शृङ्गी जटी द्वंद्वे तु पर्कटी ।
य[22b]क्षवृक्षः सुपार्श्वश्च पिप्परिः पिप्पलच्छदः ॥ ४८ ॥
वटोऽस्त्रियां रक्तफलो न्यग्रोधो यक्षवासकः ।
बहुपादो ध्रुवः शृङ्गी सिद्धार्थः स्कन्धसंभवः ॥ ४९ ॥
नदीवृक्षः प्ररोही च पादरोही वनस्पतिः ।
अग्रशृङ्गी मरीची च दान्तो वैश्रवणालयः ॥ ५० ॥
उदुम्बरः क्षीरवृक्षो मशकी हेमदुग्धकः ।
सदाफलः कृमिफलो यज्ञाङ्गः शीतवल्कलः ॥ ५१ ॥
सुप्रतिष्ठो यज्ञयोग्यः कालस्कन्ध उदुम्बरः ।
अपुष्पः फलसंबद्धः सुचक्षुश्च वसुद्रुमः ॥ ५२ ॥
उदुम्बरमभं(यं ?)त्वौदुम्बरं तद्विकृतौ त्रिपु ।
वेतसो वुगुले(?)शीतो वञ्जुलो व्योमपुष्पकः ।
वानीरो गन्धपुष्पश्च सुषेणः कलनो रथः ॥ ५३ ॥
विदुलो मञ्जरीनम्रो नादेयी त्वम्बुवेतसः ।
परिव्याधस्तोयकामो जलौकःसंवृतोऽम्बुजः ॥ ५४ ॥
निकुञ्जकश्च विदुलो नदीकूलप्रियोऽपि सः ।
स्रोतोजो मेषचु(पु?)ष्पश्च नीले त्विज्जल-हिज्जलौ ॥ ५५ ॥

3091 माषा १ यवा १
3093 पर्वा १ स्याज्ज्यौतिष्क १ स्त्वौ°
3108 °कालयः १६
3112 वसुद्रुमः १६
3113 त्वौदुंबरं १
3116 °नम्रो १
3119 °पुष्पश्च १२

हिङ्गुलश्चेङ्गलो[23a]गुच्छफलः स्यात्कक्षपोलिका ।
क्षीरिणः पिप्पल-प्लक्ष-वरोदुम्बर-वेतसाः ॥ ५६ ॥
आम्रो रसालो माकन्दः पिकानन्दी सरालयः ।
कामदुश्चैत्रवृक्षश्च प्रियङ्गो मदिरासखः ॥ ५७ ॥
मङ्गलद्रुर्मञ्जरी च शिलीष्टो भृङ्गवल्लभः ।
मनोभिनन्दनः पुष्पोत्सवश्चामरपुष्पकः ॥ ५८ ॥
वसन्तदूतश्चूतश्च श्यामतैलोऽङ्गनाप्रियः ।
मदिरास[ख]श्च सुफलो हेमपिङ्गः सुमृष्टकः ॥ ५९ ॥
सहारः सहकारश्च स भवेदतिसौरभः ।
पान्थामोदी चाथ वार्षेरीटोऽस्त्यास्यङ्कुरो मतः ।
स्यात्क्षुद्रमोकुलिर्जन्तुवृक्षो लीक्षातरुस्तथा ॥ ६० ॥
घनस्कन्धश्च कोशाम्रो रक्तकः क्षुद्रचूतकः ।
अतिमिष्टस्तु राजाम्र आम्रातः सरभावनः ॥ ६२ ॥
वर्षपाकी तनुक्षीरः शृङ्गी स्यादम्लवाटकः ।
फलीशाको दुःफलः स्यात्स्त्री तु जम्बूश्च जम्बुवत् ॥ ६३ ॥
महाफला महास्कन्धा सौरभी सुफला तथा ।
कुमारी गन्धप[23b]त्रा च नीलपत्रासितच्छदा ॥ ६४ ॥
काकजम्बू मेघवर्णा नादेयी भ्रमरप्रिया ।
शतपत्रा भूमिजम्बू कुफला वैदिशोऽल्पकः ॥ ६५ ॥
वैदला सा च वैदेही चाथ राजादनोऽस्त्रियाम् ।
तद्द्राजातनश्चारः सैनकद्दुर्धनुःपटः ॥ ६६ ॥
पिसालश्च प्रियालश्च पटो द्राक्षाफलो धनुः ।
शालः शाखामृगास्वादत्वक्सी तापसवल्लभः ॥ ६७ ॥
सरस्कन्धश्चाम्लफलो राजाह्वो फल्नो वरः ।
पलाशः किंशुकः किर्मी ब्रह्मवृक्षस्त्रिपर्णकः ।
त्रिवृन्तः कटुपर्णश्च वातपोथः समिद्वरः ।
क्षारश्रेष्ठो रक्तपुष्पो यज्ञियश्च गणेरुकः ॥ ७१ ॥
लाक्षावृक्षश्च कनकः स्यात्सुर्भीरव(क?) इत्यपि ।

---

3120 °पोलिका: ६
3121 क्षिरिणः १ पिप्पल १ प्लक्ष १ वरो १ दुंबरवेतसाः १
3127 सुमृष्टकः २४
3129 °मोदीच; °टो ऽ १
3131 °पुलकः ५
3134 दुःफलः १०
3136 °च्छदाः १०
3139 वैदेही ११
3143 वरः ११

बीजस्नेहो रक्तपुष्पः पृथुशिम्बो वमीतरुः ।
अङ्गारितं मूलाम्लित फलीनवनिर्गतो ( corrupt ) ।
बन्धः पलाशपत्राणां मूर्ध्नि पत्रपलाशिका ।
पालाशकं[24a]मेचवत्स्यान्निर्वृत्तं यत्पलाशतः ।
एलाफलः पान्थभोग्यो मधुकश्च मधुद्रुमः ।
गुडपुष्पो मधुष्ठीलो वानप्रस्थो मधुस्रवः ॥ ७५ ॥
लोध्रपुष्पो माधवश्च मधुपुष्पो मृगप्रियः ।
मध्वङ्गस्तीक्ष्णसारश्च भोग्यो मधुफलो मधुः ॥ ७६ ॥
सोऽम्भोजो दीर्घपत्रः स्याद्रसपुष्पफलस्तथा ।
गौरवृक्षस्तीरवृक्षो गिरिकाख्यो मधूलकः ॥ ७७ ॥
घोण्टाकोली च गोकण्टी बदरी युग्मकण्टिका ।
गोपघोण्टा च घुण्टा च राष्ट्रवृद्धिकरी तथा ॥ ७८ ॥
स्निग्धच्छदाजाप्रिया च गृध्रनख्यल्पिका द्वयोः ।
फर्कन्धूः स्यात्फेनिलम्बं बदरी कुवलं त्रिषु ॥ ७९ ॥
सर्वावस्था युदा(?)स्वादु महत्सौवीरकं भवेत् ।
हस्तकोली सिञ्चनिका फर्कन्धूर्यामनीयसी ॥ ८० ॥
सौवीरं बदरं कोलं फलं तासां च बेरटम् ।
कर्कन्धूना तु पाके स्यात्कर्कन्धुकुणमन्तिमे ॥ ८१ ॥
बदरकुणं कुवल[24b]कुणे तेषां पाके समुद्दिष्टम् ।
बदराण्युञ्छति योऽसौ बादरिकः स्याद्विशेष्यलिङ्गस्थः ॥ ८२ ॥
ककुभोऽर्जुनसंज्ञः स्याद्वीरो वीरतरुस्तथा ।
वैरान्तको नदीसर्जो मधुगन्धि प्रसूनकः ॥ ८३ ॥
आशाफलश्चित्रयोधी धूर्तवृक्षेन्द्रवृक्षकौ ।
कुणिः कच्छस्तुणिस्तुलः कुपाणिश्च कुवेरकः ॥ ८४ ॥

3148 वमीतरुः २०
3150 °पलाशिका १
3151 पालाशकं १
3155 मधु. १५
3157 मधूलकः ६
3159 गोपघुटा for °घोण्टा
3160 °नख्य ११ लिपका
3161 कुवलं ३
3162 सौवीरक १
3163 सिञ्चनिका २
3164 बेरटं ४
3166 °कुणे २
3167 बादरिकः १
3169 वीरान्तको for वैरा°
3170 °वृक्षकौ ११

स्यादापीतः कान्तलको नन्दी नन्दीतरुस्तथा ।
लोध्रो रोध्रस्तिल्वकः स्यान्मार्जनः कालहीनकः ॥ ८५ ॥
चिह्नस्तिलस्तिरीटो ना सितलोध्रस्तु शाबरः ।
गालवो नेत्रभैषज्यं शीतपुष्पो व्रणौषधम् ॥ ८६ ॥
उत्सादनो घनत्वक्च शशोडती(?) सारभेषजे ।
क्रमुकः पट्टिकाख्योऽन्यः पट्टीस्रच(?)बृहच्छदः ॥ ८७ ॥
लाक्षाप्रसादनः पट्टी जीर्णबुध्नो घनत्वचः ।
कट्फलः कत्फलः सोमवल्कः कारञ्जनस्तथा ॥ ८८ ॥
महावल्कः स्त्रियां कुम्भी महाकुम्भी प्रचेतसा ।
म[25a]हाकषायोग्रगन्धा भद्रा भद्रवती तथा ॥ ८९ ॥
श्रीपर्णिका कुमुदिका कैदर्यं मतमस्त्रियाम् ।
स्त्रीपुंसयोस्तिन्दुकः स्यात्कालस्कन्धोऽसिमत्सरुः ॥ ९० ॥
स्फूर्जकः स्फूर्जनी स्फूर्या विरला स्फुरणी च सा ।
जलोद्भवो दीर्घपत्रः काकेन्दुः काकतिन्दुकः ॥ ९१ ॥
कुलकः काकपीलुश्च कुपीलुर्विषतिन्दुकः ।
क्लीतकं मधुकं यष्टीमधुकं मधुयष्टिका ॥ ९२ ॥
मधुस्रवा लक्ष्यणं च यष्ट्याह्वं मधुनाम च ।
जलोद्भवा क्लीतनिका मधुपर्णी मधूलिका ॥ ९३ ॥
पीलुः संसी गुडफलः सहलाङ्गी हिमासहः ।
उष्ट्रप्रियस्तीक्ष्णतरुर्धारी सित-विरेचनौ ॥ ९४ ॥
श्यामो भुजो दीपनोऽथ पाके पीलुकुणं भवेत् ।
सोऽद्रिजोऽक्षोट आक्षोटः स्वादुमज्जा पृथुच्छदः ॥ ९५ ॥
पर्वतीयः कन्दरालः कर्परालो गुडाशयः ।
फलस्नेहो वृन्तफलः कीरेष्टोऽथ[25b]शुकप्रियः ॥ ९६ ॥
फलश्रीः पुंसि राजन्यो दृढस्कन्धो नृपाभिधः ।
क्षीरी मृत्प्रियकश्च स्यात्प्रियालोकः फलाधिपः ॥ ९७ ॥

---

3172 °तरु १० स्तथा
3178 घनत्वचः ८
3182 कैदर्य १५
3184 स्फुरणी ८
3185 दीर्घपत्रः १
3186 °तिन्दुकः ६
3188 मधुनाम ८
3189 मधूलिका ४
3191 °विरेचनौ ११
3192 दीपनो ११

क्षीरिणी क्षीरिका स्वादुफला मृदुफलापि च ।
परूपकः परुषकः परुः क्लीबेऽसितच्छदः ॥ ९८ ॥
पारावतो मृदुफलो चत्वनच्छद इत्यपि ।
अल्पास्थि-कण्टकिफल-दग्धवृद्धि-परूंपि च ॥ ९९ ॥
तूदस्तुदश्च नूतश्च क्रमुको ब्रह्मचार्यपि ।
ब्रह्मनिष्ठश्च यूपश्च ब्रह्मण्यो ब्रह्मपादपः ॥ १०० ॥
तूलं तूली चाथ पालेवतं पारेवतं तथा ।
महापालेवतं रक्तमाणावं रैवतं च तत् ॥ १०१ ॥
आरेवतं पाण्डुपुष्पं तिन्दुकाकृतिः प्रोच्यते ।
सुगन्धिपुष्पः स्याद्बल्कपकसस्यो महोन्नतिः ॥ १०२ ॥
मधूकपत्रसदृशो भवेद्राजकदम्बकः ।
फलं राजकदम्बस्य नीपराजकदम्बकम् ॥ १०३ ॥
मीवणः स्यादार्तगलो बहुकण्ठो रुजाकरः ।
जालीवृक्षो दुःप्रधर्षः [26a]स्वादुतिक्तफलोऽर्गटः ॥ १०४ ॥
पनसः पणसश्चाली मुरजफलोऽसौ महासर्जः ।
............आयतफलः सकण्टकौ चास्मिन् ॥ २ ॥
लकुचो लिकुचः क्षुद्रपनसो ग्रन्थिमत्फलः ।
पीतनो सौ***साक्षो गर्भस्त्वेतस्य कण्टका ।
लिङ्गत्रये दाडिमः स्यात्सारश्च करकोऽस्त्रियाम् ॥ ३ ॥
रक्तबीजो रक्तपुष्पः कुट्टिमः फलखाडवः ।
शुकप्रियो दन्तबीजो हिण्डीरो दालिमी त्रिपु ॥ ४ ॥
विदलं दाडिमकणः शिखरं संपचेलिमः ।
कपित्थस्तु कपि(गि!)त्थः स्याद्भित्थो रदहर्षणः ॥ ५ ॥
दध्याह्वः स्याद्दधिफलोऽक्षिस्पन्दः सुरभिच्छदः ।
चक्रास्थिः स्याद्दन्तशठः सितपुष्पः कपिप्रियः ॥ ६ ॥
जम्बीरश्च ग्राहिफलो मन्मथश्चिरपाक्यपि ।

---

3195 कीरेष्टो ११
3198 मृदुफला ११
3201 °परूपि ११
3204 तूली ११; पारेवतं २
3208 °कदंबकः ५
3211 लोर्गटः ८
3213 सकटकौ ७
3215 साक्षी २
3216 °स्त्रियां ३
3218 त्रिपु ४
3219 शिखरं १
3220 °हर्षण. ५
3222 कपिप्रियः ६

हृद्यगन्धः स्वादुफलः सितक्षीरो जलेन्द्रकः ॥ ७ ॥
जम्बीरो जम्भलो जम्भोऽस्त्रियां जम्भील इत्यपि ।
द्विजकेतुश्चारुफलः करणो दन्तहर्षणः ॥ ८ ॥
अस्त्रियां रोच[26b]कश्चाथ वेतसाम्लोऽम्लवेतसः ।
अम्लो रसाम्लः शासाम्लो मांसारिर्वीरवेतसः ॥ ९ ॥
मीमः सहस्रवेधी स्याच्छतवेधी च वेधकः ।
रक्तस्रावो द्रावकश्च न स्त्री चुक्रीमथापरः (?) ॥ १० ॥
कपोताण्डोपमफलः साराम्लश्च परावतः ।
महापारावतश्चाथ निम्बूकं निम्बुकं समे ॥ ११ ॥
रसालं राजनिम्बूकं चौरनिम्बूकमल्पकम् ।
आरुकं वीरसेनं स्याद्वीरकं वीरनुत्तथा ॥ १२ ॥
भवं भव्यं भविष्यं च भावनं तच्चतुर्विधम् ।
कमरङ्गं कर्णफलं भावनं मुखशोधनम् ।
रोमान्तकं रोमफलं भव्यं पिच्छिलबीजकम् ॥ १३ ॥
ऐरावतो नागरङ्गो नारङ्गो वदनप्रियः ।
योगसारस्त्वक्सुगन्धः सुधा तक्राधिवासकः ॥ १४ ॥
मातुलिङ्गो मातुलुङ्गो लुङ्गोऽपि फलपूरकम् ।
बीजपूरः सुपूरश्च बीजाढ्यः केसराम्लकः ॥ १५ ॥
बृहत्फलश्च रुचकः केसरी स तु शैलजः ।
देवदूती सुगन्धाढ्या मातुलुङ्गा वनीयकः ॥ १६ ॥
अ[27a]त्यम्ला पीतपुष्पा च स्मृता सा च महाफला ।
तिंचिडीका तिंचिडी च तिन्तिडी च कपिप्रिया ॥ १७ ॥
अम्लिका चाम्लिका चिञ्चा चुक्रिकाथ सिताम्लिका ।
असौ सुतिंचिडी प्रोक्ता शुक्तिका च निगद्यते ॥ १८ ॥
जम्बीरो वेतसाम्लश्च नारङ्गो बीजपूरकः ।
तिंचिडीका च पञ्चाम्लं जानीयाद्रसकर्मणि ॥ १९ ॥

---

3224 °न्द्रकः ७
3226 °हर्षणः ८
3228 °वेतसः ९
3230 चुक्री ४
3232 °पारावत४; निंबुकं २
3233 °निंबूकं २
3235 भवं १ भव्यं १ भविष्यं१; भावनं १
3239 °वासकः ७
3242 केसरी ११
3244 महाफला ७
3246 चुक्रिका ८
3247 शुक्तिका २
3248 जंबीरो १ वेतसाम्ल १ श्च नारंगो १
3249 तिंतिडीका १ च पंचाम्लं १

फणिज्जकः फणी प्रस्थपुष्पः मरुवको मरुत् ।
समीरणो मरुतको भवेन्मरिचकोऽपि सः ॥ १९ ॥
खरपत्रस्तीक्ष्णपत्रो जम्बीरो बीजपुष्पक ।
तिन्तिडीकस्तु वृक्षाम्लः शाकाम्लो रक्तपूरकः ।
अम्लवृक्षोऽम्लपूरः स्यादथ स्यात्करमर्दकः ॥ २० ॥
कृष्णपाकम(फ?)लाविम-सुषेण-स्थलकर्पटाः ।
वनशूद्रः(?)क्षीरफेनः फराम्लश्चाम्लपुष्पकः ॥ २१ ॥
करीरो ना मृदुफल ककर. क्रकचोऽस्त्रियाम् ।
शाकपुष्पो गूढपत्रस्तीक्ष्णसारो हुताशन ॥ २२ ॥
सुफलः कटुतिक्तः[27b]स्याचीक्ष्णकण्टक इत्यपि ।
गाङ्गेरुकं कर्कटकं तोदनं मृगलेण्डिकम् ॥ २३ ॥
क्रन्दनं चारुष्करस्तु तपनोऽग्निमुखो द्वयोः ।
अरुष्को वीरवृक्षः स्याद्रक्षोघ्नो रञ्जनो धनु ॥ २४ ॥
दहनाह्वः शोथकरो भल्ली भल्लातकस्त्रिषु ।
पत्रैस्तु केसराकारैः कलायसदृशैः फलैः ॥ २५ ॥
पश्चिमार्णवतीरोत्थो वृक्षस्तुबरको मत ।
वाताम च बदाम च स्निग्धमज्जफल च तत् ॥ २६ ॥
लोचनामं च वातारिरङ्कोटस्तु निकोचक ।
अकोलको गन्धपुष्पो रेची स्यात्पीतसारक ॥ २७ ॥
गुप्तस्नेहस्ताम्रफलो दीर्घकीलोऽरिकिल्लका ।
तस्मिंस्तु वामनेग्राही हुण्डी कोलम्बवर्णक ॥ २८ ॥
कठोरमल्लिका चाथ पिस्त स्याच्च मकूलकम् ।
कदली कन्दली काली रसा हस्तिबुसा तथा ।
चर्मण्वती भानुफला रम्भा मोचा च कृष्णला ।
वृन्तपुष्पा च नि सारा तृणसारा महाच्छदा ।
काष्ठीला वारणवि[28a]सा ग्रन्थिनी गजदन्तिका ।

3254 °पूर ६
3256 °पुष्पक ८
3259 °कटक ११
3261 क्रदन ५
3263 भल्लातक १२
को० क० १९
3265 तुबरको १
3266 °फल १
3267 वातारि ५
3269 °किल्लका ११
3271 °मल्लिका२, °कुलकं २

सुकुमारा मृत्युफला कथिता दत्तविग्रहा ।
मोचं फलेऽस्याः पुष्पं तु शिलीध्रं कन्दलं त्रिषु ।
तालस्तलो ना श्रीबीजो ध्वजद्रुः स महाफलः ॥ २९ ॥
दुरारोहो दीर्घदण्डो दीर्घस्कन्धो महातरुः ।
तृणराजो लेख्यपत्रो द्रुमेशः पांशुताडकः ॥ ३० ॥
नारीकेलो नारिकेलो नारिकेलिपुटोदकः ।
नारिकेरो द्वयोः पुंसि लाङ्गली कूर्चशेखरः ॥ ३१ ॥
तुङ्गः स्कन्धफलश्चोचो जीववृक्षो महाशिराः ।
तृणराजो दृढफलो दृढबीजो महाफलः ॥ ३२ ॥
दृढवृक्षो त्र्यक्षफलो लतावृक्षः शिरीफलः ।
नारिकेलासवोऽम्भोऽस्य चोचं त्वम्बुकरङ्ककम् ॥ ३३ ॥
खर्जुरः पुंसि खर्जूः स्त्री निःश्रेणिर्दृढकण्टका ।
सिंहिश्रेणी खरस्कन्धा कषायमधुराम्रजा ॥ ३४ ॥
दुःप्रधर्षा दुरारोहा भूमिखर्जूरिका पुनः ।
स्यात्कोकपर्कटी कोका स्वाद्वी तु[28b]स्वादुमस्तका ॥ ३५ ॥
मधुक्षीरा पिण्डखर्जुः सुफला च सुकण्टका ।
हिरण्यपुष्पी पूगस्तु क्रमुकः केम्बुको हुणिः ॥ ३६ ॥
गुवाकश्च गुवाकुः स्यात्खपुरः फलपुष्पकः ।
घोटा(ण्टा?) चाथ फलं तस्या उद्वेगं चिक्क-चिक्कणे ॥ ३७ ॥
संसिचिक्का स्त्रिया पूगकोशः खोलक उच्यते ।
तालाद्याः पञ्च हिन्तालस्ताल्या नाडी च केतकी ॥ ३८ ॥
तृणद्रुमाः स्युरेतेऽष्टौ काकोदुम्बरिका पुनः ।
मलपूर्मलयूः फल्गु (?)फल्गुनी जघनं फलाः ॥ ३९ ॥
अराजिः फल्गुवाटी च सफला मञ्जरी च सा ।
भवेद्घनफलश्चित्रभेषजा फलभारिका ॥ ४० ॥
अञ्जीरं मञ्जुलं च स्यात्काकोदुम्बरिकाफलम् ।

3276 °विग्रहा २०
3277 मोचं १; कैंदल ३
3285 शिरीफल २०
3286 °लासयो १; °करंकक २
3289 दुरारोहा १०
3290 कोका ३; स्वादम°
3292 हिरण्यपुष्पी १६, हुनि· ४
3294 घोटा ९
3295 चिक्का ५, खोलक १
3296 हिंताल १, केतकी १
3297 तृणद्रुमा· १
3300 °भारिका १३
3301 मजुलं २

वरुणो वरणो रोधस्तरुः सेतुस्तमालकः ॥ ४१ ॥
श्वेतपुष्पः साधुवृक्षस्तिक्तशाकः कुमारकः ।
पाश्चात्त्य उरुमानोऽसावथ श्लेष्मातको हिमः ॥ ४२ ॥
वसन्तकुसुमो लेखशाटः सा[29a]द्दहुवारकः ।
शैलूष-पिच्छिलोद्दाल-मुक्त-मुक्तफला अपि ॥ ४३ ॥
द्विजनिन्द्यः कर्बुदारः कफेलर्नारि शापितः ।
भूतवृक्षो द्विलिङ्गास्तुशमी सक्तुफला शिवा ॥ ४४ ॥
लक्ष्मीस्तुङ्गापि मङ्गल्या स्निग्धपिच्छिलपत्रिका ।
स्यान्मर्कटीफला चेयं बहला केशहृत्फला ॥ ४५ ॥
भूमीशमी शमीरोऽस्त्री शंकराह्वोऽप्यथ त्रिपु ।
शामिलिः स्रुग्विकारोऽस्यास्तत्फलं सगरं शमी ॥ ४६ ॥
गुन्द्रा गोविन्दिनी गौरी गौः प्रियङ्गुश्च विन्दिनी ।
गन्धप्रियङ्गुः फलिनी फली च प्रियकश्च सः ॥ ४७ ॥
वृत्ता श्यामा गन्धकान्ता कान्ताह्वा कामिनी प्रिया ।
कारम्भा कङ्गुनी विष्वक्सेना गन्धफलीति च ॥ ४८ ॥
पृथ्वी पुष्करपर्णी च कोलाङ्गी वर्णभेदिनी ।
अश्मन्तकोऽश्मयोनिः स्याद्युग्मपत्रोऽम्लपत्रकः ।
श्लक्ष्णत्वग्वालुकापर्णाः कुशली पापनाशकः ॥ ४७ ॥
कोविदारस्ताम्रपर्णो महाय(?)चलप[29b]त्रकः ।
कूद्दालश्चापि कुद्दाल, क्षीरद्रुः कुण्डली कुली ॥ ४८ ॥
उद्दालः स्याच्चमरकः कुण्डलः स्वल्पकेसरः ।
वरलब्धः काञ्चनको भ्रमरेष्टो मनोहरः ।
काञ्चनारिश्चमरिक आस्फोतस्तुल्यकेसरः ॥ ४९ ॥
रक्तपुष्पः श्वेतपाकशत्रुः स्यात्काञ्चनारकः ।
सप्तपर्णस्त्वयुक्पर्णः शुक्तिपर्णः सुपर्णक' ॥ ५० ॥
बहुत्वक्शाल्मलीपर्णस्त्रिपर्णो गुच्छपुष्पकः ।

---

3303 कुमारक. ९
3304 उरुमानो ९
3306 °पला for °फला.
3308 °वृक्षो १४. Post.half=Amara-kośa. 1. 752 (N. S. ed )
3310 °हृत्फला १०
3311 संकराह्वो ३
3312 शमी २
3313 विन्दिनी ६
3314 सास्य° for स.
3317 °भेदिनी १७
3319 °नाशक ८
3325 कांचनारक° ७

शारदः शारदी चाथ राजवृक्षः सुवर्णकः ॥ ५१ ॥
आरग्वधश्चार्वधश्च प्रग्रहः कृतमालकः ।
आरोग्यशिम्बि-शम्याक-संपाकाश्चतुरङ्गुलः ॥ ५२ ॥
कर्णिकारो दीर्घफलो व्याध्यन्तक-द्रुमोत्पलौ ।
आरेवतो रेवतश्च कर्णी च स्वर्णपुष्पकः ॥ ५३ ॥
कुण्डली च करिव्याधः स्वर्णद्रुः कल्पपादपः ।
स्वर्णशेफालिकाथ स्यात्पारिभद्रः प्रभद्रकः ॥ ५४ ॥
रक्तपुष्पो निम्बतरुः कण्टकी पारिजातकः ।
मन्दारुरपि मन्दारः कण्टकी शुकं(?)इत्यपि ॥ ५५ ॥
[30a]निम्बो नियमनोऽरिष्टो यवनेष्टोऽपि कुष्ठहा ।
सुभद्रः सर्वतोभद्रः पारिभद्रः प्रभद्रकः ॥ ५६ ॥
कृमिघ्नो हिङ्गुनिर्यासोऽस्त्री सुतिक्तक-मालकौ ।
पिचुमर्दश्छर्दनश्च पिचुमन्दः शुकप्रियः ॥ ५७ ॥
देवदत्तः शीर्णपर्णः प्रियशालो रविप्रियः ।
वरत्वचोऽप्यथ द्रेका तस्या रमण-रामणौ ॥ ५८ ॥
कैडर्यश्च महानिम्बः शाकसारोऽपि रम्यकः ।
पञ्चनिम्बं तु निम्बस्य पञ्चाङ्गं समुदीरितम् ।
किराततिक्तो भूनिम्बो नार्यतिक्तश्च तिक्तकः ।
रामसेनः किरातश्च नेपालोत्थस्तु हैमकः ।
कैरातः काण्डतिक्तश्च नाडीतिक्तोऽर्धतिक्तकः ।
मदना वामनो राठो गाल-गालव-पिण्डिनः ॥ ६० ॥
तस्करः करहाटश्च श्वसनो विषपुष्पकः ।
पिण्डीतकः शल्यकश्च पिण्डपुष्पश्च मरुः ॥ ६१ ॥
मातुलो बीजपुष्पश्च पुमान्मरुबकः फलम् ।
श्वेतस्त्वेष करञ्जः स्याच्चर्मकारतरुश्च सः ॥ ६२ ॥
तीक्ष्ण[30b]कीलः श्वेतवर्मपादपश्च प्रकीर्तितः ।
कृष्णोऽन्यो गंच(?)पिण्डीतो महापिण्डीतको महान् ॥ ६३ ॥

3328 शारदी १०
3331 द्रुमोत्पलो २
3334 °शेफालिका ३
3342 वरत्वचो २१
3343 रम्यक ७
3344 पंचनिंबं १
3346 किरात६५
3347 °तिक्तक- ६
3351 फलं १८
3354 पिंडीतो१, °तक्रो १

पीतकः पीतपिण्डीतः सूक्ष्मपिण्डीतकोऽपि सः ।
श्लक्ष्णपिण्डीतकः पर्णपिण्डीतो वस्तिशोधनः ॥ ६४ ॥
करञ्जः करजो नक्तमालः स्याच्चिरिबिल्वकः ।
मञ्जरीकुसुमो रक्तमालोऽथ घृतपूर्णकः ॥ ६५ ॥
प्रकीर्यः स्निग्धगु(च्छोऽसौ)सोमवल्कः सगौरकः ।
पूतीकरञ्जः पूतीकः सुमनाः कलिमारकः ॥ ६६ ॥
कलिङ्गश्चोद्रकीर्या सुतुं(?)पङ्कन्थो हस्तिचारणी ।
वल्लीकरञ्जशार्ङ्गेष्टा(?) कासघ्नी करभण्डिका ।
कैडर्यश्च सुमन्तश्च मातृनन्दन एव च ।
दन्तधावनकोऽङ्गारवल्लरी मर्कटी तथा ॥ ६८ ॥
उत्तुण्डकी काकतिक्ता सुरद्रुस्तु सुगर्भकः ॥ ६८ ॥
तिनिशः स्यन्दनो नेमिर्नेरि पाषाणगर्भकः ।
चित्रकृत्सर्वसारश्च चक्रसंवरणस्तथा ॥ ६९ ॥
आरण्यस्तु रथद्रुः स्या[31a]दतिमुक्तश्च वञ्जुलः ।
शोभाञ्जनः कृष्णगन्धस्तीक्ष्णगन्धो बहुच्छदः ॥ ७० ॥
सौभाञ्जनोऽस्त्रियां शिग्रुश्शिग्रो मोचकस्तथा ।
विद्रधिघ्निद् सालनोऽहोंऽप्यवदंशो घनच्छदः ॥ ७१ ॥
हलपत्रो वक्रभङ्गः स्त्रियां मूलकपर्ण्यपि ।
रक्तोऽसौ मधुशिग्रुः [स्या]न्मधुरो मधुशृङ्गकः ॥ ७२ ॥
स्वादुगन्धिर्गञ्जनकः सुगन्धश्च समञ्जनः ।
सिंहकेशी सुरङ्गी स्यादथ श्वेतोऽतितीक्ष्णकः ॥ ७३ ॥
मुखभङ्गो त्रिमुचति(?) चौरः श्वेतमरीचकः ।
तद्बीजं श्वेतमरिचं शिग्रुतैलं तु बैजकम् ॥ ७४ ॥
भूमीसहो द्वारदारु वरदारु खरच्छदः ।
स्थिरकच्छो महापत्रः शाकः सुरभिसारकः ॥ ७५ ॥
शालः सालः शङ्कुतरुः कार्श्योऽश्वस्तु लतातरुः ।
अजकर्णो वस्तकर्णः सर्जको रञ्जनद्रुमः ॥ ७५ ॥

---

3355 °तको २ पि
3356 °शोधनः ३
3358 °मालो ४ थ
3359 °वल्कः ४
3361 कलिंग ५; °चारणी ३
3368 वञ्जुलः ४
3372 °पर्ण्यपि १५
3375 सुरंगी ९
3377 °मरिचं १, बैजकं २
3379 °सारक' ८
3380 कार्श्यो ४

कुशिकः स्यात्स्नेहकरोऽश्वकर्णस्त्वेष शैलजः ।
सस्यसंवरणः शूरश्चीरिपत्रो गुरुच्छदः ।
[31b]तार्क्ष्यहृद्दीर्घपत्रः स्यात्पीतसालस्तु बीजकः ।
जीवकः प्रियकः काम्यो भवेद्बन्धूकपुष्पकः ॥ ७७ ॥
असनश्चासनश्च स्यादथान्यः कृष्णसर्जकः ।
सुगन्धिर्नीलनिर्यासः पुष्पवृक्षोऽलकप्रियः ॥ ७८ ॥
शौरिः कार्श्यो महासर्जः कृष्णद्रुस्तिलकद्रुमः ।
शिंशपा तु महाश्यामा कृष्णसारा युगच्छदा ॥ ७९ ॥
पिच्छिला गुरुसारा चागुरुर्मण्डलपत्रिका ।
कुशिंशपान्या कपिला भस्मगर्भावसादिनी ॥ ८० ॥
शिंशपाया विकारे स्याच्छाशपं मेघलिङ्गकम् ।
शिरीषः शुकवृक्षः स्यान्मृदुपुष्पश्च मण्डिलः ।
श्यामवल्कलभण्डीको भण्डीरः शङ्खिनीफलः ॥ ८१ ॥
प्लवगः कलमो विप्रोऽथान्यो देवशिरीषकः ।
चक्रेन्द्रको बदरकोऽप्यथ न स्त्री तमालकः ।
समौ तपिच्छ-तापिच्छौ कालस्कन्धश्च कीर्तितः ॥ ८२ ॥
महाकालस्तु किंपाको बर्बरीकोपकालकौ ।
खदिरो रक्तसारः स्यात्कु[32a]ष्ठघ्नो दन्तधावनः ॥ ८३ ॥
कण्टकी बालपत्रश्च जिह्वाशल्यक्षतक्षमः ।
यूपद्रुमो याज्ञिकश्च गायत्री तत्र च स्त्रियाम् ॥ ८४ ॥
गोराटः श्यामसारश्च शल्यको बहुशल्यकः ।
स सितः सोमवल्कः स्यात्कन्दरः श्वेतसारकः ।
पथिद्रुमोऽथासितेऽत्र नेमिद्रुः कुकुकण्टकः ॥ ८५ ॥
कालस्कन्धश्च काम्बोजी महासारोऽपि कार्मुकः ।
अथेरिमश्चारिमेद इरिमेदोऽहिमारकः ॥ ८६ ॥
गोधास्कन्धो विट्खदिरो रिमः पूत्यहिमेदकः ।
त्वक्सारः कृष्णवृक्षश्च गोधावल्ली सुमेदकः ॥ ८७ ॥

---

3382 स्नेहकरो ७
3384 °पत्रः ७
3390 °पत्रिका ८
3391 °सादिनी १
3392 °च्छाशपं १; °लिङ्गक°
3394 °फलः ७
3395 विप्रो १०
3398 °कालको ४
3403 कन्दर. for कन्दरः
3404 पथिद्रुमो ४

गोधनः कट्फलोऽथ स्यादारीः खदिरवल्लरी ।
धवो दृढः स्थिरो गौरः शाकटाक्षो भरोद्वहः ॥ ८८ ॥
धुरंधरो नन्दिनको गोत्रवृक्षस्तु धन्वनः ।
गोत्रपुष्पो धनुर्वृक्षोऽधमर्णश्च रुजाहरः ॥ ८९ ॥
महाबलः सारवृक्षः पिच्छलश्च सुतेजनः ।
रक्तस्वादुफलश्चाथ बब्बूलो बब्बुलस्तथा ॥ ९० ॥
द्रोणीमुखः[32b]सूचिपुष्पो भवेचक्रकचक्षदः (?) ।
कुक्कुटः कर्णमेयः स्यात्तसिलाभाट(?)च समता ।
विकङ्कतः स्रुवतरुर्ग्रन्थिलः स्वादुकण्टक' ॥ ९१ ॥
गोपकण्टः श्वानपादो व्याघ्रपादश्च किङ्किणी ।
यज्ञवृक्षोऽग्निवृक्षश्च पृथुबीजः सुधातरुः ॥ ९२ ॥
ऐरावणो मृदुफलः काकपादश्च कण्टकी ।
स्यात्पिण्डरोहणस्त्र्यथा लिङ्गुदी तापसद्रुमः ॥ ९३ ॥
भल्लकोऽङ्गारवृक्षश्च तिक्ताह्वो वृद्धकण्टकः ।
स्यात्पूतिपर्णिकः स्नेहमज्ञापि व्यावहारिकः ॥ ९४ ॥
बिन्दुकश्चाथ सरलः पीतद्रुः पूतिदारु च ।
उच्छ्रितं स्याद्दीपतरुश्चण्डा स्त्री स्निग्धदारु च ॥ ९५ ॥
मारीचपत्रकश्चाथ हारिद्रः पीतवृक्षकः ।
कदम्बपुष्पकः श्रीमान्हरिद्रक-मरूद्भवौ ॥ ९६ ॥
दार्वी पचंपचा गौरी पर्जन्या पर्जनी च सा ।
कटंकटेरी हेमाभा तथा दारुहरिद्रिका ॥ ९७ ॥
कालीयकश्च[33a]न स्त्री स्यात्पीतदारु च पीतनम् ।
न स्त्रियां देवदारुः स्यात्सुरदारु च दारु च ।
भद्रदारु स्नेहविद्धं किलिमं च सुराह्वयम् ॥ ९७ ॥
पारिभद्रः पीतदारु पूतिदारु सुदारु च ।
कर्पटं च महादारु सुमङ्गल्येन्द्रदारुणी ॥ ९८ ॥
भीडा तारा गन्धवधूर्वातप्रमा भूतनाशनी ।
नपुंसि तरुणी चाथ द्वंद्वे रालोऽग्निवल्लभः ॥ ९९ ॥

---

3409 कट्फलो१४, °वल्लरी २
3411 नंदितको ६
3414 °फल ११ श्चाथ
3418 किंकणी for किङ्किणी
3420 कंटकी १६
3421 °रोहण ११
3423 °कर्णीकस्नेह°
3424 विन्दुक १०
3426 °पत्रक ८
3427 °द्रवौ ६

दीपवृक्षः सर्ज-सर्जरस-सर्वरसा गलः ।
बहुरूपो यक्षधूपः स्निग्धदारुश्च शीतलः ॥ २०० ॥
शक्रद्रुरसनिर्यासः श्रीकरो देवधूपकः ।
कान्तः कलकलश्चाथ श्रीवेष्टः सल्लकीद्रवः ॥ १ ॥
रक्तशीर्षः पायसश्च श्र्यङ्कः क्षीरश्रवस्तथा ।
श्रीवासोऽपि चदच्याह्वो(?) वृकधूपक इत्यपि ॥ २ ॥
रसाङ्गस्तिलपर्णी स्यात्कुम्भोलूखलकं पुनः ।
कौशिकः कालनिर्यासः पुरो गुग्गुलु गुग्गलौ ॥ ३ ॥
नक्तंचरः शिवो दुर्गो देवधूप-ज[33b]टायुपौ ।
सर्वसह-मरुद्वाय-महिपाक्ष-जटायवः ॥ ४ ॥
खलको वायुसारोऽपि यातुकन्दः पलंकपः ।
उलूखलं च कुम्भः स्यात्तन्निर्यासमिदं पुनः ॥ ५ ॥
हिरण्यः कुमुदः पद्मो महिषाक्षो महासितिः ।
स्वनामवर्णाः सर्वे स्युः सल्लकी तु महेरणा ॥ ५ ॥
कङ्कारी गन्धवीरा च वल्लकी व्रणरोपणी ।
सुस्रवा सुरभिर्मोचा ह्लादिनी च ह्रदा रसा ॥ ६ ॥
गलरक्षी कुन्दुरुकी भक्तितिक्ताथ कुन्दुरुः ।
मुकुन्द-कुन्दौ पालिन्दः सुगन्धो भीषणो बली ॥ ७ ॥
नागः श्रीवल्लभः स्वक्षो मेचकः खपुरो मुनिः ।
चन्दनोऽस्त्री मलयजं भद्रश्रीर्गन्धसारकः ।
जाकुटश्च पटीरश्च श्रीखण्डो रोहिणद्रुमः ॥ ८ ॥
हिमं महार्हं मलयं श्वेतं स्याच्चन्द्रकान्तकः ।
हरिचन्दनमस्त्री स्याद्गोशीर्षं तैलपर्णिकः ॥ ९ ॥
मलेष्टं पीतकाष्ठं च कालीयं हरिवल्लभम् ।
कालसारं तु कालेयं कालीयं वशिकं तथा ॥ १० ॥
जोंगं कालानुसार्यं च वनच[34a]न्दनमस्त्रियाम् ।
नातिशीततमं श्वेतं कैरातं च शिलोद्भवम् ।

---

3435 मूत ५
3436 तरुणी २१
3440 °कलधा १५ य
3443 °पर्णी ११
3446 °जटायव ४
3448 कुंभ २१
3449 महिपाख्यो १
3453 °तिक्ता १५ य
3458 °कांतक ११
3460 °वल्लभ ७
3463 शिलोद्भवं २

बर्बरोत्थं श्वेतवर्णं निर्गन्धबर्बराह्वयम् ।
रक्तचन्दनमस्त्री स्याद्रक्तसारं च लोहितम् ॥ ११ ॥
कुचन्दनं रञ्जनं च हरिचन्दनमस्त्रियाम् ।
ज्योतिष्टोमं किरातं च ज्योतिरक्तारुणद्रुमौ ॥ १२ ॥
सात्क्षुद्रचन्दनं शैलभवेऽन्यत्तु कुचन्दनम् ।
पत्राङ्गं स्याच्च पत्रङ्गं रक्तकाष्ठं सुरङ्गकम् ॥ १३ ॥
पत्तूरं पत्ररागं च पट्टरञ्जनमेव च ।
मार्यावृक्षोऽयमन्यश्च कटुका शणपुष्पिका ॥ १४ ॥
अगुर्वगरु चायुस्कं राजार्हं जोङ्गकं तथा ।
कृमिजं कृमिजग्धं स्यादनार्यमसिते त्विह ॥ १५ ॥
कृष्णागरुर्लध्वगरु कृष्णशीर्षं च वंशिकम् ।
कृष्णशृङ्गं नरेन्द्रार्हं लोहाह्वं काकतुण्डकम् ॥ १६ ॥
मल्लिगन्धि तु मङ्गल्यमस्त्री भूर्जः स्थिरच्छदः ।
चित्रपत्रो मृदुत्वक्को भूजो भूतहरः शिवः ॥ १७ ॥
लैख्यपत्रो बहुपुटश्चर्मी कालः पृथुत्वचः ।
[34b]शाल्मलिस्तु द्वयोर्मोचा पिच्छिला स्थिरजीविता ॥ १८ ॥
कुक्कुटी च स्थूलफला रक्तपुष्पा च पूरणी ।
कण्टकाढ्या रक्तफला मानद्रुमोतुलद्रुमः ॥ १९ ॥
कुशाल्मलिः शाल्मलिको रोचनः कूटशाल्मलिः ।
शाल्मलीवेष्टकः पिच्छा शाल्मलो वेष्टकस्तथा ॥ २० ॥
मोचस्रावो मोचरसो मोचनिर्यास-मोचकौ ।
रोही रोहितको रक्तो रक्तभो रक्तपुष्पकः ॥ २१ ॥
रोहिणो रोचनः प्लीहशत्रुर्दाडिमपुष्पकः ।
लोहितो रोपणः कूटशाल्मलिः पारिजातकः ॥ २२ ॥
अरिष्टो रक्तबीजश्च पीतफेनश्च फेनिलः ।
रक्तफलः सुमङ्गल्यो गर्भपात्यर्थसाधनः ॥ २३ ॥

---

3466 °चंदन ७
3468 °चंदनं ५
3470 °रंजन ८
3471 शणपुष्पिनिदष्टी २ का २ corrupt.
3473 °दनार्यं ७
3476 मंगल्यं २
3478 °चर्मी १०; पृथुत्वचः १

3479 शाल्मलि १
3481 °द्रुमः १२
3482 °शाल्मलि ४
3484 °स्रावी
3486 रोहणो
3487 °जातकः ११

कृष्णबीजः शीतफेनोऽप्यथ वारिप्रसादनम् ।
छेदनीयं मूतफलं कन्तं(तं) कतकमक्षिदम्॥ २४ ॥
द्रविडं चंघूलं(?) कार्क्षमथो कुटज-कूटजौ ।
कलिङ्गो मल्लिकापुष्प इन्द्रवृक्षश्च वत्सकः ॥ २५ ॥
काही च गिरि[35a]मल्ली स्त्री कुटजी स्वेष तुच्छकः ।
वरतिक्तः शक्रनामा वृक्षकः पाण्डुपादपः ॥ २६ ॥
मल्लिका नीलयष्टिः स्याद्बीजे त्वस्येन्द्रबीजकम् ।
भवेद्भद्रयवः पुंसि फलं त्विन्द्रयवो भवेत् ॥ २७ ॥
कलिङ्गकः शक्रनामा स्यादथो मोक्ष-मुष्ककौ ।
गोलीढो गोलिहो मुष्टिर्मुष्ककः सूर्यकस्तथा ॥ २८ ॥
क्षारश्रेष्ठः क्षारवृक्षः पाटलः क्षुद्रपाटलः ।
खरशाखी स्त्रियां घण्टा द्विधासौ शुक्लकृष्णतः ॥ २९ ॥
वेलंतरो वीरतरुर्दीर्घमूलोऽश्मकृच्छ्रहा ।
क्षुरधारो वधाकारो दीर्घपत्रो महानिलः ॥ ३० ॥
अश्वक्षुरः श्वेतपुष्पी श्वेता च श्वेतनासिका ।
विषघ्नी गिरिकर्णी च कटभी किणिही तथा ॥ ३१ ॥
आस्फोता दधिपुष्पी खट्वाथाथ(?)पराजिता ।
गर्दभी जनिका सूर्या श्वेतपाटलिपिण्डका ॥ ३२ ॥
विष्णुक्रान्ता गवाक्षोऽथ नीलपुष्पा गवादनी ।
महाश्वेताऽव्यक्तगन्धा वज्रस्तु स्यान्महातरुः ॥ ३३ ॥
समौ सीहुण्ड-सेहुण्डौ गण्डीरः ख[35b]ङ्गपत्रकः ।
बहुस्रावो बहुक्षीरो वज्रतुण्डक इत्यपि ॥ ३४ ॥
समन्तदुग्धा स्नुक् स्नुह्यः स्नुहा चैव विषाणिका ।
सुधा गुडा चाथ वज्रवल्ली स्याद्धस्तिशुण्डिका ॥ ३५ ॥
वनालिकास्थिसंहारो वज्राह्वा चामरा च सा ।
स्नुह्यपामार्गहलिनी धवार्कतिलमुष्ककैः ।

3490 शीतफेनो १०
3492 कार्क्ष ९
3494 कोद्दिव for काहीच; गिरिमल्ली ८
3496 मल्लीका; °यष्टिः ८
3497 °यवः २
3498 दाकनामा ३
3499 मुंजकः
3501 घंश ११११
3503 महानिलः ८
3508 गवाक्षो १७
3509 °गन्धा ४
3511 इत्यपि ५
3513 सुधागुडा १६
3514 चामरा ६

कुटजेन च संयुक्तैः सुद्दष्टकमुदाहृतम् ।
एरण्डो यक्षहस्तः स्यादुबुर्गन्धर्वहस्तकः ॥ ३६ ॥
पञ्चाङ्गुलो वर्धमानो डिम्बो चातारिरप्यसौ ।
सितस्तूत्तानपत्रोऽयं गन्धर्वो दीर्घदण्डकः ॥ ३७ ॥
तरुणो रुचकश्चञ्चू रक्तस्तु गजकर्णकः ।
व्याघ्रो व्याम्रतलो व्याघ्रपुच्छो लोहितशीर्षकः ॥ ३८ ॥
मण्ड आमण्ड आदर्णडो व्याडम्बश्च व्यडम्बरः ।
रूबूको रुबुकश्चोरुबूकः स्यात्रिपुटीद(फ)लः ॥ ३९ ॥
भवेदुरुबुको रक्तपत्रो रक्तजटोऽपि सः ।
कासमर्दस्तु काशारिः कर्कशश्चारिमर्दकः ॥ ४१ ॥
कालंकततरुस्तूक्तः स प्रोक्तः कासमर्दनः ।
शुपा तु का [36a] समर्दी स्यात्समौ पिचुल-कावुकौ ।
तुम्बुरुः सौरसः सौरो वनजस्तीक्ष्णपत्रकः ।
तीक्ष्णव(क)ल्कस्तीक्ष्णफलः शोधनश्च महामुनिः ।
हरीतकी त्रिष्वमृता जया च विजयाऽभया ॥ ४० ॥
पथ्याऽव्यथा च कायस्था वयःस्था प्राणदा शिवा ।
प्रपथ्या पूतना हेमवती स्याद्रोहिणी च सा ॥ ४१ ॥
चेतकी स्याद्विलवणा भिषङ्माता च रोगहृत् ।
शक्रभक्ष्याथ तद्भेदाः सप्तायुर्वेद ईरिताः ॥ ४२ ॥
सा स्थूलवृत्ता विजया सुवृत्ता रोहिणी मता ।
पूतनास्थिमती सूक्ष्मा स्थूलमांसा तु साऽमृता ॥ ४३ ॥
अस्रा तु चेतकी ज्ञेया पञ्चास्रा त्वभया भवेत् ।
सुवर्णवर्णा जवनी कथिता सा भिषग्वरैः ॥ ४४ ॥
तिष्या तिष्यफला धात्री वयस्था चामृतोद्भवा ।
शिवा वृष्यफला वृष्या दिव्या सीधुफलापि सा ॥ ४५ ॥
सुधाफला कर्षफला जातीफलरसापि सा ।
आमला त्रिष्वामलकी मण्डा स्यादथ तत्फले [36b] ॥ ४६ ॥

---

3518 चातारि ८
3520 चञ्चु ९
3524 रक्तजटो १७
3526 कालंकततरिमुक्तः for prior half.
3527 °मर्दी२; °कावुकौ २
3534 शक्रभक्ष्या १०
3535 विजया १; रोहिणी १
3536 सामृता १
3537 चेतकी १; त्वभया १
3538 जयंती १ for जवनी
3542 मंडा१६; तत्फलौ

माकन्दी स्त्री श्रीफलं च कोमलं न स्त्रि (?) चामलम् ।
बदरामलकं रक्तं प्राचीनामलकं हि यत् ॥ ४७ ॥
शृङ्गी धात्री चामलकी शुक्तिः शुष्कामलक्यपि ।
सर्वौषधिरसंमिश्रः संशुष्कामलकत्वचः ॥ ४८ ॥
सुगन्धामलक ह्येते (?) भवेत्पारावती पुनः ।
ज्योत्स्ना मुक्ताफलं राजामलकी लवली च सा ॥ ४९ ॥
शिवा बहुसुता च स्याद्दृढपादा हिमालया ।
भूधात्री च जटामाला विपघ्नी च वितुन्नकः ॥ ५१ ॥
बिभीतकस्त्रिषु पुमानक्षस्तुषफलः कलिः ।
संवर्तकः पिशाचद्रुर्मधुजीवो विभेदकः ॥ ५२ ॥
भूतावासश्च शाखोटो भवेत्कर्षफलोऽपि सः ।
एतस्य फलमक्षोऽथ पथ्याधात्रीबिभीतकैः ॥ ५३ ॥
क्रमवृद्धैः फलश्रेष्ठा *** ह्वा च फलोत्तमा ।
त्रिफला तृफला च स्यात्तृपला च फलत्रयम् ॥ ५४ ॥
त्रिवर्णकं चाथ बिल्वो मालूरश्च महाफलः ।
श्रीनामा श्रीफलो हृद्यगन्धो गन्धफलस्तथा ॥ ५५ ॥
शाण्डि[37a]ल्यश्च शलाटुश्च शैलूषः पूतिमारुतः ।
शाचीको ग्रन्थिलः सत्यधर्मा स्यान्नीलकण्टकः ॥ ५६ ॥
महाकपित्थस्तीक्ष्णाक्ष्यो वातसारो वरारुहः ।
मङ्गल्यः स्यात्पीतफलः सर्वरूपश्च कङ्कटः ( कण्टक ? ) ॥ ५७ ॥
सदाफलः कृष्णमुखो गन्धगर्भ(?) सरस्वती ।
नीलवल्ली नीलमल्ली रुच्यः स्याद्गोहरीतकी ॥ ५८ ॥
स्याद्बिल्वकर्कटी बिल्वकर्कटी पेशीबाले फलेऽस्य च ।
बैल्वं तैलं फलं वास्य विकारे मेयलिङ्गगम् ॥ ५९ ॥
श्रीपर्णी सर्वतोभद्रा गम्भारी काश्मरी हिरा ।
काश्मीरी मधुपर्णी च हीरा भद्रा विदारिका ॥ ६० ॥
गोपभद्रा भद्रपर्णी क्षीरिणी रोहिणी पुरा ।
कृष्णवृन्ता च सृष्टिः स्यात्कम्भारी एफला च सा ॥ ६१ ॥

3543 चामलं १
3545 शुष्कामलस्य ४ पि
3547 °मलक १
3548 लवली ५
3550 वितुन्नकः १९
3553 कर्षफलो ११
3554 °मक्षो १ थ पथ्या १ धात्री १
3564 हरीतकी ३१
3565 पेशी २
3566 बैल्वं १

काश्मर्यो मिथुनेऽथ स्यादरणिर्नाऽग्निमन्थकः ।
मन्थानो वह्निमथनो मन्थतेजोद्रुकेतवः ॥ ६२ ॥
तनुत्वचा च तर्कारी नादेयी वैजयन्तिका ।
कणिका पानकाह्वा च श्रीपर्णं चाऽ[37b]सिता पुनः ॥ ६३ ॥
द्वयोर्जया जयन्ती स्त्री विजया च जयावहा ।
वसन्तदूतिका कामदूतिका कालवृन्तिका ॥ ६४ ॥
कुम्भीका ताम्रकुसुमाऽमोघा कालाम्बुवासिनी ।
काचस्थाली तथास्थाली पाटला पाटलिर्द्वयोः ॥ ६५ ॥
श्वेताह्वा श्वेतकुम्भीका कुवेराक्षी फलेरुहा ।
स्यात्काष्ठपाटलाऽथ स्यादिटुकष्टिन्दु-भल्लुकौ ॥ ६६ ॥
मयूरजङ्घोऽरलुकः कट्वङ्गश्च कटंभरः ।
शुकन्या(ना)सो दीर्घवृन्तः फल्गुवृन्तः कुटंनटः ॥ ६७ ॥
मण्डूकपर्णः पत्रोर्णः स्योनाकः शोणको नटः ।
भल्लूक-भल्ल-ऋक्षाश्च भूतद्रुः पृथुशिम्बिकः ॥ ६८ ॥
प्रियंजीवोऽप्यङ्गवृक्षोऽप्यथ विल्वादिपञ्चकम् ।
स्यान्महापञ्चमूलाह्वमथ पुष्पद्रुमाः परे ॥ ६९ ॥
पुंनागः पुरुषाह्वः स्यात्केसरो रक्तकेसरः ।
पद्मकेसरकस्तुङ्गः सुरेष्टः सुरपर्णिकः ॥ ७० ॥
चाम्पेयः कनकाह्वः स्यान्नागाह्वो नागकेसरः ।
मेरुजो हेमपुष्पः स्यात्केसरः[38a] सर्ववल्लभः ।
प्रोक्तः करिकुसुम्भाह्वो नागकेसरचूर्णकः ॥ ७१ ॥
चाम्पेयश्चम्पको हेमपुष्पको रम्य-चाम्पकौ ।
चञ्चरीकातिथिः स्वर्णसंज्ञः स्याद्भ्रलङ्घकः ॥ ७२ ॥
तत्कली स्याद्गन्धफला वहुलस्तु वकूलकः ।
वाकूलकः सीधुगन्धो गूढपुष्पश्च शारदः ॥ ७३ ॥
शिबी केसरकः सिंहः केसरो मेघदोहदः ।
अशोको नरि कङ्केली रक्तमञ्जरिको नटः ॥ ७४ ॥

---

3571 काश्मर्यो २१
3574 श्रीपर्णं चा १४ सिता
3575 जयावहा ४
3579 श्वेताश्वो for श्वेताह्वा
3580 °पाटला ४
3585 °प्यंगवृक्षो २३
3586 °मूलाह्व १
3587 °पर्णिक. ८
3594 गंधफला १
3596 °दोहदः १०

शोकनाशो विचित्रश्च कामुकः कर्णपूरकः ।
हेमपुष्पः पिण्डपुष्पो गन्धपुष्पोऽपि वञ्जुलः ॥ ७५ ॥
कीताद्रुर्दोहदो रक्तो गौराङ्गश्चित्रगुच्छकः ।
मुचुकुन्दः क्षत्रवृक्षः श्रीतरुः प्रतिविष्णुकः ॥ ७६ ॥
धुको बको रुद्रनामा वसुको रुद्रकेसरः ।
कपिमालः किण्वमूलः सुव्रतः स्थूलपुष्पकः ॥ ७७ ॥
शिवमल्ली चाथ कुम्भयोनिर्मधुरशिग्रुकः ।
यतिर्मुनिद्रुमो वङ्गसेनश्चातुर्थिकापहः ॥ ७८ ॥
कदम्ब[38b]स्तु कलम्बः स्यात्प्रावृषेण्यो हलिप्रियः ॥ ७६ ॥
पुलकी कुत्सिताम्बश्च प्रियकः पर्वताधिपः ।
कादम्बर्यश्च सूराक्षोऽप्यथ नीपो वसन्तजः ॥ ७७ ॥
धूलीकदम्बको वृत्तपुष्पो हारिद्र इत्यपि ।
सुवासो गदितो धाराकदम्बोऽस्य तु केसरः ॥ ७८ ॥
पार्परं करुणस्तु स्यात्क(?)स्ताहः कण्टकद्रुमः ।
वृहत्पुष्प *[श्च] नीचश्च मल्लिकापुष्प-कुब्जकौ ॥ ७९ ॥
साद्रद्रतरुणी चाथ समौ बन्धू[क]-बन्धुकौ ।
रक्तकः शारदो बन्धुजीवो माध्यं तु न द्वयोः ॥ ८१ ॥
करवीरः शतप्रासः प्रतीहासोऽश्वमारकः ।
मीनकाक्षः शातकुम्भः स बीजकुसुमोद्भवः ॥ ८२ ॥
रक्तपुष्पस्तु लगुडश्चण्डातो गुल्मकस्तथा ।
गणेरुका स्वर्णपुष्पी गणेरुर्गणकारिका ।
कर्णाङ्कश्च करेणुश्च कोको वर्णमनोहरः ।
द्रुमोत्पलः कर्णिकारः परिव्याधः ससौरभः ॥ ८३ ॥
सिन्दुकः स्याच्छीतसहः सि[39a]न्दुवारश्च सिद्धकः ।
श्वेतपुष्पेन्द्रसुरसौ तिलपुष्पक इत्यपि ॥ ८४ ॥
निर्गुण्डी द्राणिका चाथ नीलिका नीलमञ्जरी ।
शेफालिका च सुवहा निर्गुण्डी वनजा च सा ॥ ८५ ॥

3599 वंजुलः १२
3600 °गुच्छक ३
3601 °विष्णुकः ४
3604 शिवमल्ली १४
3605 °कापहः ६
3608 सूराक्षो १०
3610 °कदंबो ७
3611 पार्परं १
3612 °कजकौ for °कुब्जकौ
3614 जीवो ५
3617 गुल्मकः ४
3623 द्राणिका १

कृष्णसंज्ञो विषघ्नश्च पवित्रो गिरिसिन्दुकः ।
भूपदी श्वेतसुरसा सुगन्धा तत(?)वेशिका ।
तिलकश्छत्रकुसुमः क्षुरकः खुरकोऽपि सः ।
मुचिलिन्दो विचित्रश्च स्त्रीनिरीक्षणदोहदः ॥ ८६ ॥
लक्ष्मीवान्पूर्णको रेची मुखसंहननो विटः ।
अम्लानस्त्वमिलातः स्याद्वर्णपुष्पो महासहा ॥ ८७ ॥
परिम्लानश्चोरटोऽथ रक्तः कुरवकश्च सः ।
पीतपुष्पः किंकिरातः किंकिरीटश्च पीतकः ॥ ८८ ॥
पीतभद्रो हेमगौरो विप्रलोम्यलितोपदः ।
कुरण्टकः कुरण्ठश्च नीलस्त्वार्तगलश्च सः ॥ ८९ ॥
राजसैरेयकः केशरञ्जकः शाणकस्तथा ।
झिण्टी दासी द्वयोर्बाणा भवेदोदनपा[39b]क्यपि ।
सैर्यको युग्भवन कुरण्टकभेदाः सहचरः । (corrupt)
********** सैरेयश्च सहाचरः ॥ ९० ॥
अर्जको मृदुपुष्पश्च तत्र झिण्टी स्त्रियां भवेत् ।
अरुणोऽसौ कुरुवकः पीतस्त्वेव कुरण्टकः ॥ ९१ ॥
द्वयोः सहचरी चाथ नील आर्तगलो भवेत् ।
जपा जवा ओड्रपुष्पं वज्रपुष्पं तिलस्य तद् ॥ ९२ ॥
मल्लिका शीतभीरुश्च मदयन्ती प्रमोदिनी ।
मदनीया गवाक्षी च भूपदष्टपुटी तथा ॥ ९३ ॥
भद्रवल्ली चन्द्रवल्ली सुगन्धा माधवी च सा ।
मुकुटस्तृणशूल्यं वा अस्त्रा स्त्वेया च वार्षिकी ॥ ९४ ॥
त्रिपुटा च सुरूपा च स्याद्वर्णा मुक्तबन्धना ।
वनोद्भवा तु सास्फोटा सैव स्याद्गिरिमल्लिका ॥ ९५ ॥
मागधी गणिकाम्बष्ठा यूथिका बलि(बाल?)पुष्पिका ।
गुणोज्ज्व(!)ला पुण्यगन्धा हसन्ती च शिखण्डिनी ॥ ९६ ॥
शङ्खपुष्पी श्वेनयूथी पीतासौ हेमपुष्पिका ।

3626 °वेशिका ४
3631 °चोरटो६; कुरवक २
3634 कुरंट १० य
3635 °सैरेयकः ८
3640 कुरवकः १ पीतस्त्वे°
3641 सहचरी २; °गलो १
3642 °पुष्पं १ वज्रपुष्पं १
3646 शूल्य वा ४
3647 °बंधना ५
3648 °मल्लिका २
3649 °पुष्पिका ४
3651 °यूथी २; °पुष्पिका ४

हरिणी मीतिका चाथ वारमोटातिशोणका ॥ ९७ ॥
अति[40a]मुक्तो मुद्रु(द्र?)रः स्यान्मण्डको भ्रमरोत्सवः ।
पुण्ड्रकः स्याद्विचकिलः सुगन्धश्चापि कामुकः ॥ ९८ ॥
स्याद्वेलाकैनकी सा च वासन्ती माधवी लता ।
मालती सुमना जाती राजपुत्री प्रियंवदा ॥ ९९ ॥
मनोज्ञा हृद्यगन्धा च चेतकी तैलभाविनी ।
प्रहसन्ती रात्रिपुष्पी कुन्दाह्वा मरुबान्धवी ।
सुवसन्ता शीतवासा सरणी दन्तनिर्मला ।
सप्तला तु सुगन्धा स्याद्वैष्मिका नवमालिनी ॥ २०० ॥
नेपाली शिग्रुगन्धा चाम्लायिनी वटपत्रिका ।
मोदिनी सुकुमारा च कान्ता च शिखरिण्यपि ॥ १ ॥
सिन्दूरी तु त्रिसंध्या स्याद्रक्तपुष्पा सुकोमला ।
तरणी रामतरणी कर्णिका चारुकेसरा ॥ २ ॥
कूर्पिका च सुगन्धाढ्या कुमारी कुब्जवल्लिका ।
बृहत्पुष्पा सहा भृङ्गसंगता कण्टकावृता ॥ ३ ॥
महाकु*[मा]रिका चाथ जलजा जलकुब्जिका ।
केतकी जम्बुकाह्वः स्यात्सूचीपुष्पो हलानकः [40b] ॥ ४ ॥
करशून्यं करतृणं सुगन्धं ककचच्छदः ।
स्यात्स्वर्णकेतकी राजकेतकी कुसुमोत्तमा ॥ ५ ॥
दलामली दमनको दान्तः स्यात्पाण्डुरागकः ।
गन्धोत्कटं पुण्डरीकं मुनिर्ब्रह्मजटा तथा ॥ ६ ॥
भवेन्मरुवको बीजपुष्पः खुरखुकः सुखः ।
रूपिकार्कः क्षीरपर्णो गणरूपो विकीरणः ॥ ७ ॥
आस्फोतश्च सदापुष्पः खरवङ्कफलस्तथा ।
राजार्कस्त्वेव रक्तः स्यात्तत्फलं क्ष्वेडमुच्यते ॥ ८ ॥
सितस्त्वलर्को मन्दारो वसुकश्च प्रतापसः ।
विकीर्णकः सदापुष्पः क्षतक्षीरो गणप्रियः ॥ ९ ॥

---

3652 °शोणका २
3655 °लता १
3657 °भाविनी ९
3659 °निर्मला १
3662 °शिखरिण्य १२ पि
3663 सुकोमला ४
3667 महाकु*रिका १३ ; °वुब्जिरा २
3669 ककरच्छदः ५
3670 राजकेतकी repeated, °मोत्तमाः ३
3672 ब्रह्मजटा ७
3673 सुखः ४
3675 °फल ८ सुधा
3676 राजार्क १
3678 गणप्रियः ८

धूर्त्तो धत्तूर उन्मत्तो देविता तरलः शठः ।
घाण्टिकः कनकाह्वश्च काहलापुष्प-मातुलौ ॥ १० ॥
धुर्त्तरो मदनस्तूरी फल मातुलपुत्रकः ।
शङ्खिनी चोरपुष्पी स्याद्दृढफेना सुकेशिनी ॥ ११ ॥
यशस्करी वेत्रमूला ग्रन्थिका चन्द्रनन्दिनी ।
चौरी निशाचरी चण्डा नाकुली च विसर्पिणी ।[41a] ॥ १२ ॥
दृढपादाथ महती भवेत्सा कम्बुपुष्पिका ।
शिवब्रह्मा कम्बुलता शङ्खिनी ॐ [क]म्बुमालिका ॥ १३ ॥
मङ्गल्यपुष्पी मङ्गल्या क्षीरपुष्पी मनोरमा ।
रक्तपुष्पा सुभद्रासौ सर्पाक्षी सूक्ष्मपत्रिका ॥ १४ ॥
विष्णुक्रान्ता नीलपुष्पा सफल चापराजिता ।
मत्स्याक्षबीजोऽर्कसुतो विषबीजो विषोदरः ॥ १५ ॥
मण्डूकपर्णी मण्डूकी रविवल्ली वरौषधी ।
सुवर्चलार्कभक्ता च वरदा मूलपर्ण्यपि ॥ १६ ॥
अर्ककान्ता सत्यनामा सूर्यावर्त्ता सुनागरिका ।
अर्कॐ[पु]ष्पी तु सा पृथ्वी पार्थो ब्रह्मसुवर्चला ॥ १७ ॥
कपोतवक्रा ब्राह्मी तु ब्रह्मसोमा सरस्वती ।
मध्या सत्यवती दिव्या वयःस्था सोमवल्ल्यपि ॥ १८ ॥
कपोतवङ्का मण्डूकी ब्राह्मणी दर्दुरच्छदा ।
मण्डूकपर्णी मत्स्याक्षी लावण्या च महौषधी ।
हिलमोची शङ्खधरा जलब्रह्मी झषाण्डिका ॥ १९ ॥
हयुषा विद्युषा विस्रा मत्स्यगन्धा वि[41b]पापहा ।
तथाश्वत्थफला ध्वाङ्क्षनाशिका कच्छुनाशिनी ॥ २० ॥
श्रावणी श्रवणा मुण्डी भिक्षुकी श्रुतिशीर्षिका ।
अलम्बुसा श्रीमती च महामुण्डी तु मुण्डिनी ॥ २१ ॥
कदम्बपुष्पी गोशाला भवेद्ग्रन्थिनिकारुणा ।
वृद्ध कुलहलो बोटो भूकदम्बस्तपोधनः ॥ २२ ॥
अन्यो देवकदम्बः स्यात्स्यहा द्रोणाथ कुम्भिका ।

---

3681 °नस्तुरी १२, °पुत्रक १
3685 दृढपादा १४
3687 मनोरमा १
3688 °पत्रिका ४
3693 सुनागरिका १२
3695 तपोतवक्रा ५
3699 झषाण्डिका ४
3701 °नाशिनी ८
3703 श्रीमती च ७
3706 द्रोणा २ ४

द्रोणपुष्पा कुम्भयोनिर्द्रोणा सैव कुरंबकः ॥ २३ ॥
स्यात्कौण्डिन्य ※ ※ ※ ※ छिन्ना छिन्नरुहामृता ॥ २२ ॥
वत्सादनी गुडूची च जीवन्ती सोमवल्ल्यपि ।
चन्द्रहासा लता सोमा वयःस्था चक्रलक्षणा ॥ २४ ॥
तन्त्रिकामृतवल्ली च विशल्या मधुपर्ण्यपि ।
छिन्नोद्भवा वरा च स्यात्कुण्डली मण्डली तथा ॥ २५ ॥
पिण्डामृता लतिच्छिन्ना शच्याभा कन्दरोहिणी ।
अटरूषा स्यादटरूषः सिंहास्यो वाजिदन्तकः ॥ २६ ॥
वाशको मातृका वाशा सिंहिका सिंहपर्ण्यपि ।
शीतवल्ली भिषज्मा[42a]ता वृषः स्त्रीपुंसयोरपि ॥ २७ ॥
मेदोगला विरजनी मृगदन्ती खरत्वरा ।
अलम्बुसा गन्धवती मदयन्ती खरत्वचा ॥ २८ ॥
वार्ताकी बृहती सिंही भण्टाकी स्थूलकण्टिका ।
कुली कण्टकिनी कान्ता राष्ट्रिका दुःप्रधर्षिणी ॥ २८ ॥
महोटिका च भण्टाकी बहुपत्रा विधानिका ।
क्षुद्रा तु कण्टकी व्याघ्री कण्टाली कण्टकारिका ॥ २९ ॥
प्रचोदनी धावनी च दु स्पर्शा राष्ट्रिका स्पृशी ।
निदिग्धिका च बृहती कासघ्नी दुःप्रधर्षिणी ॥ ३० ॥
श्वेतसिंही तु चन्द्राह्वा लक्ष्मणा चन्द्रपुष्पिका ।
विन्ना स्नेहफला रामा पुत्रदात्री प्रियंकरी ॥ ३१ ॥
स्यात्पुत्रिणी जयन्ती च रक्तबिन्दुच्छदा च सा ।
नागिनी मूलिनी नागाप्यथ सर्वानुकारिणी ।
शालिपर्णी दीर्घपर्णी कुमुदा शोथनाशिनी ॥ ३२ ॥
विदारिगन्धांशुमती त्रिपर्ण्यतिगुहा स्थिरा ।
अंशुपर्णी पीतनी च तन्वीः सैव ध्रुवाभिधा ॥ ३३ ॥
दीर्घमूला पार्णिनी च[42b]महाक्षीतनिकापि सा ।
पृश्निपर्णी पृथक्पर्णी क्रोष्टुविन्ना च पर्णिनी ॥ ३५ ॥

---

3707 °योनी द्रोणा
3708 कौंडिन्य ६
3712 मंडली २१
3713 °रोहिणी ४
3716 र्ष १२
3719 भांटाकी
3721 भटोकी बहुपुत्रा विधाविका १४
3723 कान्नी for स्पृशी
3724 °धर्षिणी १४
3728 नागा ११
3732 °क्षीतनिका १७

शष्कुली श्वृतिका दीर्घा क्षीतनी क्रोष्टुमेखला ।
गोकण्टको गोक्षुरको भक्षुरो व्यालदंष्ट्रकः ॥ ३६ ॥
त्रिकटश्च त्रिकण्टश्च वनशृङ्गाटकस्त्रिकः ।
मक्षटः स्थलशृङ्गाटः श्वदंष्ट्रः स्वादुकण्टकः ॥ ३७ ॥
क्षुरः पलंकषा च स्याच्छ्वदंष्ट्रा चेक्षुगन्धिका ।
पञ्चमूलं लघुबृहत्पादपो लक्ष्मणा विना (?) ॥ ३८ ॥
दशमूलं लघुबृहत्पञ्चमूलद्वयेन च ।
वायसोली तु काकोली काका स्यात्स्वादुमासिका ॥ ३८ ॥
वयःस्था मेदुरा धीरा धीरा स्वा*** [दुरसा]पि सा ।
क्षीरिणी क्षीरकाकोली क्षीरशुक्ला विषाणिका ॥ ३९ ॥
क्षीरा विकारिका चोक्ता वयःस्था जीववल्ल्यपि ।
मेदा मेदोभवा विद्या तथा पुरुषदन्तिका ॥ ४० ॥
अल्पपर्णी धरा श्यामा मधुरा जीवनी च सा ।
महामेदा देवमेदा महापुरुषदन्तिका ॥ ४१ ॥
मणिच्छिद्रा देवमणि[43a]र्मधुरा वसुरन्भिका ।
माषपर्णी सूर्यपर्णी पाण्डुरा हयपुच्छिका ॥ ४२ ॥
हंसमाषा स्वादुमाषा मासमाषा महा * *[सहा] ।
काम्बोजिका सिंहवृचा मुद्गला च पिशाचिका ॥ ४३ ॥
अपुष्पी शालिपर्णी च कृष्णवृन्ताथ सापरा ।
कुरङ्गिका मुद्गपर्णी शिम्बिपर्णी च शिम्बिका ॥ ४४ ॥
काकमुद्गा क्षुद्रसहा महामार्जारगन्धिका ।
रिङ्गिणी वनजा सिंही मृगगन्धापि सा भवेत् ॥ ४५ ॥
जीवको जीवदः क्षोदी मङ्गल्यो मधुरप्रियः ।
कूर्चकः कूर्चशीर्षश्च शृङ्गकश्चिरजीव्यपि ॥ ४६ ॥
ह्रस्वाङ्गः प्राणदः श्रेयान्दीर्घायुः स्वरदः शमी ।
ऋषभो वृषभः शृङ्गी ककुद्मान्वृषतीपतिः ॥ ४७ ॥

---

3734 °मेखला १८
3738 °गन्धिका १६
3739 पंचमूलं १
3740 दशमूलं १
3742 स्वा ८
3744 °वल्य८ पि
3746 जीवनी ९
3748 °रध्रिका ७
3752 °वृन्ता १५
3755 मृगगंधा ११
3758 शमी १५

धूर्धरो मातृको द्राक्षो बन्धुरो वृषलीपतिः ।
रसोनपत्रसदृशौ दीर्घकन्दौ ससोरमौ ॥ ४८ ॥
जीवकर्षभकावेतौ हिमाद्रिशिखरोद्भवौ ।
*जीवन्ती जीवनी जीवा जीवनीया यशस्करी ॥ ४९ ॥*
जीवभद्रा पुत्रभद्रा म[43b]ङ्गल्या च मधुश्रवा ।
शाकश्रेष्ठा जीवपृष्ठा देवपुष्पी सुखाकरी ॥ ५० ॥
* * * * * * * * * धुरा शृङ्गरीटिका ।
ऋद्धिः सिद्धिस्तुष्टिराशीश्चेतना च यशस्विनी ॥ ५१ ॥
आश्वासनी महामूर्धा श्रावणी शोधना प्रिया ।
लक्ष्मीर्योग्यं च सुसुखं मङ्गलं युगनामकम् ॥ ५२ ॥
सर्वलोकप्रिया वृद्धिर्गर्भदाप्यृद्धिनामिका ।
जीवनीयो गणः सोऽयं भवेन्मधुकर्संयुतः ॥ ५३ ॥
अष्टवर्गो विनाजीवा यष्टीभ्यां समुदीरितः ।
बला भद्रौदनी वाटी समङ्गा शीतकूर्चिका ॥ ५४ ॥
ऋष्या क्रूरा शीतपाका विजला खरयष्टिका ।
प्रभार्या पवनघ्नी च सहा वाट्यालकोऽपि च ॥ ५५ ॥
वाट्यायनी वर्षपुष्पी वाट्या वीर्या बृहद्बला ।
गन्धवल्ली महागन्धा मङ्गल्यार्थप्रसादिनी ॥ ५६ ॥
भारद्वाजी सुकर्णा च शीतपूरा महाबला ।
ऋक्षगन्धा पीतपुष्पी रिष्यप्रोक्ता महासहा ॥ ५७ ॥
गाङ्गेरुकी नागबला खरगन्धनिका(भा) झषा ।
विश्वदेवापरा[44a]रिष्टा घण्टा ह्लगवेधुका ॥ ५८ ॥
शणपुष्पी सैव घण्टारवा स्याच्छणघण्टिका ।
शणघण्टश्चाथ दण्डोत्पला तु सहदेवकः ॥ ५९ ॥
वर्षपुष्पा च मङ्गल्या माता गोरक्षतन्दुला ।
अर्थप्रसाधनी च स्यात्सरणी तु प्रसारिणी ॥ ६० ॥
सरा च सरणा राजबला भद्रबला च सा ।

---

3762 जीवक १ र्षभका १ वेतौ
3769 °नामकं १७
3770 गर्भदा १
3772 अष्टवर्गो १
3775 वाट्यालको १४
3779 महासहा १७
3781 विश्वदेवा ५
3783 शणघंट ७
3785 °धनी ७
3788 सुप्रसरा १२
3789 °घनिका ४

कटंमरा भद्रपर्णी भद्रकाली प्रतानिका ॥ ६१ ॥
चारुपर्णी सुप्रसराप्यथ द्वंद्वे पुनर्नवा ॥ ६० ॥
स्त्रियौ पुनर्भू-वर्षाभ्वौ हलमण्डलपत्रिका ।
विशाखो रक्तवृन्तः स्याद्रक्तपुष्पक एव च ॥ ६१ ॥
शिवाटिका क्षुद्रपत्रा वृश्चीवोऽथ कटिल्लकः ।
वर्षकेतुः कूरकः स्याद्दीर्घरक्तच्छदश्च सः ॥ ६२ ॥
स्यात्साष्टषायणी श्वेता स्त्रिय शोफहरी तथा ।
महापुनर्नवा चाथ बलैरण्डपुनर्नवैः ॥ ६३ ॥
मध्यमं पञ्चमूलं स्याच्छूर्पपर्णीद्वयेन च ।
पुत्रजीवो यष्टिपुष्पः कूटो मन्त्रार्थसिद्धिकृत् ।
शतमू[44b]ली शतपदी बहुपुत्रा शतावरी ॥ ६४ ॥
ऋष्यप्रोक्ता द्वीपिशत्रुर्द्वीपिकाथरकण्टकाः (कौ?) ।
भीरुर्नारायणी नाराजिह्वा सूक्ष्मदला च सा ॥ ६५ ॥
अभीरुस्तु महत्येषा पीवरीन्दीवरी वरी ।
सहस्रवीर्या केशी च महापुरुषदन्तिका ॥ ६६ ॥
सहस्रवीर्या-तुङ्गिन्यौ स्थिरपत्राप्यहेतुका ।
शतावरी च जीवन्ती काकोल्यौ जीवकर्षभौ ॥ ६७ ॥
जीवनाख्यं पञ्चमूलं चित्रकस्त्वग्निनामकः ।
पाठी पाली च पाठीनो दारुण पाचकोऽरुणः ॥ ६८ ॥
ज्योतिर्ज्वालः शठो व्यालो वह्नी(?)वह्निः कुटः शिखी ।
चव्यं त्रिपु स्याच्चवन चविका कोलवल्लरी ॥ ६९ ॥
तुबरो वशिरस्तीक्ष्णस्तथा कुक्कुटमस्तकः ।
मूलं तु ग्रन्थिक ग्रन्थि, पद्ग्रन्थिचटिकाशिरः ॥ ७० ॥
कणामूल च पत्राङ्गं विरूपं मागधं तथा ।
पिप्पली मागधी कृष्णा वैदेही चपला कटु ॥ ७१ ॥
कणोपकुल्या कोला च शौण्डी[45a]स्यात्तीक्ष्णतन्दुला ।
ऊषणाप्युषणा शौण्डी सा भवेत्कृष्णतन्दुला ॥ ७२ ॥

3791 वृषीवो ६
3793 °षायणी ५
3794 °नवा २
3795 मध्यमं १
3799 सा ११
3804 जीवनाख्य
3806 शिखी १४
3808 °मस्तक ९

चविरः श्रेयसी हस्तिपिप्पली कन्ववल्लरी ।
कोलवल्ली गजाह्वा च चविकाफलमित्यपि ॥ ७३ ॥
तोयपिप्पलिका त्वन्या लाङ्गली शकुलादनी ।
गण्डूपदी शारदी च मत्स्यगन्धा च कथ्यते ॥ ७४ ॥
मरिचं यवनेष्टं स्यादूषणं तीक्ष्णमूषणम् ।
शिरोवृत्तं सुवृत्तं च कृष्णं कोलं च वेल्लजम् ॥ ७५ ॥
स्याद्धर्मपत्तनं चाथ शुण्ठी विश्वं नपुंसि च ।
विश्वौषधं नागरं च।शृङ्गवेरं कटूत्कटम् ॥ ७६ ॥
राहुच्छत्रं च भद्रं च कटु चार्द्रकमित्यपि ।
कटुकन्दं शृङ्गवेरं कटुभद्रं तु आर्द्रकम् ।
पिप्पलीविश्वमरिचैस्त्रिकटु स्यात्कटुत्रयम् ।
व्योषं त्र्यूषणमेतत्तु सग्रन्थि चतुरूषणम् ।
पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः ।
पञ्चकोलं समरिचं खेतदुक्तं षडूषणम् ॥ ७९ ॥
भृङ्गं वराङ्गं सु[45b]रसं वरं रामाप्रियं त्वचम् ।
गुडत्वगुत्कटं हृद्यं चोचं स्यात्स्वर्णभूमिकम् ॥ ८० ॥
लाटपर्णं च तनुकं वल्कलोऽस्त्री त्वगङ्गना ।
तमालपत्रकं पत्रनाम रोमशमंशुकम् ॥ ८१ ॥
गोमेदं तापसं चाथ स्थूलैला चन्द्रकन्यका ।
पृथ्वीका त्वक्सुगन्धा च त्रिदिवा त्रिदिवोद्भवा ॥ ८२ ॥
निष्कुटिर्बहुला च स्यात्सूक्ष्मा तु त्रिपुटा मता ।
कपोतवर्णा कोरङ्गी तुच्छाप्येलोपकुञ्चिका ॥ ८३ ॥
कायस्था द्राविडी चैन्द्री पुटिका चर्मसंभवा ।
त्रुटिस्त्रुटिः स्त्रियां चाथ त्वक्पत्रैलं त्रिजातकम् ॥ ८४ ॥
त्रिसुगन्धि त्रिगन्धं * केसरं त्वहिकेसरम् ।
नागाह्वं नागकिञ्जल्कं चाम्पेयं नागरेणुकम् ॥ ८५ ॥

---

3815 °फल ७
3817 कंषटं ७
3819 वेल्लर्ज
3820 °पात्तनं १०
3822 चार्द्रक ११
3825 त्र्यूषण ४; चतुरूषणं १
3827 पंचकोलं १; षडूषणं १
3830 त्व१५गंगना
3831 °मंशुकं ८
3832 तापसं ७
3838 त्रिगंधं ३

हृद्रोहं चैव हेमाभं त्रिजातं त्वमुना युतम् ।
चातुर्जातं चतुर्जातं चतुर्गन्धमपि स्मृतम् ॥ ८६ ॥
लवं लवङ्गं भृङ्गारं शि(शे?)खरं वारिसंभवम् ।
श्रीसंज्ञं देवकुसुमं दिव्यं चन्दनपुष्पकम् ॥ ८७ ॥
जातीपत्री[46a]जातिकोशः पात्री सौमनसायनी ।
जातीफलं तु शाल्कं फलं सौमनसं पुरम् ॥ ८८ ॥
मदशौण्डं जातिसुतमथ कङ्कोल-कोलके ।
उ(ज?)लं बहुफलं च स्यान्मारीचं माधवोपितम् ॥ ८९ ॥
कटुकं कटुकासत्त्वं तथा कटुफलं च तत् ।
कङ्कोलकं पूगफलं लवङ्गं सुमनःफलम् ।
घनसारश्चेति पञ्च सुगन्धि समुदीरितम् ।
ताम्बूलवल्ली ताम्बूली नागवल्ली च नागिनी ॥ ९१ ॥
रेणुका नन्दिनी कान्ता कपिला च हरेणुका ।
कपिला स्यात्पाण्डुफली कौन्ती राजसुता द्विजा ॥ ९२ ॥
स्याद्वसगन्धिनी चाथ गन्धत्वग्घरिवालुकम् ।
एलावालुकमालूकमैलेयं च कपित्थकम् ॥ ९३ ॥
एल्वालुकं कुष्ठगन्धि वालुकं च सुगन्धि च ।
सुवर्णमसरं चाथ स्थौणेयं ग्रन्थिपर्णकम् ॥ ९४ ॥
शुकपुष्पं शुकं बर्हं बर्हिचूडं च पुष्पकम् ।
विकीर्णकः कीर्णरोम थौतेयं कुक्कुरं च तत् ॥ ९५ ॥
[46b]स्पृका स्पृग्ब्राह्मणी देवी माला लङ्कोपिका मरुत् ।
निर्माल्या कोटिवर्षा च पिशुना ललनाह्वया ॥ ९६ ॥
पञ्चमुष्टिमरुन्माला समुद्रान्ता सुगन्धिका ।
लघुः शुभा च मरुता नीलपुष्पी सुरात्मजा ॥ ९७ ॥
मांसी तपस्विनी मचो जटी च जटिला मिसी ।
क्रव्यादा पिशिनी पेशी लोमशा नलदं न ना ॥ ९८ ॥

---

3840 हेमाभं ८
3841 चतुर्गन्ध ३
3843 °पुष्पकं ९
3844 °सायनी ४
3846 जातिसुत ८
3848 कटुफलं ९
3850 सुगंधि १

3851 नागिनी ४
3854 °गंधिनी ११
3857 °असरं ११
3858 पुष्पक २
3859 तत् ११
3863 सुरात्मजा २०

किरातिनी शिखा हिंस्रा भूतकेशी तु पूतना ।
गन्धमांसी पिशाची च केशी भूतजटा जटा ॥ ९९ ॥
अश्मपुष्पं शीतशिवं वृद्धं कालानुसार्यकम् ।
कालस्थं चापि शैलेयं शिलोभं तु शिलोद्भवम् ॥ ४० ॥
तालपर्णी गन्धकुटी कुटी गन्धवती मुरा ।
दैत्यहृष्या भूतगन्धा रक्षोघ्नी गन्धमादिनी ॥ ४०० ॥
कालानुसार्यं तगरं कुटिलं नहुषं नतम् ।
॥ महोदरश्चण्डहस्तो पिण्डीतगर एव च ।
सुषिरा विद्रुमलता कपोताङ्घ्रिर्नटी नली ।
निर्मध्या नर्त्तकी शून्या धमन्यञ्ज[47a]नकेशिका ॥ २ ॥
चोरकः क्षेमकः शत्रुः कोपनः फलचोरकः ।
दुःपत्रो दुष्कुलो धूर्त्तो विषमाशुकरश्च सः ॥ ४ ॥
चण्डा धनहरी चौरी राक्षसी गणहासकः ।
लता कस्तूरिका कट्वी भवेत्स्वादुफला च सा ।
कर्चूरको गन्धमूलो द्राविडो वेधमुख्यकः ॥ ५ ॥
काल्पको दुर्लभः कार्श्यः कार्ष्यी जीमूतमूलकम् ।
गन्धोलिका गन्धवधूर्वधूर्गन्धपलाशिका ॥ ६ ॥
भद्रकाली गन्धमूला पद्मगन्धा सुव्रताऽश्शी(शटी?) ।
सुगृहीता सोमदा च सती स्यात्सोमसंभवा ॥ ७ ॥
प्रपौण्डरीकं पुण्ड्रं च पुण्डर्यं पुण्डरीयकम् ।
श्रीपुष्पं च सुपुष्पं च चक्षुष्यं साधुनाम च ॥ ८ ॥
स्यात्पद्मकं पद्मगन्धि पद्माह्वं पद्मदारु च ।
पीतरक्तं मरूत्थं च पाटलापुष्पवर्णकम् ॥ ९ ॥
मुस्ता ऋष्या मुस्तकोऽस्त्री गाङ्गेयी भद्रमुस्तकम् ।
कुरुविन्दो मेघनामा गुन्द्रा राजकसेरुकः ॥ १० ॥
वराहः पूर्णको[47b]ष्टश्च भद्रहंसोऽपरः पुनः ।
–नादेयः पिण्डमुस्तः स्याच्छागरः पिठरं च सः ॥ ११ ॥

3866 हिंस्रा ४
3867 जटा ७
3871 °मादिनी ९
3873 °तगर ९ एव च १
3875 °केशिका १०
3877 दुःपत्रो: स० ९
3881 °मूलकः ९
3884 °संभवा ४
3886 °नाम च ८
3889 °मुस्तक ९
3892 पिठरं ४

कुटन्नटं नपुंसि स्याद्गोपुरं * * * पुरम् ।
सितपुष्पं दाशपुरं प्लवं च परिपेलवम् ।
वितुन्नकं शुकाभं च कैवर्तीमुस्तकं च तत् ॥ १२ ॥
जीर्णवुध्नं शीर्णपर्णं वानेयं वन्यमित्यपि ।
वाधाङ्कं पौष्करं मूलं काश्मीरं पुष्कराह्वयम् ॥ १३ ॥
ब्रह्मतीर्थं पद्मवर्णं धीरं स्यात्पुण्यसागरम् ।
सुगन्धि स्याद्वृक्षरुहमथ हट्टविलासिनी ॥ १४ ॥
हनुर्नागहनुः कोशी शुक्तिः शङ्खः खुरो नखः ।
नखी खलो हस्तिकर्णः सामुद्रं कोलपर्णकम् ॥ १५ ॥
सरः शस्त्री शंखिनालोऽप्यथ स्याधक्ककारकम् ।
शार्दूलजं व्याघ्रनखी पुरञ्च्यसं (Corrupt) स च पादजम् ॥ १६ ॥
पौरं व्याडायुधं भृङ्गनिर्लोहं थर्वरं च तत् ।
तुरुष्कः सिह्लको धूम्रः पिण्डालः पिण्डकः कपिः ॥ १७ ॥
कपिशः कपिजः कल्को बुकधूपश्चलम्ब्रुचः ।
भवेत्कृत्रिमधूपश्च याचतः (?) सुरभिस्तथा ॥ १८ ॥
[48a] कुष्ठं रोगाभिधं वाप्युत्पलं पारिभव्यकम् ।
पाकलं पाठकं पारिभद्रं च हरिभद्रकम् ॥ १९ ॥
किञ्जल्कं च कुबेरं च रामं वानीरजं च तत् ।
त्रायन्ती त्रायमाणार्द्रा पालिनी भयनाशिनी ॥ २० ॥
बलभद्रा कृतत्राणा बलदेवादितानुजा ।
मङ्गल्या वार्षिकी त्राणा सुत्रायणा सुनामिका ॥ २१ ॥
तालीशकं तु तालीसं पत्रं तालीसपत्रकम् ।
भवेच्चामलकीपत्रं पत्राढ्यं च शुकोदरम् ॥ २२ ॥
नाकुली नकुलेष्टा स्यात्सुरसा सर्पगन्धिका ।
सहदेवी महावीर्या सर्पाक्षी गन्धनाकुली ॥ २३ ॥
सर्पकङ्कालिका कामचारिणी विषनाशिनी ।
महासुगन्धा छत्राकी सुनन्दा सुवहा च सा ॥ २४ ॥
ईश्वरी नागदमनी महायोगेश्वरी सुता ।
योगेश्वरी नागपुष्पी रुद्रा गर्दभघातिनी ॥ २५ ॥

---

3896 वन्य १५ मि°
3899 °वृक्षरुह ११
3902 °नाले १६
3910 वानीरजं ११
3913 त्राम्या for त्राणा; सुनामिका १४
3915 शुकोदरं ७
3916 °गन्धिका ४

सर्पगन्धा सर्पसहा विपदंष्ट्रा विपापहा ।
अन्या तु श्वेतपुष्पी स्यान्नागविन्नोरगस्तु[48b]टा ॥ २६ ॥
मधुपुष्पा सर्वपुष्पी श्वेतदन्ता च नागिनी ।
*सर्वपुष्पी श्येनगन्धा शूलिनी रोमदन्तिका ॥ २७ ॥*
सशल्या काण्डिका चाथ सोमवल्ली द्विजप्रिया ।
यज्ञनेत्री धन्वलता पक्षपत्रा मखप्रभुः ॥ २८ ॥
महाधन्या महागुल्मा भेदाः श्येनाहृतादयः ।
सुदर्शना सोमवल्ली वक्राङ्का मधुपर्णिका ॥ २९ ॥
वत्सादनी च दध्याली मेचका श्रीवणा तथा ।
पातालगरुडी च स्यादथ मूर्वा मधुस्रवा ॥ ३० ॥
मुरङ्गिका सुरश्रेणी मधुश्रेणी च तेजनी ।
देवी मधुरसा पीलुपर्णी गोकर्णिका स्रुवा ॥ ३१ ॥
मधु[धू]लिका मोरटा च पृथक्त्वक्चित्रपर्णिका ।
स्निग्धपर्णी स्वादुरसा गोपवल्ली धनुर्लता ॥ ३२ ॥
मध्वप्रजा मधुमती पीलनी ह्वालिनी च सा ।
घनमूलोऽपरः क्षीरमोरटाङ्कोठपुष्पकः ॥ ३३ ॥
सदलो दीर्घमूलश्च कर्णपुष्पो मधुस्रवः ।
हस्तिपर्णः पीलुपर्णः पुरुपो वद्धमूलकः[49a] ॥ ३४ ॥
पाठाम्बष्ठाम्बष्ठकी च वृकप्येकैशी ( Corrupt ) कुचेलिका ।
एकाष्ठीला विद्धकर्णी स्थापिनी श्रेयसी रसा ॥ ३५ ॥
पापचेली वृहत्तिक्ता प्राग्वीता वनतिक्तिका ।
त्रिसरा मालती च स्यात्स्थापिका वृकदन्त्यपि ॥ ३६ ॥
वृक्षपर्णी दीपनी च कृष्णपाठा सुवीवरा ।
कटुः कट्वी मत्स्यपित्ता मत्स्यविन्ना च रोहिणी ॥ ३७ ॥
चक्राङ्गी च द्विजाङ्गी स्यादरिष्टा जननी जनी ।
अशोकरोहिणी तिक्ता कटुरोहिण्यपि स्मृता ॥ ३८ ॥
स्यान्मत्स्यशकला कृष्णभेदी च शकुलादनी ।

3922 सर्पगंधा; विषापहः ९
3926 काण्डिका १३
3928 °गुल्मा ९
3931 °गरुडी ८
3932 तैजनी
3936 ह्लादिनी २३
3938 कीर्ण° for कर्ण°
3939 पद्मो for पु°; °मूलकः १०
3940 सुचेल्लिका
3941 सुवीवरा ४

शतपर्वा तिक्तरोहिण्यथ शृङ्गी विषाणिका ॥ ३९ ॥
कर्कटाक्षा महाघोषा चक्रावनतमूर्द्धजा ।
कुलीरशृङ्गी चक्रा च कुलीरा चन्द्रहासिका ॥ ४० ॥
निकुम्भो दन्तिका शीघ्रा हस्तिदन्त्युपचित्रका ।
चित्रा च चित्रकुला च तथोदुम्बरपर्ण्यपि ॥ ४१ ॥
विशोधनी शोणघण्टा[तु] कुलैरण्डफला च सा ।
घुणप्रिया मुकु[49b]लेऽपि द्रवन्ती स्वाखुनामिका ॥ ४२ ॥
वृषा रण्डासुतश्रेणी प्रत्यक्श्रेण्याखुपर्ण्यपि ।
सुवर्णा विषपर्णा च वराङ्गी विजयच्छदा ॥ ४३ ॥
आवर्तकी केशरुहा वारणी वृषभध्वजः ।
स्यादेरण्डफलश्चाथ जयपालो मुकूलकः ॥ ४४ ॥
तित्तिरीफलमप्युक्तं द्रवन्तीसंभवं फलम् ।
कुम्भस्त्रिमण्डी त्रिवृता सरला सरडा त्रिवृत् ॥ ४५ ॥
काकाक्षी रेचनी अस्रा कण्ठविक्षोभिणी हिरा ।
आम्भसी चारुणा तु स्यादस्रा कुटरणायनी ॥ ४६ ॥
सर्वानुभूतिस्त्रिपुटा मता कुटर(रु)णा च सा ।
श्यामा मसूरविदला पालिन्दी कालमेषिका ॥ ४७ ॥
सुषेणिका श्याममूला विरला ताम्रपुष्पिका ।
अर्धचन्द्रा कोशफला निःसूत्रा कालपर्णिका ॥ ४८ ॥
काला मालविकाथ स्याद्गवाक्षी सुरवारुणी ।
चित्रा मृगाक्षी गोदुग्धा सूर्याह्वा गजचिर्भिटी ॥ ४९ ॥
आत्मरक्षा चित्रफला चित्रदेवी महाफला ।
[ 50a ] स्थाणुकर्णी धनुःश्रेणी हस्तिदन्ती गवादनी ॥ ५० ॥
त्रपुसस्थ विशाला स्यादैन्द्री चेन्द्रसुराह्वया ।
ऐन्द्रैर्वारुर्मृगैर्वारुर्मृगाक्षी च मृगादनी ॥ ५१ ॥
स्यादिन्द्रवारुणी क्षुद्रफला च वृषभादनी ।
जीमूतको देवताडो वृत्तकोषो गरागरी ॥ ५२ ॥

---

3949 °रोहिण्य १८ थ
3955 मूकूले १३ पि
3959 °फल १६
3960 °फल ३
3963 आगसी १२
3964 °रणा ५
3968 मालविका १२
3970 °रफक्षा for °रक्षा
3972 त्रपुस्य १८
3974 °भादनी १०

देवदाली जालिनी च वेणी लोमशपत्रिका ।
कर्कोटी च विपघ्नी च मूषिका विषहापि च ॥ ५३ ॥
मला मोटा सूक्ष्ममूला जयन्ती विजया जया ।
हरिता सूक्ष्मपत्रा च प्रोक्ता सैवापराजिता ॥ ५४ ॥
करम्भा कर्कशा द्रोणी दीर्घवृन्तोचमारणी ।
इन्दीवरा युग्मफला सशोणी नालिका च सा ॥ ५४ ॥
आघाटः स्याच्छैखरिकः शिखरी शिखरस्लसः (?) ।
धामार्गवोऽप्यपामार्गो मार्गः कूटो मयूरकम् ॥ ५५ ॥
अधःशल्यः क्षारमध्यो दुर्ग्रहो दुरतिग्रहः ।
मर्कटी मर्कटकरा किणिही खरमञ्जरी ॥ ५६ ॥
प्रत्यक्पर्णी केशपर्णी रक्तोऽसौ रक्त[50b]बिन्दुकः ।
खरच्छदश्च वशिरो नीरजस्त्वेष रामठः ॥ ५७ ॥
तोयवृत्तिः शोपहारी भार्गी त्वङ्गारवल्लरी ।
पद्मा हञ्जी शुक्रमाता पर्विणी कासनाशिनी ॥ ५७ ॥
फञ्जी ब्राह्मणयष्टिः स्यान्महागर्दभगन्धिका ।
भृगुजा भङ्गुरा हंसी ब्राह्मणी वर्न-बर्बरौ ॥ ५८ ॥
पालिन्दी खरशाकं च शैलगिस्त्वश्मभेदकः ।
शिलोद्भेदोऽश्मरीभेदी चिडङ्गा तु जिलिङ्गिका ॥ ५९ ॥
वेल्लं कृमिघ्नं भूतघ्नं तन्दुलश्चित्रतन्दुला ।
अमोघा कैरला चैव जन्तुघ्निण्मृगगामिनी ॥ ६० ॥
रक्तबीजा तु चेल्लासा गह्वरं कैरलं च तत् ।
उग्रोग्रगन्धा गोलोमी जटिला शतपर्विका ॥ ६१ ॥
लोमशा क्षुद्रपर्णी च मङ्गल्या विजया वचा ।
श्वेता मेध्या हेमवती पङ्क्त्यन्थाप्यरुणा पुनः ॥ ६२ ॥
साकर्पणी भोगवती वर्बरा लवङ्गन्धिका ।
करवी कारवी तुङ्गी कवरी हिङ्गुपत्रिका ॥ ६३ ॥
पृथ्वीका चाम्पिका तन्वी नाडी हिङ्गु[51a]शिराटिका ।
शाकंभरा पूतिकीटा कुञ्चिका चोपकुञ्चिका ॥ ६४ ॥

3977 विपद्दा १२ पि
3981 नाल्का ८
3986 केशपर्णी ११
3992 च १०
3993 °नेरी ४
3995 °गामिनी १
3996 कैरलं ३
3998 वचा १०
3999 पङ्क्ंथा ३
4003 कुंठिका

रामठी चोपकाली सा खरपुष्पा च पिण्डिका ।
वेणुपत्री दारुपत्री पुमान्पूतिमयूरकः ॥ ६५ ॥
स्याद्रसा रसना रास्ना रसा युक्तरसा च सा ।
विरसा सुवहा गन्धमूला युक्ता च नाकुली ॥ ६६ ॥
श(ए?)लापर्णी श्रेयसी च भवेद्युक्तपला च सा ।
घुणा घुणप्रिया माद्री विरूपा च विषारुणा ॥ ६७ ॥
शुक्लकन्दा त्वतिविषा सैव प्रतिविषा मता ।
विश्वा शृङ्गी चोपविषा ॐ ॐ ॐ श्यामकन्दिका ॥ ६८ ॥
यासो यवासो दुःस्पर्शो धन्वयासः कुनाशकः ।
मरुद्भवो दीर्घमूलो बाल्पत्रोऽतिकण्टकः ॥ ६९ ॥
रोदिनी कच्छुरानन्ता ताम्रमूली विशारदा ।
गन्धारिका समुद्रान्ता दुरालम्भा दुरालभा ॥ ७० ॥
फणीहारी ग्राहिणी च विरूपा दुरभिग्रहा ।
गोपाङ्गना शारिवा स्यात्सारिवा काष्ठसारिवा ॥ ७१ ॥
प्रतानिनी नागजिह्वास्फो[51b]ता भद्रलतापि सा ।
सुगन्धिका च सरलानन्ता चोत्पलसारिवा ॥ ७२ ॥
कृष्णमूला तु सा श्यामा भद्रा चन्दनगोपिका ।
कालिन्दी चन्दना कृष्णवल्ली कालानुसार्यपि ॥ ७३ ॥
प्रोक्ता चन्दनमूला सा मसूरा कालपेशिका ।
चर्मरङ्गा विन्दुकिनी विभाण्डी पीतकालिका ॥ ७४ ॥
आवर्तकी रक्तपुष्पी महाजालिनिका च सा ।
अपरा मूपेठरीकी मार्कण्डी मृदुरेचनी ।
अजशृङ्गी मेषशृङ्गी शक्रनेम्यहिदंष्ट्रिका ।
महाकाली मेघवल्ली कूर्चपर्णी च वर्तिका ॥ ७६ ॥
विषाणिका च चक्षुष्या वहलाङ्गोऽप्यवल्कलः ।
नन्दी स दक्षिणावर्ता वृश्चिकाली सपुच्छिका ॥ ७७ ॥
ग्रामीणा नीलिनी नीली काला क्लीतकिकापि च ।
रञ्जनी श्रीफली तुच्छा द्रोणी दोला विशोधि(ध)नी ॥ ७८ ॥

4005 °मयूरकः २३
4008 °पला १२
4010 प्रतिविषा २
4011 °विषा ४९
4016 दुरभिग्रहा १२
4019 °सारिवा १२
4022 °पेशिका: १०
4029 सपुच्छिका २

मधुपर्णी नीलपुष्पी शूचिकाञ्जनकेशिका ।
गन्धपुष्पफला भारवाहिनी सरटी च सा ॥ ७७ ॥
मञ्जिष्ठा म[52a]ञ्जुला जिङ्गी रक्ताङ्गी रक्तयष्टिका ।
समङ्गा विकसा भण्डी भण्डीरी विजयारुणा ॥ ७८ ॥
कालमेषी ताम्रमूला चन्द्रहासा विषद्विपा ।
रसायनी च गण्डीरी छिन्नाङ्गी नागकन्यका ॥ ७९ ॥
मण्डूकपर्णी वस्त्रालंकरणी कालगोष्टिका ।
मृत्तिका छत्रका काला हेमा योजनवल्ल्यपि ॥ ८० ॥
लाक्षा राक्षा रङ्गमाता जन्तुमाता पलंकषा ।
रक्ता निर्मत्सरा दीप्तिर्यावोऽलक्तो द्रुमामयः ॥ ८१ ॥
जतु क्लीवेऽथ जतुका जतूका जतुकृज्जनी ।
जननी रञ्जनी चक्रवर्तिनी पर्पटी च सा ॥ ८२ ॥
संहर्षा चापि संस्पर्शा जन्तुकृष्णाह्वकृष्णिका ।
अस्त्री कुसुम्भो ल्ट्वा च महारजनमित्यपि ।
कटरो रक्तपुष्पः स्यात्किरिका पद्ममित्यपि ।
कम्पिल्लकस्तु काम्पिलः कर्कशो रक्तचूर्णकः ॥ ८३ ॥
रक्ताङ्गो रञ्जनो रेची रेचकश्चन्द्रकश्च सः ।
तेजस्विनी तैजनी स्यादश्वघ्ना च महौषधी ॥ ८४ ॥
तेजोह्वा च [52b]किलसघ्नी पारिजाता च वल्कला ।
ज्योतिष्मती पीततैला पण्या काकादनीलता ॥ ८४ ॥
काकाण्डकी सूक्ष्मफला लवणा स्वर्णवल्लरी ।
चतुर्मेदा वह्निमासा कटभी च त्रिपर्णिका ॥ ८५ ॥
पीतावेगा(गी?) कट्विका च कुदिनी फञ्जुनी च सा ।
वृषा पारावताङ्घ्रिश्च धातकी स्वग्निपुष्पिका ॥ ८६ ॥
ताम्रपुष्पी धातुपुष्पी सुभिक्षा मद्यवासिनी ।
बहुपुष्पी पर्वतीया वह्निज्वाला च कुञ्जरा ॥ ८७ ॥
मदहेतुर्मदा मद्यपुष्पी च मदनी च सा ।
मदनीया विशल्या तु लाङ्गलिक्यनला च ना ॥ ८८ ॥

4038 च सा १८
4039 °म्यपि २७
4042 जतु १२
4044 °कृष्णिका १२
4048 °श्चंद्रक ९
4050 °वल्कला ८
4055 °ताङ्घ्रि २, ४
4059 मदनीया १५

लाङ्गली कलिकारी च भमाता गर्भपातिनी ।
अर्धेन्दुपुष्प्यग्निशिखानन्ता कुटजपुष्पिका ॥ ८९ ॥
उल्का च फलिनी वह्निजिह्वा स्यात्पुष्पसारसा ।
नलवास्तुश्च शौरिः स्यात्काकाङ्गी तु शिरोबला ॥ ९० ॥
काकनाशा(सा) काकतुण्डी काक्षा हिंसा सुरङ्गिका ।
चौरस्त्वायुर्जीवनीया काकजङ्घा तु सा मता ॥ ९१ ॥
[53a] स्थूला प्रोक्ता गृध्रनखी काका पारापनी(?)तथा ।
मदघ्या कार्मणी काकतिक्ता दासी सुलोमशा ॥ ९२ ॥
पारावताङ्घ्रिश्च नदीकान्ता प्राचीबलः पुमान् ।
काकमाची तु कामाची कामाता जघनेफला ॥ ९३ ॥
वायसी काकमाची च स्वादुपाकफला च सा ।
कामाता कुष्ठहन्त्री च रसायनवरा च सा ॥ ९४ ॥
उत्तानकौ बद्धशिखा चूडाला चक्रलोचटा ।
इक्षुगन्धा तु काण्डेक्षुः काकेक्षुश्चेक्षुरः क्षुरः ॥ ९५ ॥
स्याद्वैलकण्टकोऽप्यक्षुरध्यण्डः कोकिलाक्षकः ।
वलं वशालिः काभश्च बृहत्काशश्च खक्खटम् ॥ ९६ ॥
स्यान्नदीकामुको रक्तमञ्जरिर्निम्नरुहस्तथा ।
जलजस्तु नदीकान्तस्तोयजातः प्रतीफल(?) ॥ ९७ ॥
अश्वाश्वगन्धा गोकर्णा वल्या वाजीकरी च सा ।
वराहकर्णी पुष्पा च कम्बुका कुष्ठगन्धिका ॥ ९७ ॥
धूपोऽवबोधको बर्हिपित्तं च द्वीपजा तु सा ।
ताम्रसारा वा[53b]तहरी पौष्टिकी च गरीयसी ॥ ९८ ॥
उपदंशामयहरी द्वीप्या मधुरसापि सा ।
विदारीक्षुविदारी स्यात्स्वादुकन्दा हयप्रिया ॥ ९९ ॥
गजप्रेष्टा चक्षुगन्धा कन्दवल्ली शृगालिका ।
* * * * * * * * वृक्षपर्णी बिडालिका ॥ ५०० ॥
भूकूष्माण्डी क्षीरशुक्ला त्विक्षुगन्धा पयस्विनी ।

4063 शौरि १७
4068 °वल १२
4071 °वरा १०
4072 °लोचटा ५
4075 खख्खट १३
4076 °स्तथा ३
4077 प्रतीफलं १३
4080 पित्तं च १२
4082 मधुरसा ८
4086 पयस्विनी ५०

इक्षुवल्ली क्षीरवल्ली महाश्वेतर्क्षगन्धिका ।
क्षीरकन्दा चेक्षुपर्णी सैव क्षीरविदारिका ॥ १ ॥
गोधापदी हंसपदी त्रिपदी रक्तपादिका ।
प्रह्लादिनी विषग्रन्थिः सुवहा च मधुस्रवा ॥ २ ॥
कीटनामा कीटमारी घृतमण्डालसेलुका ।
लज्जावती तु लज्जालुर्लज्जा पृष्ठपुरोटिका ॥ ३ ॥
नमस्कारी गण्डकाली समाङ्गा च शमीछदा ।
समङ्गा रक्तपादी च रक्तमूला हिमच्छदा ॥ ४ ॥
प्ररोदिनी गन्धकारी खदिरी रक्तमूलिका ।
रक्तमूला रुहा स्पृक्का भवेदञ्जलिकारिका ॥ ५ ॥
तालमूला तु मुसला ताली तालच्छदापि सा ।
हिरण्यपु[54a]ष्पी खर्जूरी खलिनी वृष्यकण्टिका ॥ ६ ॥
महावृषा मौसली स्यादात्मगुप्ता तु मर्कटी ।
ऋष्यप्रोक्ता शूकशिम्बिः कण्डूरा प्रावृषायणी ॥ ७ ॥
कण्डूकर्यजहाव्यङ्गा गुप्ता च कपिलोमिका ।
आर्षभी लाङ्गली व्यङ्गा वामनी दुरभिग्रहा ॥ ८ ॥
विष्वक्सेनप्रिया गृष्टिः काश्मरी वनमालिका ।
वाराही बदरी काङ्क्षी वरा कन्दस्तु तद्भवः ॥ ९ ॥
सुसकन्दः सुकन्दश्च किटीः शम्बरकन्दकः ।
वज्रपत्रश्च वक्रालुर्वन्यः सूकरकन्दकः ॥ १० ॥
*क्रोडो मूलकमूलाभो वाराहो वडवानलः ॥ ११ ॥*
स्वर्णक्षीरी काञ्चनी स्यात्पीतदुग्धा हिमावती ॥ ११ ॥
पट्टपर्णी हैमवती क्षीरिणी यवचिञ्चिका ।
तिक्तदुग्धा स्वर्णवती सुवर्णाभरणं तथा ॥ १२ ॥
ऋक्षगन्धा तु मेषाण्डी वृषगन्धाप्यजाण्डिका ।
वृत्तपत्री च मेषाग्री जुङ्गको जीर्णवालकः ॥ १३ ॥

---

4088 °विदारिका १०
4091 °सेलका १२
4091 °माला for °मूला
4096 °कारिका १०
4099 मौसली १०
4100 कंडूरा for कण्डूरा; प्रावृषायणी ७
4102 दुरभिग्रहा १६
4103 काश्मार° for काश्मरी
4104 वरा ७ कंदस्तु
4108 स्वर्णक्षारी
4110 °भरणे ११

अन्तःकोटरपुष्पी स्यादावेगी वृद्धदारकः ।
वृद्धदार्वथ सा कृष्णाजा[54b]ग्री महिषवल्लरी ।
वेल्लरी दीर्घवेल्लोऽथ महाश्यामा दवाग्निका ॥ १४ ॥
आग्नेयः स्यादग्निग्रमो ब्रह्मसोमाभिधश्च सः ।
चतुर्भङ्गाह्वयः प्रोक्तो वृद्धदारुविशेषकः ।
आरामशीतला देवगन्धा चटकभक्षिका ॥ १५ ॥
स्याद्भूरिनवनीता च भवेत्कुक्कुटमर्दकः ।
कुमारी कुण्डला माता फलमत्स्याक्षिकारिका ॥ १६ ॥
रसगन्धो गन्धरसो बोलो जातीरसो रसः ।
प्राणः शशश्च पिण्डश्च गोप-गोपरसावपि ।
गञ्जा पिका मातुलानी भङ्गिका विजया जया ।
उन्मादि[नी] हर्षिणी स्याद्भृङ्गराजस्तु मार्कवः ॥ १७ ॥
भृङ्गारको भृङ्गनामा पङ्कजः केशरञ्जनः ।
रविप्रियो महानीलः सूर्यावर्तश्च कीर्त्तितः ॥ १८ ॥
भवेद्भृङ्गरजःकेशराजोऽङ्गारक एव च ।
स्यादाकाशलतावन्ती पिच्छिलाक्षा महासहा ॥ १९ ॥
वन्दा वृक्षादनी वृक्षरुहा कामरुहा तथा ।
नलपर्णी नीलवल्ली जीवन्ती पादपाशना ॥ २० ॥
अस्था[55a]न रोहिणी सैव सौवियं पदरोहिणी ।
वन्दकः शिखरी कामतरुश्च विजयद्रुमः ॥ २१ ॥
मोदकी जिङ्गिणी झिल्ली मञ्जरी गुडमञ्जरी ।
जातसारा पर्वतीया झिङ्गिणी सारमञ्जरी ॥ २२ ॥
प्रहारवल्ली विकसा चीरवल्यपि *** [कथ्यते] ।
मांसरोहा चर्मकसा वृत्ता पिशितरोहिणी ॥ २३ ॥
विमला सातला सारी ससला चर्चकी जनी ।
बहुफेना चर्मकषा चर्मसाह्वा सरालिका ॥ २४ ॥
सनालिका पीतदुग्धा फेनादीक्षा रसालिका ।

4114 °दार्वी १ थ (corrupt), कृष्णा १
4115 दीर्घवेल्ले ४, दवाग्निक
4117 °विशेपक ७
4120 °कारिका ५
4122 पिष्टश्च for पिण्डश्च
4124 हर्षिणी ७
4127 °रक १०
4128 °सहा ४
4132 °द्रुम १४
4134 °मञ्जरी १
4136 वृंता for वृत्ता, °रोहिणी ८
4139 रसालिका १५

गुञ्जा तु काकणन्ती स्यात्कणीचिः काञ्चिरुच्चटा ॥ २५ ॥
शिखण्डिका रक्तिका च * * [काक]चिश्ची च कृष्णला ।
भसी काकादनी काकपीलुका काकनमिका ॥ २६ ॥
चक्रशल्या च दुर्मेधा रतशीतपदी च सा ।
सा श्वेता श्वेतपाकी स्याच्चूडाला च मिरिण्डिका ॥ २७ ॥
दुर्मापा चक्रिका चूडा काम्बोजी काकपीलुका ।
वाकुची वागुचिश्चन्द्रशकला चन्द्रवल्लरी ॥ २८ ॥
[55b]चन्द्रप्रभा चन्द्रराजी खण्डराजी वरामृता ।
कालमेषी कृष्णफला सुवल्लिः पूतिफल्यपि ॥ २९ ॥
मल्पूश्चन्द्रिका च स्यात्कुष्ठघ्नी चाप्यवल्गुजः ।
कटुम्लनामिका गोधावती श्यामा च मोहिनी ॥ ३० ॥
वटपत्री रेवतिका दीनकीशान्तकश्च सः ।
कार्पासी पटदा पद्या कर्पासी वयनी तथा ॥ ३१ ॥
शतपुष्पी समुद्रान्ता साच्छादनफलापि च ।
अन्यावन्यफला भद्रकर्पासी शोणपुष्पिका ॥ ३२ ॥
भारद्वाजी च भद्राथ कार्पासो बादरः पिचुः ।
पिचव्यस्तूलमप्यस्याः सूत्रेथ वरतिक्तकः ॥ ३३ ॥
पर्पटः पित्तहा रेणुनामा चर्माह्वयश्च सः ।
शीतप्रियः सूक्ष्मपत्रः कवचश्चैककण्टकः ॥ ३४ ॥
रक्तघाती च सुष्टाकस्त्रियष्टिज्वरनाशकः ।
रक्तपुष्पोऽभिसाद(?)श्च तृष्णाघ्नो यवकण्टकः ॥ ३५ ॥
क्षवः क्षुताभिजननो नासासंवेदनस्तथा ।
तीक्ष्ण उद्वेजनो राजक्षवकः क्षुरकश्च सः ॥ ३६ ॥
ऐन्द्रिरा[56a]छिद्रपत्रा चाप्यथ स्यात्तुलसी सिता ।
सुरसा सुलभा ग्राम्या भूतघ्नी भूरिमञ्जरी ॥ ३७ ॥
अपेतराक्षसी गौरी प्रोक्ता सुरभिमञ्जरी ।
श्रीमञ्जरी मागमाताथ कृष्णा देवदुन्दुभिः ॥ ३८ ॥
चक्रपर्णी शक्रपत्नी सुरसा हरिकामिनी ।

---

4143 रतशीतीसीतपदी १७
4145 °पीलुका ८
4149 °वल्गुजः १७
4151 °कीशान्तक ८
4153 °लापि च ८
4155 भद्रा ५ य
4156 पिचवरतुल ५ म°
4163 °पत्रा ९
4166 °माता ११
4167 °कामिनी ५

कर्पूरतुलसी त्वन्या भूतेष्टा भूतनायका ॥ ३९ ॥
मधूकपर्णी कायस्था मधूरा राजसी शिखा ।
द्राक्षा फलोत्तमा स्वाद्वी प्रियाला काकमाचिका ॥ ४० ॥
मधुयोनिश्चारुफला मृद्वीका गोस्तनी च सा ।
काश्मीरजा हारहूरा रसाला कपिलापि च ॥ ४१ ॥
अन्तरापथिका माता भवेन्मधुफला च सा ।
ओषध्यो जातिमात्रे स्युरजातौ सर्वमौषधम् ॥ ४२ ॥
मूले पत्रे करीराग्रफलकाण्डे विरूढकाः ।
त्वक्पुष्पं कवकं चेति शाकं शिग्रु च न स्त्रियाम् ॥ ४३ ॥
उपदंशो हरितकं शालनं सालनं च तत् ।
कचपं पत्रशाकं च भाजा[56b]भाजी तु पाचिता ॥ ४४ ॥
कलम्बश्च कडम्बश्च द्वयोः स्याच्छाकनाडिका ।
कार्षापणोऽस्त्री शाकादि बद्धमुष्टिर्मतो बुधैः ।
राजालुर्मूलकोऽस्त्री ॐ हस्तिको हस्तिदन्तकः ॥ ४५ ॥
नीलपर्णं नीलकण्ठं हरित्पर्णं च सेकिमम् ।
शालमर्कटकं मिश्रं हस्तिकाक्षारसंज्ञितम् ॥ ४६ ॥
अवदंशक्षमं तीक्ष्णं विष्णुगुप्तमतं भृशम् ( corrupt ) ।
चाणक्यमूलकं रक्तं राजालुकमपीरितम् ॥ ४७ ॥
बाले मूलकपोतात्र गृञ्जनं त्वस्त्रियां भवेत् ।
गर्जरं पीतकं च स्याद्भवेन्नारङ्गकन्दकम् ॥ ४८ ॥
अर्शोघ्नः शूरणः कन्दः सूरणश्चित्रदण्डकः ।
कण्डूलोऽप्यथ वन्योऽसावुल्लु ओल्लोऽपि कीर्तितः ॥ ४९ ॥
समष्ठिला तु गण्डीरः पिण्डालुस्त्वृष्यगन्धिका ।
मध्वालुकं रोमशं स्याच्छङ्खालुः सङ्खसंनिभः ॥ ५० ॥
हस्त्यालुकं हस्तिकन्दो रक्तालू रक्तकन्दकः ।

---

4169 शिखा ८
4173 °फला ६
4174 ओषध्यो १
4175 करीराग्र १ फल १ कांडे
4176 त्वक् १ पुष्पं १ कवकं १; शिग्रु २
4177 सालनं ४
4178 भाजा १११३ भाजी १ तु
4180 कर्षापणो १
4182 हरित्पर्णं
4183 °संवित for °संज्ञितम्
4186 °कपोता १
4187 °कंदकं ४
4189 कंडूले ६; ओल्लो २ पि
4190 गंडीर २
4191 °सन्निभः २

सुरेन्द्रको वज्रकन्दो मुञ्जातं नालमस्तकम् ॥ ५१ ॥
मस्तकी त्वस्य निर्यासोऽथ स्व *[रुप]विटपं भवेत् ।
को[57a]ळटमपि कोदुम्बं जलोदुम्बरकन्दकः ॥ ५१ ॥
स्थलकन्दो ग्रामकन्दो महाकन्दस्तु माणकम् ।
चिञ्चोटकं कशेर्वल्ली वृषपर्वाथ तन्महत् ॥ ५३ ॥
राजमुस्ताह्वयं राजकशेरुरपि न स्त्रियाम् ।
केम्बुकं तु भवेत्पेलुपेलुनी दलशालिनी ॥ ५४ ॥
क्षौद्रादनं तु नापाकं भेडं पेशुलिका च तत् ।
अस्त्री पलाण्डुर्वेदनदूषी स च सुकन्दकः ।
लताकों लवताकेश्च दुर्द्रुमो हरितः स च ॥ ५६ ॥
न स्त्री रसोनो लशुनो म्लेच्छकन्दोऽप्यरिष्टकः ।
राहूत्सृष्टो महाकन्दोऽप्युग्रगन्धो नृणां तथा ॥ ५७ ॥
महौषधं गृञ्जनस्तु न स्त्री स्यादल्पनालकः ।
सूक्ष्मपत्रः पलाण्डोस्तु परणाधमिदो दश ॥ ५८ ॥
भूमण्डला भूमिदण्डा प्रबोधा भूमिमण्डिका ॥ ५५ ॥
प्रबोधिनी चाथ शाकवीरः स्यात्क्षारपत्रकः ।
न स्त्री वास्तुक-वास्तूकौ प्रणालश्च प्रसादनः ॥ ५९ ॥
स्यान्मार्षो मारिषो रक्तस्त्वेष स्याद्रक्तनालकः ।
जीवन्तकः प्रणालोऽथ तन्दुली[57b]योऽल्पमारिषः ॥ ६० ॥
तन्दुलीयोऽपि चण्डालः श्वगलो मेघनादकः ।
काण्डीरस्तण्डुलीबीजो विषघ्नोऽपि घनस्तनः ॥ ६१ ॥
मार्षकस्त्वपरो बीजी बाष्पिकः कन्धरोऽपि सः ।
स्याद्गौडवास्तुकश्चिल्ली यवशाकं महद्दलम् ॥ ६२ ॥
चिल्लिका त्वतिरक्ताभा राजमाषस्तु रक्तकः ।
अम्लस्त्वेषोऽम्लबाष्पः स्याज्जलजस्त्वम्बुबाष्पकः ॥ ६३ ॥
पितृप्रियं कालशाकं कालिकाशाकमित्यपि ॥ ६४ ॥

---

4193 वज्रकंदो २
4194 मस्तकी १
4195 °कंदकः ४
4196 ग्रामकंदो२; माणकं २
4197 °पर्वा ३ थ
4199 °शालिनी ४
4200 °लिका ४
4202 दुर्द्रुमो १
4206 सूक्ष्मपत्र ३
4209 प्रणाट ३ थ प्रसादनः ६
4210 षारिषो २
4211 प्रगालो ११
4215 °श्चिल्ली २
4216 रक्ताभ४; रक्तकः २
4217 °बाष्प° २
4218 °शाक ३

सर्षपः स्यात्सरिषपस्तन्तुभश्च कदम्बकः ।
कटुश्च कटुकस्नेहो रक्षोघ्नो भूतनाशनः ॥ ६५ ॥
कण्डघ्नोऽप्यथ सिद्धार्थोऽनघः स्याच्छ्वेतसर्षपः ।
प्रभूततीक्ष्णगन्धस्तु चित्रलो रक्तसर्षपः ॥ ६६ ॥
क्षवः छिकाकरो राजसर्षपः कृष्णिकासुरी ।
राजिका दैत्यपत्नी चाप्यथ स्यान्मधुसूदनी ॥ ६७ ॥
पालङ्क्या स्त्री तु चञ्चूः स्याच्चञ्चुश्चञ्चुक एव च ।
तिलपर्णी कुन्तलिका नली बदरञ्चर्बरी ॥ ६८ ॥
कुलिञ्जिका चाथ बृहद्धोलिका[58a]लोणिका च सा ।
कुलिञ्जरः स्यात्कुठिरो झञ्झरूकश्च झञ्झकः ॥ ६९ ॥
कालमाला तु पर्णास-कठिञ्जर-कुठेरकाः ।
कृष्णार्जकः सलनीयो मालुकः कृष्णमालुकः ॥ ७० ॥
करालः कपिशः कालमल्ली स्यात्कालमल्लिका ।
सितोऽसौ बिल्वगन्धः स्याद्गन्धपत्रो वटच्छदः ॥ ७१ ॥
वैकुण्ठश्चार्जकोऽथ स्यात्सुमुखः क्षुद्रपत्रकः ।
पोतक्युपोदिका मत्स्यकाली मदलिका च सा ॥ ७१ ॥
मदघ्नी पिच्छिला वृन्ता वृन्ताका च कलम्बिका ।
सूत्रञ्जिसंकटी कण्टकिनी मदहरी च सा ॥ ७२ ॥
श्रीहस्तिनी तु भूरुण्डी कुरण्टी शीर्षमञ्जरी ।
सिंहकेशी क्षेत्रभूषा चुचुकक्षेत्रनाशिनी ॥ ७३ ॥
नृत्यकुण्डः सूर्यशिरा कुरण्डस्त्वतिवारकः ।
सुनिषण्णः सूचिपत्रश्चतु पत्रो वितुन्नकः ॥ ७४ ॥
श्रीवारकः शीतवरः स्वस्तिकः कुक्कुटः स्थितिः ।
चाङ्गेरीपत्रसदृशो याहसः पत्रशाखिका ॥ ७५ ॥
मत्स्यान्तवीजोऽर्कसुतो[58b]विषगन्धो विषोदरः ।
सफलीमूर्दधिशमी विष्णुक्रान्तापराजिता ॥ ७६ ॥

---

4219 °स्स्तुमथ for °स्तन्तुमथ
4221 कंडुघ्नो१, °सर्पप ३
4222 °सर्पप २
4224 दैत्यपत्नी ७, °सूदन
4225 पालंक्या २, °श्चुक ३
4227 कुलिंजिका ९, लोणिका २
4231 °मल्लिका १२
4233 °पत्रय २
4236 सा १२
4238 °नाशिनी १
4239 °वारका ११
4242 °शाखिका १२

नीलपुष्पी द्रीनकी च जया च क्षुरिका च सा ।
सतीनकः सूक्ष्मपत्रोऽप्यथ राजक्षवो भवेत् ॥ ७७ ॥
दुग्धिनी दुग्धिका स्वादुपुष्पी क्षीराविका च सा ।
कपित्थपत्रा झरसी पूणिजा रूपपत्रिका ॥ ७८ ॥
चित्रपर्णी विरूपा च निर्जरा पुष्पपत्रिका ।
कूलजा वनजा तुम्बपत्री स्याचारुपत्रिका ।
क्षुद्राम्लिका तु चाङ्गेरी चुक्रिका चाम्ललोणिका ॥ ७८ ॥
चतुःपर्णी दन्तशठा तथाम्बष्ठा च लोणिका ।
सुनिषण्णाच्छदा राजमोटाम्लोटाम्लदोलकः ॥ ७९ ॥
फलम्बिका स्थूलफला मद्यगन्धा कटंभरा ।
प्रपुन्नाटः प्रपुनटः मपुनाडश्च मर्दकः ।
दद्रुघ्नः स्यादेडगजश्चक्राह्वश्चक्रमर्दकः ॥ ८० ॥
आवर्तकः क्षोदकः स्यात्पत्राटो मेषलोचनः ।
मेषपुष्पो मेषराजोऽप्यथ नाडीकलापकः ॥ ८१ ॥
मत्स्यादनी मत्स्यगन्धा गण्डाली दार्विका पुनः ॥ ८२ ॥
दार्वीपत्री क्रोष्टु[59a]मूली गोजिह्वा मूमिकालिका ।
गोमी गोली च गोधूमी स्यादथाम्बालिकाम्बिका ॥ ८३ ॥
अम्बष्ठाम्बष्ठकी भूरिमूला सूचीमुखी शिवा ।
मधूकपर्णिकैपीका सदस्री माचिका तथा ॥ ८४ ॥
मयूरविदला दन्तशठा कम्बू महत्यसौ ।
वृषकर्णी श्रावणी च मूषिकश्रावणी च सा ॥ ८५ ॥
तालपर्णी तु मेथीका मिसिर्मधुरिका च सा ।
मिश्रेयाश्वबला पीतबीजा शीतशिवापि सा ॥ ८६ ॥
छत्रा स्यादथ शालेय आसाजः सालकोऽपि सः ।
शाली च शालिनी रक्तबीजो मेहनिवारणः ॥ ८७ ॥
धनिका धानिका धान्यं धान्याकं धनिकं तथा ।
धानेयं वेसनाम्न्याथ सालनाम्न्यार्द्रिकालिका ॥ ८८ ॥

---

4245 क्षुरिका १
4253 °दोलकः १२
4254 कटंभरा ४
4258 °राजो १४
4261 गोधूमी ८
4263 तथा ११
4264 कंबू ३
4265 °श्रावणी ३
4268 छत्रा ९
4269 °निवारणः ७

कुस्तुम्बरी ह्यगन्धा वेसना कटु मद्रिका ।
कुस्तुम्बरु स्त्रियां न स्याद्धन्याकं च वितुन्नकम् ॥ ८९ ॥
अजमोदा तु मिथुने मोदा स्यादुग्रगन्धिका ।
खराश्वा ह्यगन्धा च ब्रह्मदर्भा च कारवी ॥ ९० ॥
यवानिका[59b]मयूरश्च दीप्यः स्याल्लोचमस्तकः ।
यवानी भूकदम्बः स्याद्भूतीको यवसाह्वयः ॥ ९१ ॥
दीप्यो यवानिकाथान्यश्छोहरः पारसीयकः ।
शतपुष्पा घोषवती शताह्वा कारवी मिसिः ॥ ९२ ॥
बहुपुष्पा सितच्छत्रा घोषा स्यान्माधवी शता ।
अतिच्छत्रा तु महती छत्राऽत्रावपुष्पिका च सा ॥ ९३ ॥
अजाजी युज्यमाना स्याद्दीर्घको जीरकोऽस्त्रियाम् ।
कणा च कणजीरश्च जरणो मेध्यमित्यपि ॥ ९४ ॥
कृष्णाजाजी वर्षकाली मोचाटश्च सुगन्धकः ।
कलिकृष्णोपकाली स्यात्कलिका कारवी च सा ॥ ९५ ॥
उपकुञ्ची च कुञ्ची च पृथ्वीका सुषवी पृथुः ।
स्यात्स्थूलकं भूमि * * दमनं माधवं च तत् ।
सहस्रवेधि जतुकं बाह्लीकं हिङ्गुरस्त्रियाम् ।
रामठं सूपधूपि स्याज्जरणं गूढगन्धि च ।
तथा श्लक्ष्णमुदितं हरिद्रा तु निशाह्वया ॥ ९६ ॥
विश्वेष्टा हरिता पीता पीतनी काञ्चनी तथा ।
वेश्या पि[60a]ण्डा मङ्गलता वर्णिनी वरवर्णिनी ॥ ९७ ॥
दीर्घरङ्गा च पिङ्गा च भद्रा रोमशमूलिका ।
योषित्प्रिया तुरंगा च जयन्ती विषनाशिनी ॥ ९८ ॥
शाकादिवासनद्रार्ड(?) वेषवार उपस्करः ।
शुण्ठी कणा च मरिचं कणामूलं च धान्यकम् ।
दाडिमं काञ्जिकं चेति वेसवारीयसप्तकम् ।
शाकस्य भवनं क्षेत्रं क्लीबे स्याच्छाकशाकटम् ॥ ९९ ॥

---

4276 °मस्तकः ११
4278 यवानिक१; °धीयकः २
4280 शला १० for शता
4281 °पुष्पिस्र २
4283 मेध्य ८
4284 सुगन्धक ४
4289 °न्धि च २
4290 श्लक्ष्ण १०
4294 °नाशिनी २०
4295 उपस्तरः ३

स्याच्छाकशाकिनं चैवमिक्षुशाकटकादयः ।
वंशो वेणुर्यवफलो वंशी कर्मार-मस्करौ ॥ ६०० ॥
शतपर्वा सुपर्वा च त्वचिसारस्तृणध्वजः ।
मृत्युबीजः किलाटी च सतीनो रभकश्च यः ॥ १ ॥
तेजनः शब्दमालस्तु कीचको वायुना स्वनन् ।
इक्ष्वालिको रामशरो वेत्रो गुन्द्रश्च तेजनः ॥ २ ॥
पर्फरीकः पोटगलो नलोऽस्त्री मृत्युपुष्पकः ।
धमनः शून्यमध्यश्च नड-नर्तक-रन्ध्रिणः ॥ ३ ॥
वंशादेरङ्कुरोऽस्त्री स्यात्करीरोऽथ तुका तुगाः ।
तुगाक्षीरी तवक्षीरी त्वक्षीरी नादिमे शुभा ॥ ४ ॥
[60b]वैदेही क्षीरिका वांशी वंशकृद्वंशलोचना ।
कम्बिः कुशा वंशखण्डे पत्राल्यां युगुले किटी ।
गुडे साधुर्य इक्षुः स्याद्गौडिकः स विशेष्यवत् ।
स्याद्वांशमारिकश्चैक्षुमारिकस्तस्य वोढरि ।
इक्षुर्मधुतृणो भूरिरसः स्यादसिपत्रकः ॥ ५ ॥
गण्डी च गण्डकीवेणुनिसृःतो मृत्युपुष्पकः ।
तृणराजः किष्कुपर्वा रसालो गुडदारु च ॥ ६ ॥
वेणुबीजं वेणुयवो वैणवं वेणुसंभवम् ।
इक्षुमूलं मोरटं स्यादिक्ष्वाली चेक्षुवालिका ।
रक्तेक्षुरित्कटः सूक्ष्मपत्रः कर्कटिका(?)पि सः ॥ ७ ॥
रसालः पुण्ड्रकः पौण्ड्रः सुकुमारक इत्यपि ।
दीर्घपर्वा तु कान्तारो वांसिको नीलयष्टिका ॥ ८ ॥
नेपालाद्या इक्षुभेदा अथ बर्हिः कुशोऽस्त्रियौ ।
कुथो दर्भो यज्ञियः स्यात्पवित्रं यज्ञभूषणम् ॥ ९ ॥
श्वेतदर्भः पूतिदर्भो ह्रस्वदर्भो लवः कुशः ।

4299 °शाकिनं २
4303 तेजनः १५; कीचको २
4304 तेजनः ५
4305 तूल° for मृत्यु°
4306 °रन्ध्रिणः १०
4307 °त्करीरो १
4310 किटी ३
4311 विशेष्यवत् २
4312 °मारिक १ श्चैक्षुमारिक १ स्तस्य
4315 °दारु १२
4317 मोरटं २
4318 कर्कटिका ३
4319 सुकुमारक ४
4320 कान्तारो २
4322 °भूषणं ७

क्षुरच्छदः संस्तरः स्यात्कुतपो मुनिशल्लकम् ॥ १० ॥
पिञ्जलं कुशवर्तिः[61a]स्यात्सग्रन्थि तु पवित्रकम् ।
मुञ्जो विपूय इक्ष्वाकुः स्थूलदर्भः पितामहः ॥ ११ ॥
शराह्व इत्कटोऽन्यस्तु भद्रमुञ्जो दृढत्वचः ।
स्याद्ब्रह्ममेखलश्चाथ काशोऽस्त्री श्वेतचामरः ॥ १२ ॥
इक्षुपुष्पः स्यादुकन्दो दुपिका चेक्षुवालिका ।
बल्वजो ना भूम्नि* स्यादुलपश्च प्रकीर्तितः ।
इक्षुः शालिः कुशः काशः शरः स्यात्तृणपञ्चकम् ।
रौहिषं रोबलं(?) पूति भूतीकं कत्तृणं तृणम् ॥ १३ ॥
ध्यामकं मुद्गलं पौरं श्यामकं विषगन्धिकम् ।
दवदग्धं देवजग्धं दग्धं बिन्दुचितं वरम् ॥ १४ ॥
धूमगन्धं गन्धपोटमालनं पाचनं च तत् ।
मालातृणं गुह्यबीजं बधिरं ध्वनिबोधनम् ॥ १५ ॥
पालघ्नो गोमयमेढं छत्रातिच्छत्रकावपि ।
भूतृणं च वियन्मूलं दूर्वा तु शतपर्विका ॥ १६ ॥
सहस्रवीर्या-भार्गव्यौ रुहानन्ता च मङ्गला ।
हरिता हरिताली च श्यामाङ्गी शीतवल्लरी ॥ १७ ॥
गोलोमी च नमस्कार्या श[61b]तवीर्या च दुर्मरा ।
विरजा मण्डली रुद्धशाद्वलं शल्यमस्त्रियाम् ॥ १८ ॥
रणप्रियं वीरतरं वीरं वीरणमित्यपि ।
उशीरमस्त्री तन्मूलमभयं नलदं च तत् ॥ १९ ॥
समगन्धं च सेव्यं च तत्पुनर्बहुमूलकम् ।
देवदत्तं मृणालं स्याल्लामज्जं स्वमृणालकम् ॥ २० ॥
दीर्घमूलं शान्तमूलमवदाहं जलाशयम् ।
सुनालं स्याल्लघुलयं लयं लघु च तोयजम् ॥ २१ ॥
इष्टकापथमम्बुकं ह्रीवेरं त्वम्बुसंज्ञकम् ।
बालकं पिङ्गलं तिक्तमुदीच्यं केशनाम च ॥ २२ ॥

---

4324 °शस्त्रकं ७
4325 पिंज्वलं१; पवित्रकं २
4327 इत्कटो ७
4328 °मेखल ३
4329 °वालिका ६
4335 याचनं २१
4338 वियन्मूले १०
4343 वीरण ४ मि°
4345 सेव्यं च ६
4346 मृणाले २
4349 °पय १२

वर्हिष्ठं स्यादाचमनमरिष्टं वज्रवद्रुचम् ।
गुथो वृत्ततृणः शृण्टो गुडाकः पृथुकन्दकः ।
गुच्छकन्दतृणं गुण्ठश्रृङ्गवेराममूलकः ॥ १८ ॥
तृणमल्ली द्व्योगर्मुञ्जीवारादि नडादि च ।
विकारे गर्मुदादीनां गार्मुतं मौञ्जमन्यवत् ।
तृणं तु न स्त्री पर्पं च यवसं चार्जुनं च तत् ॥ २० ॥
शष्पं बालतृणं घासस्तृणता त्रिणता [62a]समे ।
तृण्या स्त्री यावससंघे नड्मा तु नडसंहतिः ॥ २१ ॥
बद्धे तु तृणसंघाते पूली लिङ्गत्रये भवेत् ।
कुष्माण्डः स्यात्पुष्पफलः कर्कारुः स्त्री महाफलः ॥ २३ ॥
पीतका च घृणावासी सोमा स्थिरफलाऽमृता ।
कुम्माण्डी सोमगृष्टिर्द्विस्पृ (?) र्त्केवारुश्च कर्कटी ॥ २४ ॥
त्रपुसी शङ्कुलोर्वारुश्चिर्भिटी वालुकी स्फुटी ।
मधुरा सा गुडफला कालिङ्गं तु कलिङ्गजम् ॥ २५ ॥
कृष्णवीजमथ द्वंद्वे तुम्व्यलावुश्चिलिङ्गका ।
मधुरा सा राजफला राजालावुरलावुनी ॥ २६ ॥
शाकालावूः साम्वकः स्यादिक्ष्वाकुस्तु महाफला ।
वीणाफला तिक्तवीजा कटुतुम्बी च दुग्धिनी ॥ २७ ॥
राजपुत्री पिण्डफला राजन्यमवरा च सा ।
वृहत्फला व्यालपत्री लोमशा स्वादु कर्कटा ॥ २८ ॥
गजदन्तफलैर्वारुवरा सा मूत्रलापि सा ।
त्रपुसं च सुधावासो मूत्रलं लघुवालुकम् [62b] ॥ २९ ॥
हस्तिपर्णी पाण्डुपत्रा दीपनी कटु–वालुकी ( के ) ।
चिर्भिटं स्वादु गोदुग्धं तथा गोरक्षकर्कटी ॥ ३० ॥

---

4351 °वद्रुचं १२
4353 °मूलकः ८
4355 मौंज १
4356 चार्जुनं ४
4357 घास३; त्रिगता २
4358 यावस २ संघे नद्मा १
4362 सोमगृष्टि ११
4363 स्फुटी ७
4364 गुडफला२; कलिंद्जं

4365 कृष्णवीज३; °लिंगका ३
4366 °रलावुनी ३
4367 साम्बकः २
4368 दुग्धिनी १
4371 मूत्रला ७
4372 °वालुकं ४
4373 °वालुकी ४
4374 °कर्कटी २

सुखावासं शीर्णवृन्तं वननपुंसकं मतम् ।
मधुरान्या कर्कटकी वर्द्धमाना महाफला ॥ ३१ ॥
घण्टालिका स्वादुलुङ्गी देवदूता मधूच्छदा ।
मधुवल्ली बीजपूर्णा मधुकर्कटिका च सा ।
चीना कण्ठीनक चीना तिन्दुकं तिण्डिशं च तत् ॥ ३२ ॥
छागडं मिथुने तु स्यात्पटोलः कर्कशच्छदः ।
राजिफलः पाण्डुफलः पटुलिक्तक इत्यपि ॥ ३३ ॥
ज्यौत्स्नी जाली च राजीमास्तिक्तकश्चामृताफलः ।
कुलक कूलकोऽस्त्री स्यादथ राजपटोलकः ॥ ३४ ॥
ऊर्ध्वा सीतो बीजगर्भो रमणं त्वस्य पत्रकम् ।
कोशातकी कोशावती घण्टाली श्वेतघोषिका ॥ ३५ ॥
कृमिच्छिद्रा जालिनी च स्यान्मृदङ्गफलापि सा ।
ज्यौत्स्ना पटोलिका जाली कर्कोटी कृतवेधनम् ॥ ३६ ॥
क्ष्वेड [63a] धामार्गवो घोषो महाजाली तु पीतकः ।
राजकोशातकी हस्तिपर्णी कर्कोटिकी तथा ॥ ३७ ॥
धामार्गवः कोशफलोऽथैर्भी स्याद्धस्तिघोषिका ।
महाकोशातकी च स्याच्चलफलं जाङ्गुलं भवेत् ॥ ३८ ॥
वार्तिगणं तु वृन्ताकं वार्ताकं तु नृलिङ्गकम् ।
वार्ताकुः स्त्री चोरभाण्डी भण्टाकी शाकनायिका ॥ ३९ ॥
वार्ताककुसुमे प्रोक्तं पकुटं पुनपुंसकम् ।
बिम्बी विद्रुमपाकी स्यात्तुण्डिकेरी च तुण्डिका ।
पीलुपर्णी रक्तफला स्याद्विद्रुमफलापि सा ॥ ४० ॥
छर्द्दन्योष्ठफला गाह्ला काञ्चनी तिन्तिडी च सा ।
कटिल्लकः कारवेल्लो नासासवेदनः कटुः ॥ ४१ ॥
उग्रकाण्डश्च कण्डीरः कारवल्ल्यम्बुवल्ल्यपि ।
बृहद्वल्ली वृक्षवल्ली सुपवी सुकुमारिका ॥ ४२ ॥

---

4375 वनन्पुसकं ३
4379 चीना ३ तिंदुकं
4380 छागडं ३
4381 इ ६ त्यपि
4383 कूलको ७
4384 °गभो ३ रमणं १
4388 घेपे १५
4390 कोशफलो ६
4391 °कोशातकी३; जागुलं १
4393 °नायिका ७
4397 तिंतिडी १२
4399 कंडीर ६, °वल्य ८ पि
4400 सुकुमारिका ६

अल्पा तु क्षुद्रकाख्या*वन्ध्या कर्कोटिकी पुनः ।
कुमारिका नागरिपुर्विषकण्टकिनी तथा ॥ ४३ ॥

निष्फला मज्जदमनी देवी सा [63b] च मनोहरा ।
विषमुष्टिः क्षुद्रमुष्टिः केशमुष्टिः सुमुष्टिका ॥ ४४ ॥

काकाण्डो लावुकाकाण्डा खट्वा पर्यङ्कपादिका ।
दधिपुष्पी कोश (ल?) शिम्बिर्भवेच्छूकरपादिका ॥ ४५ ॥

कुशिम्बिवल्ली कुत्साम्रशिम्बिः पुस्तकशिम्बिका ।
फलशाकप्रभेदाः स्युर्व्याघ्राटं फाम्फटं तथा ॥ ४६ ॥

गोविन्दं रामकूष्माण्डं चित्रकूष्माण्डमित्यपि ।
सर्वच्छत्रं भूमिकन्दं शिलीध्रं कवकं च तत् ॥ ४७ ॥

शिलीनं गोमयच्छत्रं गोनासं भूतकेसरम् ।
भूमिस्फोटश्छत्रकश्च छत्राकं तु नपुंसके ।
अजशृङ्गी हरिद्रा च विदारी सारिवामृता ॥ ४८ ॥

वलाख्यं पद्ममूलं स्यादथ त्विक्षुरसैर्यकौ ।
शतावरी च हिंसा च सुषेणः कण्टकाभिधम् ॥ ४९ ॥

नागरातिविषा मुस्तं त्रयमेतत्त्रिकार्षिकम् ।
गुडूचीमिश्रितं चैतच्चतुर्भद्रं प्रकीर्तितम् ॥ ५० ॥

कुरण्टाद्या अग्रबीजा मूलजास्तूत्पलादयः ।
इक्ष्वाद्याः पर्वजाः प्रो[64a]क्ताः स्कन्धजाः शल्लकीमुखाः ॥ ५० ॥

संमूर्छजास्तृणाद्याः स्युः शाल्याद्या बीजसंभवाः ।
इत्यौषधीकदम्बस्य षडेते मूलजातयः ॥ ५३ ॥

इति वनौषधिवर्गः ।

---

4401 क्षुद्रका १ ख्या
4403 मुनोहरा ८
4404 सुमुष्टिका ४
4406 °पादिका ६
4407 °शिम्बि २
4408 व्याघ्रार्ट १ फाम्फटं १
4409 गोविंदं १ रामकूष्माडं १ चित्र(कू)ष्मांड १
4414 वलाख्यं १
4415 °काभिधम् १
4416 त्रिकार्षिकं १
4417 चतुर्भद्रं १
4418 अग्रबीजा १
4420 सम्मूर्छजा १

इति वनौषधिवर्गः ।

सिंहो हरिः पञ्चशिखो मृगेन्द्रो
मृगारि-नागारि-नखायुधाः स्युः ।
पारीन्द्र-कण्ठीरव-जङ्गमाद्रि-
शैलाट-विक्रान्त-सङ्करप्रजाश्च ॥ १ ॥

हर्यक्ष-पञ्चास्य-गभीरनादाः
स्याच्छ्वेतपिङ्गश्च स केसरी च ।
अष्टापदस्तूर्ध्वचतुष्पदः स्याद्
ऊर्ध्वेक्षणः स्याच्छरभो हरिद्विट् ॥ २ ॥

मृगराजः पञ्चनखः शार्दूलः श्वेतपिङ्गलः ।
व्याघ्रो द्वीपी द्वीपिनोऽस्त्री हिंसीरोऽप्यथ चित्रकः ॥ ३ ॥

गुहाशयः पुण्डरीकः कर्बुरस्तीक्ष्णदंष्ट्रकः ।
मृगादनस्तरक्षुः स्यात्तरक्षोप्यथ शूकरः ॥ ४ ॥ ५ ॥

सूकरः सूचिरोमा च भूमिदारः किरः किरिः ।
स्थूलनासो वक्रदंष्ट्रो घृष्टिर्गृष्टिश्च घोपिलः ॥ ६ ॥

कोलः किटिः स्तब्धरोमा दंष्ट्री पोत्री च रोमशः ।
वराहश्च मदारः [64b] स्याच्छिरोमर्मा बहुप्रजाः ॥ ७ ॥

मुस्ताद-क्रोड-कुद्दाल-दंष्ट्रास्त्र-मुखलाङ्गलाः ।
भवेदाखनिकश्चण्डः पीनस्कन्धो महांस्त्वयम् ॥ ८ ॥

क्रमरो विद्वरस्तु स्यात्तत्र ग्राम्येऽथ पोत्रिणः ।
मुखाग्रभागः पोत्रं स्याद् धुरी घोणाथ मेधवत् ॥ ७ ॥

वाराहकं वराहेण निर्वृत्तेप्यथ वानरः ।
कपिः कीशो वनौकाश्च प्लवङ्गः प्लवगः प्लवः ॥ ९ ॥

प्लवंगमः पूर्वगामी दुर्मुखश्च वलीमुखः ।
शाखामृगो ग्राममृगोऽस्थिभञ्जो मण्डलो हरिः ॥ १० ॥

कपिलो मर्कटश्चाथ गोलाङ्गूलोऽसिताननः ।
वाली वालिः शक्रसुतः सुग्रीवस्त्वर्कनन्दनः ॥ ११ ॥

---

4427 केसरी च १८
4429 हरिद्विट् ५
4439 पीनस्कंधो २१
4440 क्रमरो १
4441 पोत्रं १ स्याद्धुरी १
4442 वाराहकं १
4446 मर्कट १८ श्चाथ गोलाङ्गूले १
4447 °सुतः १

तारापतिर्हनूमांस्तु हनुमानञ्जनासुतः ।
श्वेतमलो मारुतिः स्यादाञ्जनेयोऽर्जुनध्वजः ॥ १२ ॥

अक्षान्तकः केसरिजो भास्करस्तात्र इत्यपि ।
कपिस्वभावः कापेयमथ भल्लूक-भल्लुकौ ॥ ११॥

ऋक्षो भल्लक-भालूकावच्छभल्लोऽपि भल्लवत् ।
पिङ्गरोमा च[65a] नीलाण्डोऽप्यथ गाङ्गश्च मैलिकः ॥ १२ ॥

भल्ली वार्ध्रीणसोऽपि स्याद्गुण्डो महिषः पुनः ।
कृष्णशृङ्गो दंशभीरुः शृङ्गी च यमवाहनः ॥ १३ ॥

रजस्वलो जरन्तः स्यात्कासरः सैरिभो मदः ।
घोटारिर्हेरम्बो धीरस्कन्ध-रक्ताक्ष-लालिकाः ॥ १४ ॥

स्याद्दंस-कालीतनयौ लुलायोऽपि घनाघनः ।
अरण्यजेऽस्मिन्गवलो गवलं शृङ्गमस्य च ॥ १५ ॥

द्वैह्यमहिषं वैरे हयस्य महिषस्य च ।
जायमानविषाणाग्रः कमठो महिषीशिशुः ॥ १६ ॥

पिण्डारो महिषीपालः शृगालस्तु सृगालवत् ।
क्रोष्टु-जम्बुक-जम्बूक-क्रुष्ट-फेरव-फेरवः ॥ १७ ॥

फेरण्डः क्रुरवो भूरिमाय-गोमायु-वञ्चकाः ।
मृगधूर्तो घोरवासी भरुजश्च शिवा स्त्रियाम् ॥ १८ ॥

उल्कामुखी दीप्तजिह्वा शृगाली क्रोष्टिका च सा ।
किंखिः स्त्रियामल्पशिवा लोपाकः पृथुकस्वरः ॥ १९ ॥

भवेद्धुण्डिचलश्चाथ कोक ईहामृगो वृकः ।
वनश्वा[65b]छागमल्लश्च तिलिञ्छश्च मृगादनः ॥ २० ॥

सर्पारिर्नकुलो बभ्रुः पिङ्गलाङ्कुप-केदिराः ।
ठिकुरो गृहबभ्रुः स्यान्नकुलारिस्तु सूचकः ।
मार्जालीयश्च मार्जार-पिङ्गनेत्रे विडालकः ॥ २१ ॥

---

4448 तारापति ३
4450 °च्छात्र १
4451 कापेय १
4453 नीलाण्डो ९
4454 °द्रुण्डो ५
4459 गवलं १
4461 कमठे १
4462 पिण्डारे १
4467 किखिः १
4468 °चल ३
4469 मृगादनः १७
4471 गृहबभ्रुः २

ह्रीकुरोतुश्च मायावी चित्राङ्गो वृषदंशकः ।
मैनाद आखुभुग्दीप्तनेत्रो जिह्वापिबश्च सः ॥ २२ ॥
शालिस्तु गन्धमार्जारः फूत्यण्डः पुष्कलश्च सः ।
पिङ्गलोऽडुबिडालः स्यादातुर्वनबिडालकः ॥ २३ ॥
ग्राम्यो वन्यस्तापजातः पक्षमार्जार-विड्वरौ ।
सुगन्धिधृपणश्चेति षण्मार्जारभिदः स्मृताः ॥ २४ ॥
जाहको गात्रसंकोची मण्डली शल्यकः पुमान् ।
सूचीभृत् सूचकी श्वाविच्छङ्कलः शललं शली ॥ २५ ॥
शललस्तच्छलाकायां शलली शललं शलम् ।
विलेशया पञ्चनखी गोधा घोरपदा च सा ॥ २६ ॥
कृष्णसर्पात्तु गोधायां यो जातः स्याच्च[66a]तुष्पदः ।
तत्र गौधेर-गौधार-गौधेया दुर्विषः कहिः ॥ २७ ॥
मृगः कुरङ्गः सारङ्गोऽजिनयोनिः कुरंगमः ।
मृडीकः किं च वातायुः प्रियाक्षश्च मरूकवत् ॥ २८ ॥
हरिणश्च समीची तु हरिणी च कुरंगमी ।
स नैशो नैशिकश्च स्यान्निशायां वा हरेद्यदि ।
दक्षिणेर्मा तु स मृगो यो व्याधैर्दक्षिणे क्षतः ॥ २९ ॥
स सपत्राकृतोऽन्योऽपि सपत्रेषुप्रवेशनात् ।
योऽतिव्यथावानेवं स्यान्निष्पत्राकृत इत्यपि ॥ ३० ॥
परपार्श्वे सुपुङ्खेषुनिर्गमान्निष्षमी त्रयः ।
द्वयोर्वातप्रमीर्वातमजो योऽभ्यनिलं व्रजन् ॥ ३१ ॥
एणः कृष्णः कृष्णसारः कमलोऽथैणमस्य यत् ।
चर्माद्यमेण्यास्त्वैणेयं त्रितयेऽथ कुरङ्गकः ।
चतुरश्चारुगामी च किंचिल्लोहितकृष्णकः ॥ ३२ ॥
चारुष्कः स्याद्धारलतनुः पृषतश्चित्रबिन्दुकः ।
छिक्कारः कालपुच्छः स्याद्गोकर्णो दीर्घशृङ्गकः ॥ ३३ ॥

---

4475 पुष्कल ४ य
4476 °बिडालः १; °लकः १
4477 ग्राम्यो १ यन्य १ स्तापजात १ पक्षमार्जार १
4479 मंडली ३
4481 शले ३
4484 कहिः ५
4487 हरिणश्च ११ समीची १
4488 नैशिक २
4489 दक्षिणेर्मा १
4491 °त्राकृत १
4494 कमलो ४ थैण १
4495 °स्त्वैणेयं १; कुरंगकः १
4497 चारुतनुः ३; °बिंदुकः २
4498 छिक्कार १; °शृंगकः २

आद्यो निष्क्रान्तदन्तः स्यात्सुग[66b]न्धीर्मदतीमृगः ।
❊ ❊ ❊ ❊ ❊ ❊ ❊ स्याद्वनगौश्चामरोऽपि च ।
न्यङ्कुस्तु बहुशृङ्गः स्याद्रोहितस्त्री रोहिताङ्गना ॥ ३५ ॥
चमूरुः स्याच्चित्रमृगो रुरुर्गेघान्तशृङ्गमुक् ।
कदली कन्दली चीनश्चमूरु-प्रियकावपि ।
समूरुश्चेति हरिणा अमी अजिनयोनयः ।
रिष्यश्यं-रङ्कु ❊ ❊ ❊ ❊ ❊ ❊ ❊ ❊ ❊ ❊ ❊
अष्टमश्चाष्टमश्च स्यात्पश्वङ्गावयवेऽन्यवत् ।
❊ ❊ ❊ ❊ ❊ ❊ ❊ ❊ रोहिताद्या मृगाः परे ॥ ३७ ॥
गवयः स्याद्वनगवो गोसदृक्षोऽश्ववारणः ।
पशुस्तिर्यक्चलिः सर्वे वनजाः पशवो मृगाः ॥ ३८ ॥
सिंहादीनां स्त्रियां जातौ सिंही व्याघ्री च शूकरी ।
वानरी हरिणी च स्याच्छम्बरी गवयीति दिक् ।
कडंकरं त्वर्हति यः कडंग(क)र्यः स मेघवत् ।
पशुः कडंग(क)रोऽपि स्याच्चारिः स्त्री पशुभोजनम् ।
मृगेन्द्राद्या गवाद्याश्च सर्वे स्युः पशुजातयः ।
रोमन्थो ना पशूनां यद्भवेच्चर्वितचर्वणम् ।
स रोमन्थायमानो यो हनुना व[67a]र्तयत्यमुम् ।
गन्धर्वः शरभो रामः सृमरो गवयः शशः ॥ ३९ ॥
इत्यादयो मृगेन्द्राः स्युः शशस्तु मृदुलोमकः ।
लम्बकर्णो लोमकर्णः शूलिकश्च बिलेशयः ॥ ४० ॥
शशोर्णमन्ते तल्लोम्नि पृथुस्थूलपोदरा पुनः ।
शशाभा मृगमाता स्यान्मुसली तु गृहोलिका ॥ ४१ ॥
गृहगोधा च माणिक्या मुशली च गृहोलिका ।
कुड्यमत्स्या भित्तिपल्ली हालिनी तु हलाहलः ॥ ४२ ॥

4501 बहुशृंगः २ स्याद्रोहि १ स्त्री
4502 °मृगो २
4503 कदली १ कंदली १ चीन १ श्चमूरु १प्रियका १
4504 °योनयः १
4508 °वारणः ४
4509 °चलिः ३
4513 चारिः १
4514 °जातयः १
4515 रोमंथो १
4516 °यमानो १
4517 शरभो १ रामः १ सृमरो१; शशः १
4518 मृगेंद्राः १
4519 बिलेशयः ६
4520 शशोर्ण १
4521 मृगमाता २
4523 भित्तिपल्ली ८

स्यादञ्जनाधिका चाञ्जनिका स्थूलाञ्जना पुनः ।
ब्राह्मणी रक्तपुच्छा च ज्येष्ठाथ सरटोऽण्डजः ॥ ४३ ॥
प्रतिसूर्यः शयानश्च कृकलासो घनोन्मदः ।
मूषकोऽस्त्री द्वयोराखुर्मूषिको दहरो वृषः ।
पुमांसो अयमियं वा आखुः । निर्द्विरेफारो(?) मूषकशब्दः पुंनपुंसकयोः ।
आखुः*वक्र(?)दशना खनिका तुन्दुरुन्दुरौ ॥ ४४ ॥
वृषलोचन-सूच्यास्य-कर्व-गर्ताट-पापकाः ।
नखी विलेशयः पिङ्गो गन्धाखुः पुंवृषः स्मृतः[67b] ॥ ४५ ॥
छुछुन्दरी गन्धमूषी राजपुत्री सुमूषिका ।
मूषिका जातिपुंयोगे मौषिकारस्तु तत्सुतः ।
गिरिका बालमूषी च दीर्घतुण्डी तु घुर्घुरी ॥ ४६ ॥
मृत्कीरी च दिवान्धा च लूता स्त्री जालकारिका ।
जालिका तन्तुवायोर्णनाभमर्कटका कृमिः ॥ ४७ ॥
अष्टपादूर्णनाभिः स्याल्लालास्रावः क्रिमिः कृमिः ।
नीलङ्गुः कृकलश्च स्यान्नीलाङ्गुः कृमिरान्तरः ।
नीलाङ्ग्वादिर्द्वीन्द्रियोऽथ द्वंद्वे कीटो वहिर्भवः ॥ ४८ ॥
अन्तर्जाश्च बहिर्जाश्च पुलका उभयेऽपि ते ।
अणुः कृमिः कीकसः स्यात्काष्ठलेखकरो घुणः ।
कोशकारः कीटतन्तुर्गुणिमध्यः पलोधरः ।
उद्दंशो मत्कुणो रक्तबीजः खट्वाकृमिश्च सः ॥ ४९ ॥
पिपीलकाद्याः कृमयस्त्रीन्द्रिया अथ पीलकः ।
पिपीलकोऽथ हीनाङ्गो हीरा मोक्ता पिपीलिका ॥ ५० ॥
ब्राह्मणी स्थूलशी[68a]र्षा स्याद्वम्री तूपपदी तथा ।
उपजिह्वोपदेही च रिक्षा-लिक्षे समार्थके ॥ ५१ ॥
घृतेली पिङ्गकपिशो यूषा षट्पदिकौदनी ।

---

4524 चांजनिका ४
4526 घनोन्मदः ६
4531 पिंगो १७
4532 सुमूषिका ६
4533 मौषिकार १ स्तु—After L. 4533, Ms. reads: आरक्पुंचि ततोऽन्यत्रेति श्लोकवार्तिकवदारक्
4534 बालमूषी च २
4537 लालासाव १०; कृमि. २
4539 °द्रियो २३ थ, कीटो १
4540 पुलाका १
4541 कीकम. १; घुगः २
4544 °स्त्रीद्रिया १
4545 पिपीलको १
4546 स्थूलशीर्षा २
4548 पिंगकपिशो २

यूकालो मक्षिकालश्च त्रिषु यूकादिसंयुतः ।
विषशृङ्गी शृङ्गरोमा परणस्तृणषट्पदः ।
गोपालिका महाभीरुर्गोमयोत्था तु गर्दभी ॥ ५२ ॥
स्यात्कोणकुण उद्दंश-किटिभोत्कुण-मत्कुणाः ।
इन्द्रगोपस्ताम्रकृमिः कैटिरोऽग्निरजोऽन्तिमे ॥ ५३ ॥
वैराटः कीटमाणिक्यं तितिभोऽप्यथ वृश्चिकः ।
द्वयोरालिरलिश्चाली द्रुणो द्रोणोऽप्ययं मतः ॥ ५४ ॥
अलं वृश्चिकपुच्छस्य कण्टकः प्रणिगद्यते ।
नीलोऽसौ शूककीटः स्यान्महांस्तूच्चिण्डको द्रुणः ।
कुणी कर्णजलौका स्याच्छताङ्घ्रिः कर्णकीटिका ॥ ५५ ॥
भ्रमरो भसलो भृङ्गो मधुपो मधुलोलुपः ।
मधुव्रतो मधुकरो मधुलिण्मधुसूदनः ॥ ५६ ॥
इन्दिन्दिरश्चञ्चरीकः षट्पदश्च शिलीमुखः ।
अलिर्द्विरेफो रोलम्ब-घुण्ड-पुष्पंधया[68b]लिनः ॥ ५७ ॥
मधुद्रोऽपि मिलिन्दश्च शैलेयो मधुकेशटः ।
करानुनादी खद्योतः पुनः स्याज्ज्योतिरिङ्गनः ॥ ५८ ॥
ध्वान्तोन्मेषस्तमोरत्नं पतङ्गः.शलभः शिरिः ।
क्षान्तुरप्यथ गन्धोली गन्धाली वरटा द्वयोः ॥ ५९ ॥
तैलटी वरटी च स्याद्दंशोऽस्त्री वनमक्षिका ।
दंशी तज्जातिरल्पा स्यात्सुचिका तु पतङ्गिका ॥ ६० ॥
वल्मीकगा तु गोहाला परोष्णी तैलपायिका ।
दम्भरा बम्भराली च मक्षिका चर्वणा तु सा ।
नीला क्षुद्रा तु सा पिङ्गा सरघा मधुमक्षिका ॥ ६१ ॥
मत्सरो मशकस्तुल्यावथ चीरी च चीरुका ।
झिल्लिका जिल्लिका वर्षकरी भृङ्गारिका तु सा ॥ ६२ ॥

4549 यूकालो १ मक्षिकाल १ श्च
4550 शृंगरोमा २
4551 महाभीरु२, गर्दभी २
4552 °मत्कुणा ५
4554 तितिभो ७
4555 द्रोणो ६
4557 शूककीट १, °ण्डको १
4564 करानुनादी २४
4565 °रत्नं ४
4566 क्षातु ४
4567 वरटी ४, °मक्षिका २
4568 दंशी १; पतंगिका २
4569 गोहाला २
4570 मक्षिका ३
4571 क्षुद्रा १; °मक्षिका २
4572 मशक २
4573 भृंगारीका ६

खगो विहंगो विहगो विहंगमः
पतन्पतंगः पतगः पतंगमः ।
पत्री पतत्री पतसो वि-पत्रिणौ
पित्सन्गरुत्मान्नभसंगमो द्विजः ॥ ६३ ॥
पक्षी पटाको विकिरः खजाको
नीडोद्भवः पत्ररथः सरण्डः ।
वाजी शकुन्तः शकुनिः शकुन्तिः
[69a]किरो नगौकाः शकुनो विहायाः ॥ ६४ ॥
पतेरो विष्किरोऽण्डोत्थो वल्कान्नः कठारुवः ।
क्योऽन्तिमेऽथ तुण्डं स्यात्सृपाटी त्रोटिरित्यपि ।
चञ्चू-चञ्चौ गरुत्त्वक्षी पुंसौ पक्ष-च्छदावुभौ ॥ ६५ ॥
पत्रं पतत्रं च ⁂ पक्ष-पिच्छे तनूरुहम् ।
स्त्री पक्षतिः पक्षमूलं कुलायो नीडकश्चिपु ॥ ६६ ॥
वर्तरूकं काकनीडं पेशी कोपस्तु पेशिका ।
कोपोऽण्डमन्तिमे डीनं डयनं च नभोगतौ ॥ ६७ ॥
प्रडीनोड्डीन-संडीनान्येताः खगगतिक्रियाः ।
तत्स्त्रीजातौ तु विहगी स्त्री विहाया द्विजा खगी ॥ ६८ ॥
चक्राङ्गो धवलगरुन्मराल-हंस-
चक्राङ्गा अपि कलकण्ठ-केरवौ च ।
आरक्ताननचरणः स राजहंसः
श्वेतान्यैर्मुखचरणैः स धार्तराष्ट्रः ॥ ६९ ॥
तैर्मल्लिकाक्षो मलिनैरथायं
पीतैरिमैः स्यात्कलहंससंज्ञम् ।
कादम्बको धूसरपक्ष एष
कारण्डवः स्यान्मरुतोऽच्छपक्षः ॥ ७० ॥
वारला वरला हंसी वारटा वरटा[69b]पि सा ।

---

4583 क्योऽन्तिमे २२
4584 चञ्चौ ५
4585 °रुहम् ६
4586 °मूलं ३; नीड २ क°
4587 वर्तरूकं १
4588 डयनं २
4589 प्रडीनो १ डीन १ संडीना १; °क्रिया १
4590 खगी ५
4592 °केरवौ ७
4593 राजहंस १
4595 °मल्लिकाक्षो १
4596 °हंस १ सं°
4598 °पक्ष ३
4599 वरटा ५

रक्तमूर्धा पुष्कराह्वः सारसो लक्ष्मणोऽपि सः ॥ ७१ ॥
कुरंकरश्च नीलाङ्गो मुखरश्चित्रमन्यकः ।
विलीनाङ्गो दीर्घजङ्घो बन्धुरोऽस्य तु कामिनी ॥ ७२ ॥
सारसी लक्ष्मणा च स्याल्लक्षणा लक्ष्मणीत्यपि ।
कोको द्विकश्चक्रवाकश्चक्रो द्वंद्वचरोऽपि सः ॥ ७३ ॥
रथाङ्गनामा कामी च चक्रीवांश्च कुरंकरः ।
क्रुङ् क्रौञ्चस्तस्य तु स्त्री स्यात्कुञ्चाथ स्याद्बकोटकः ॥ ७४ ॥
स्याद्वारिबलिमुकङ्को बकोऽपि स्याद्बलाहकः ।
बलाको बिसकण्ठी तु बलाका च बकेरुका ॥ ७५ ॥
शरारिरातिराटिश्च स्त्रियोऽथ कुररो भवेत् ।
उत्क्रोशो मत्स्यभुक्चाथ चातकः स्यात्समोम्बुपः ॥ ७६ ॥
घनारावः स्तोककश्च पप्पीहो जलरञ्जकः ।
दार्वाघाटः पुष्कराह्वः कर्बुरश्चित्रकन्धरः ॥ ७७ ॥
※ [की]रः शुको रक्ततुण्डो मेधावी च फलादनः ।
वचस्तु राजकीरः स्याद्रञ्जकः शतपत्रकः ॥ ७६ ॥
चित्रपादा सारिका स्याद्वचण्डा चि[70a]त्रलोचना ।
गोराटिका गोकिरा ※ गोरका कलहाकुला ॥ ७७ ॥
मेधाविनी-राजदूती-प्रियवाग्राजसारिकाः ।
कङ्कस्तु लोहपृष्ठः स्यात्कंकरः कमनच्छदः ॥ ७८ ॥
स्कन्धमल्लो दीर्घपादः कालपुच्छश्च संमतः ।
चिल्लः शकुनिरातायी शशघा ※※※ [टकङ]त्यपि ॥ ५६ ॥
दाक्षाय्यो गृध्र-दक्षाय्य-दूरदृग्वक्रचञ्चुकाः ।
कुणिताक्षः खगव्याघ्रः कामायुः खगपुष्कसः (?) ॥ ८० ॥
संपातिः पक्षिराजः स्याज्जटायुस्तु जटायुषि ।
पक्षिघाती पक्षिमारी पक्षिग्राहक इत्यपि ॥ ८१ ॥
श्येन आपतिकः पत्री शशादी भाचिका स्त्रियाम् ।

---

4602 धुंधुरो ११
4603 लक्ष्मणी ४
4606 क्रुंचा १
4608 बलाको ६; बकेरुका २
4610 मत्स्यभु २ क्चाथ
4611 °रजकः ६
4612 °कंधरः ४
4614 °पत्रक° ४
4616 °हाउला ८
4617 °सारिका ४
4619 समत. १
4622 °पुष्कलः ६
4623 °राजः २; जटायुषि २
4625 भाचिका ५

पक्षिणा येन गृह्यन्ते पक्षिणोऽन्ये स दीपकः ॥ ८२ ॥
दिविः किकी राजपक्षी किकिदीविः किकीदिविः ।
चापश्चासश्चाथ भासो भाषो भासन्त इत्यपि ॥ ८५ ॥
शकुन्तः श्वेतचूडश्च गृध्राभोगोऽष्टकुक्कुटः ।
कुक्कुटोऽस्त्री निशावेदी कृकवाकुरुषःस्वरः ॥ ८६ ॥
शिखण्डिकस्ताम्रचूडः[70b]काहकश्चरणायुधः ।
बहुपत्यश्च कालज्ञो वोधी स्याद्रणकुक्कुटः ।
शौण्डी दक्षो विवृताक्षो देवट्टी स्वम्बुकुक्कुटी ॥ ८७ ॥
गङ्गाचिल्ली च विकषा कुकुभः कुहकस्वनः ।
मुरः कुलालदक्षश्च स्थूलोऽसौ रक्तवर्त्मकः ।
नीलच्छविः कृष्णगलः कोयष्टिस्तु जलोद्भवः ।
पानीयकुक्कुटश्च स्याद्भारद्वाजस्तु हिकडः ॥ ८८ ॥
व्यामाटोऽपि भरद्वाजः खञ्जरी*[ट]स्तु खञ्जनः ।
चलपुच्छः कर्कराक्षः कणाटीनोऽपि खञ्जरी ॥ ८९ ॥
मीनाग्रीणः सूत्रकण्ठः खञ्जलेखो जनेक्षणः ।
तडङ्कश्च कलिङ्गस्तु धूसी धूम्याट आटकः ॥ ९० ॥
भृङ्गोऽथान्यः स गोप्रेरी कृष्णवर्णो वनप्रियः ।
कर्करेटुः करेटुः स्यात्करटुः कर्कराटुकः ॥ ९१ ॥
कृकणः क्रकरस्तुल्यावुपचक्रो मदाविलः ।
हारीतो हारिलोऽपि स्याद्धरित्पीतक इत्यपि ॥ ९१ ॥
मृदङ्कुरः प्लवस्तु स्याद्धात्रसंप्लव इत्यपि ।
टिट्टिभस्तु कटुक्वाण उत्पादशयनश्च सः ॥ ९२ ॥
जी[71a]वंजीवस्तु गुन्द्रालो विषदर्शनमूर्छकः ।
ज्योत्स्नाप्रियश्चकोरः स्याच्चाम्राक्षो विषसूचकः ॥ ९३ ॥
चलचञ्चुस्तथाङ्गारभोजी लड्वा तु पेचकः ।

4628 °श्वास ७
4629 °कुकुटः ७
4632 वोधी ११
4634 विकपा ४
4635 °दक्ष ४ श्च स्थलेलो
4636 कृष्णगलः ३
4637 कुकुट ३ श्च
4638 भरद्वाजः ४
4641 तडंक ११ श्च
4642 भृंगो ५; वनप्रियः ३
4643 °राटुकः ४
4644 कृकर २ स्तु°
4646 मदङ्करे ४; °सम्व ३
4647 °शयन ३
4648 °मूर्छक· ३
4650 °भोजी ६

पुच्छाधोभागरक्तोऽथ कामी गृहकपोतकः ॥ ९४ ॥
पारापतो रञ्जकश्च पारावतक इत्यपि ।
प्रासादकुक्कुटो झञ्झकण्ठो रक्तान्तलोचनः ॥ ९५ ॥
मदोत्कटश्चाट्टकर्ता भवेत्करलवोऽपि सः ।
नीलकण्ठः कपोतः स्याद्वन्योऽप्यथ घुघूत्करः ॥ ९६ ॥
कपोतकः शृङ्गधूमो भस्माङ्गोऽप्यरुणस्त्वसौ ।
भवेत्काणकपोतोऽथ तित्तिरिस्तित्तिरोऽपि च ॥ ९७ ॥
खरकोणश्चित्रपक्षो गौरस्त्वेष कपिञ्जलः ।
वार्तिरस्तु सचित्रः स्याद्वर्तकस्तु ततोऽल्पकः ॥ ९८ ॥
वर्तका वर्तिका च स्त्री गिरीका गिरिवर्तिका ।
चटकः कलविङ्कः स्याद्गृहनीडः कुलिङ्गकः ॥ ९९ ॥
स्याद्देहवलिभुक्चित्रपृष्ठो ग्राम्यस्तु पुंद्रकः ।
योषित्तु तस्य चटका स्व्यपत्ये चटका तयोः ॥ १०० ॥
चाटकैरः सुतश्चित्रयोधी लावो महा[71b]र्धकः ।
काकतुण्डो वायसास्यो मधुहा मधुघातकः ॥ १ ॥
गोनर्दकस्तु गोक्ष्वेडश्चक्रविद्या तु वल्गुनी ।
निशाटवी परा तु स्यादालेया मातृवाहिनी ॥ २ ॥
जतुका चर्मचटकाजिनपत्राथ पेचकः ।
घूको निशाटः काकारिरुलूकः कौशिकोऽपि सः ॥ ३ ॥
घूत्काकरो दिवाभीतो दिवान्धो हृदिलोचनः ।
प्रतिसूर्यः काकरूकः काकः पीयुः सकृत्प्रजः ॥ ४ ॥
मौकुलिः करटोऽरिष्टो बलिपुष्टोऽपि वायसः ।
चिरजीवी द्विको घूकवैरी ध्वाङ्क्षश्च शक्रजः ॥ ५ ॥

---

4651 °रक्तो १
4654 °स्थो ११
4655 वन्यो २
4656 भस्मांगो ४
4657 °कपोतो १
4658 °पक्षो ४; कपिंजलः १
4659 °वर्तक १ स्व
4660 वर्तिका २; °वर्तिका २
4662 °पृष्ठो ६; पुंद्रक १
4663 चटका १; चटका १
4664 महार्घकः २
4665 वायसास्यो २; °घातकः २
4666 गोक्ष्वेडो २
4667 निशाटवी १; °वाहिनी २
4668 °पत्रा १
4669 सः १
4671 काकरुकः १२; °प्रजा ४

आत्मघोषो गूढकामी धूलिजङ्घो निमित्तकृत् ।
एकदृक्परभृद्द्रोणो नाडीजङ्घः कणूककः ।
स्त्रियां काकोलूकिका स्याद्वैरे वायसघूकयोः ।
झम्पाशी मत्स्यरङ्कुर्वा रङ्गो मद्गुर्मलीरकः ।
कालकण्ठश्च दात्यूहः काकोलस्तु वनोद्भवः ॥ ६ ॥
वृद्धकाको द्रोणकाकोऽद्रिकाकः कृष्णवायसः ॥ ७ ॥
सितकाको चकोटः स्यात्सूगृहश्चसुसूचिकः ॥ ८ ॥
कोकिलः क[72a]लकण्ठः स्यान्मधुकण्ठः कुहूमुखः ।
रसालगाली ताम्राक्षो ध्वाङ्क्षबन्धुश्च वाशरः ॥ ९ ॥
वनप्रियः परभृतो रवणो रवथः पिकः ।
मयूरो बर्हिणो बर्ही प्रचलाकी च चन्द्रकी ॥ १० ॥
सितपत्रः सितापाङ्गो नीलकण्ठो भुजङ्गभुक् ।
कलार-शिखि-मेनाद-मेघनादानुलासिनः ॥ ११ ॥
केकी शिखावलश्च स्याच्छिखण्डी च कलापवान् ।
केकास्य वाक्चन्द्रकस्तु मेचकोऽस्त्री शिखण्डकः ॥ १२ ॥
कलापः प्रचलाकश्च पिच्छं बर्हस्तु न स्त्रियाम् ।
शिखा चूडा पक्षिभेदाः कोकवञ्जुलकादयः ॥ १३ ॥
गृहासक्ताः पक्षिमृगाश्छेकास्ते गृह्यकाश्च तौ ।
मृगा महामृगा मत्स्याः प्रतुदा विष्किरास्तथा ॥ १४ ॥
प्रसहा अप्चरा रन्ध्रेशयाः पिशितभक्षधा ।
महामृगैरप्चरैश्च मत्स्यैश्चानूपमुच्यते ॥ १५ ॥
साधारणं तु मांसं स्यात्प्रसहैश्च बिलेशयैः ।
जाङ्गलं तु भवेन्मांसं प्रतुदैर्विष्किरैर्मृगैः ॥ १६ ॥
शिशौ शावः कुमारोऽर्भोऽर्भकः पा[72b]कः स्तनंधयः ।
बाल-डिम्भोत्तानशय-क्षीरकण्ठ-मृडंकणाः ॥ १७ ॥
पृथुको रुदथः पोतो गर्भो शुष्टिंधयश्च सः ।

---

4675 कणूककः २
4676 काकोलूकिका १
4678 दात्यूहः ९
4680 सूचिकः २
4683 पिकः १२
4687 कलापवान् १७
4688 केका १
4690 चूडा २, कोक १
4691 गृह्यका १
4692 महामृगा १ मत्स्या १ प्रतुदा १ विष्किरा १
4693 °शयाः १
4694 °श्चानूप १
4695 साधारणं १
4699 पोतः १५; शुष्टिंधय १७

स्तनंधयी शिशुर्बाला पाका मुष्टिंधयी स्त्रियाम् ॥ १८ ॥
स्त्रीपुंसौ मिथुनं द्वंद्वेऽपत्ययुगं च युग्युगम् ।
युगलं यमलं द्वंद्वं यमं संघाटिका द्वयम् ॥ १९ ॥

समूहो निवहो व्यूहः संदोहः प्रकरो गणः ।
ओघ-व्रज-व्रात-वार-विसर-व्रज-संचयाः ॥ २० ॥

समुदायः समुदयः समवायश्चयः स्तमः ।
स्तोमः कलापः कूटोऽस्त्री संहतिः स्त्री कदम्बकम् ॥ २१ ॥

निकुरम्बं वृन्द-जाल-जात-पेटकमन्तिमे ।
चक्रमस्त्री चक्रवालं मण्डलं पटलं न ना ॥ २२ ॥

ग्रामो विषयशब्दास्त्रमूर्तेन्द्रियगुणोत्तरः ।
वृन्दभेदाः समैर्वर्गः संघ-सार्थौ तु जन्तुभिः ॥ २३ ॥

कुलं सजातिभिर्यूथं तिरश्चां पुंनपुंसकम् ।
समजस्तु पशूनां स्यात्समाजस्त्वन्यदेहिनाम् ॥ २५ ॥

सधर्मणामेष निकाय उक्तः
स्कन्धो नराणां करिणां हयानाम् ।
पु[73a]ञ्जोत्करौ राशिरिमे समार्थाः
कूटोऽस्त्रिया धान्यसमुच्छ्रयार्थः ॥ २६ ॥

सैंहं मार्गं काकं काङ्कं वाकं शौकं कापोतं च ।
अप्यौलूकं मायूरं स्यात्सिंहादीनां संघातार्थे ॥ २७ ॥

॥ इति सिंहादिवर्गः ॥

॥ श्री ॥ मर्त्यः शतायुर्मनुजो मनुष्यः
स्यान्मानवो मानुष-भूस्पृशौ विट् ।
नरः पुमान्पञ्चजनोऽङ्गनेष्टः
स्यात्पूरुषो ना पुरुषैधतू च ॥ १ ॥

---

4700 °भयी ५
4702 द्वयम् १
4708 पटलं १७
4710 °र्भर्गः १, °सार्थौ २
4711 पुन्नं १; °यूथं १
4712 समज १ स्तु
4713 तिषय १
4716 कूटो ४
4717 सैंहं १ मार्गं १ काकं १ काकं १ वाकं १
शौकं १ कापोतं १ च
4718 अप्यौलूकं १ मायूरं १
इति सिंहादिवर्गः ।
4720 विट् ८
4722 °पैधतू ८

मानुष्यकं स्याचरमे नृवृन्दे
स्त्रिया तु चञ्चा तृणपूरुषः स्यात् ।
चञ्चा स्त्रियामेव हि तत्सदृक्षे
स्यात्पौरुषेयस्त्रिषु तत्कृतादौ ॥ २ ॥

पौंस्नं पुंस्त्वं स्त्रियां पुंस्ता पुंसो भावे समीरयेत् ।
स्त्रियास्तु भावे स्त्रीता स्त्री स्त्रैणं स्त्रीत्वमिमे समे ॥ ३ ॥

भवेत्कापुरुषो निन्द्यो नरः कुपुरुषोऽपि सः ।
निष्काममोगे पुंसिद्धौ वहीनर-विहीनरौ ॥ ४ ॥

स्त्रैणं च पौंस्नं त्रिषु तद्भवादौ
स्त्रीवच्च पुंवत्सदृशेऽव्ययं स्यात् ।
जातौ स्त्रिया स्यान्मनुषी च मर्त्या
स्यान्मानवी सा वि[73b]ल मानुषी च ॥ ३ ॥

सीमन्तिनी स्त्री वनिता च वामा
नारी वधूः स्यादपि वर्णिनी च ।
योषा च जोषा पुरुषी च योषी
दशाऽबला स्यान्महिला महेला ॥ ४ ॥

प्रतीपदर्शिन्यपि वासिता च
स्याद्योषिता सा दयिता प्रिया च ।
सा स्त्रीतमापि स्त्रितमा स्त्रिरूपा
स्यात्स्त्रीतरापि स्त्रितरा प्रशस्ता ॥ ५ ॥

स्त्रीमन्या तु स्त्रियमन्या स्त्रिम्रुवा स्त्रीम्रुवा त्रिषु ।
स्त्रीकल्पापि स्त्रिकल्पा ※ [स्या]त्स्त्रीपाशा चातिनिन्दिता ॥ ६ ॥

तद्विशेषा स्वनामानुरूपार्था भीरुरङ्गना ।
कामिनी मानिनी कान्ता ललना वामलोचना ॥ ७ ॥

---

4723 मानुष्यकं १
4724 चंचा १
4726 पौरुषेय १
4728 स्त्रीत्व ३
4729 कुपुरुषो २
4730 °विहीनरौ २
4731 स्त्रैणं १ च पौंस्रे १
4732 पुंव १ त्स०
4734 °पी च ४
4740 प्रिया च २०
4742 स्त्रितरा ५ प्रसस्त
4744 स्त्रीपाशा ३
4745 भीरु१रंगना १
4746 कामिनी १ मानिनी १ कांता १३ ललना १ वामलोचना १

प्रमदा सुन्दरी रामा रमणी वरवर्णिनी ।
नितम्बिनी वरारोहा सुचमा मत्तकाशिनी ॥ ८ ॥

वल्जा चाथ सा चण्डी कोपना भामिनी च सा ।
भाविनी मूढभावा सा मदिराक्षी मदोद्धता ।
मत्ता छेका वाणिनीयं च धीरा सा गूढमानयुक् ।
अधीरा व्यक्तकोपा स्याद्धीराधीरा[74a] तु मिश्रिता ॥ ९ ॥

सुभ्रूर्नतभ्रूर्मचेभगामिनी मन्दगामिनी ।
भवेच्चक्रनितम्बा सा चक्रतुल्यनितम्बिका ॥ १० ॥

युवखलतिर्या युवतिः खलतिर्जातैवमेवासौ ।
युवजरती युवपलिता युववलिनाम्नूर्विशेष्यघ्नाः ।
एवं चन्द्रमुखी पद्ममुखीत्याद्या विनिर्दिशेत् ।
उत्काप्सरायमाणा सा याचरत्यप्सरा इव ।
रूप्या च रूपिणी रूपवती सा रूपिकेत्यपि ।
स्वङ्गी स्वङ्गा सुगात्री च सुगात्रेति समार्थकाः ।
सुकण्ठी च सुकण्ठा च सुन्दरी सुन्दरापि च ।
स्यात्तुङ्गनासिकी चापि तथा स्यात्तुङ्गनासिका ।
नागी त्विभीया स्थूला * * * [स्यान्नागा] त्वन्यत्र कीर्तिता ।
सादृश्ये करभोरूः स्याद्वामोरूः कर्म धारयेत् ।
अप्रसूताङ्गना स्यामा सुविदल्ला विवाहिता ।
पद्मिन्याद्यास्तु तद्भेदा ज्ञेया वात्स्यायनोदितात् ॥ ११ ॥

भुवाभिषिक्ता महिषी महादेवी नृपाङ्गना ।
भवेदसूर्यपश्येति तदादौ गोपिते त्रिषु ।
[74b]पत्नी पाणिगृहीती च वामाङ्गं सहधर्मिणी ॥ १२ ॥

---

4747 प्रमदा १ सुंदरी १ रामा १ रमणी १ वर-वर्णिनी १
4748 वरारोहा १
4740 वल्जा १; भामिनी १
4750 °भावा २
4751 धीरा १
4752 अधीरा १; धीरा १ तु
4753 °र्नतभ्रू २; °गामिनी २
4755 °खलति १
4756 °जरत १ युवपलिता १ युवपलिता १
4757 चंद्रमुखी १
4759 रुपिके ४ त्यपि
4760 सुगात्रेति ४
4761 सुकंठा २; सुंदरा २
4762 °नासिका २
4763 नागन्द for नागी; स्थूल १
4764 करभोरू १; वामोरूः १
4765 सुविदल्ला १
4766 पद्मिन्या १ द्या°
4767 °देवी १

भार्या जाया च गृहिणी द्वितीयोढा जनी वधूः ।
क्षेत्रं परिग्रहो भूम्नि दाराः पुंसि गृहा गृहम् ॥ १३ ॥
कलत्रं दं।सहचरी पुरन्ध्री तु कुटुम्बिनी ।
पुरन्ध्रिरपि साध्वी तु सुचरित्रा पतिव्रता ॥ १४ ॥
सता देवी चैकपत्नी सती चाथ कुलाङ्गना ।
स्याद्वंशपालिका चाथ प्रेयसी वल्लभा प्रिया ॥ १५ ॥
प्राणेशा हृदयेशा च कान्ता प्रणयिनी च सा ।
कृतसापत्नकाध्यूढाधिविन्नाथ स्वयंवरा ॥ १६ ॥
स्वरुः पतिंवरा वर्या कनी कन्या कुमारिका ।
तामपूर्वपतिं पाणौ गृह्णन्कौमार उच्यते ॥ १७ ॥
तस्य भार्यापि कौमारी नग्निकानागतार्तवा ।
गौरी स्यादष्टवर्षाथ मध्यमा प्रकटार्तवा ॥ १८ ॥
राकाथ तरुणी तल्ली तरुणी युवतीश्वरी ।
दिकरी काहली चाथ वधूटी वर्वटी जनी ॥ १९ ॥
वधूः स्नुषा सुतस्त्री स्याच्चिरण्टी तु स्ववासिनी ।
पतिप्रिया वधूटी च सुभगा च सुवासि[75a]नी ॥ २० ॥
विलेपनी रोचना च चक्षुष्या च सुवेषिणी ।
पतिवत्नी जीवद्दीशा जीवतोका तु जीवसूः ।
वीरपत्नी वीरभार्या वीरमाता तु वीरसूः ।
बहुप्रसूः स्यात्क्रमिला काकवन्ध्या सकृत्प्रसूः ।
वृद्धपत्नी वृद्धपतिः सपत्नी तुल्यभर्तृका ।
नश्यत्प्रसूतिका निन्दुः जीर्णर्तुर्निष्कला भवेत् ॥ २१ ॥
अवीरा निष्पतिसुता विश्वस्ता विधवे समे ।
रण्डा च ताडपत्री च भवेदनलकापि सा ।

4771 प्रासो for पुंसि
4772 सहचरी १
4773 पुरंध्रिः ३ पि
4774 सती ६
4775 °पालिका २
4777 °विन्ना ३ थ
4778 वर्या ४, कुमारिका ३
4779 कौमार १
4780 कौमारी १
4781 गौरी ३
4782 राका ३ थ
4785 सुवासिनी ६
4786 सुवेषिणी ४
4787 जीवद्दीशा ३
4788 वीरभार्या २
4789 क्रमिला १; सकृत्प्रसू. ५
4790 वृद्धपति २
4792 °सुता २

छत्रभङ्गस्तु वैधव्यं सौभाग्यं जीवभर्तृता ।
कामुकी तु वृषस्यन्ती त्रिगर्ता कामुका परा ॥ २२ ॥
ज्येष्ठा तु ज्यायसी नारी कनिष्ठा तु यवीयसी ।
प्रवत्स्यत्पतिका सा स्यात्प्रवत्स्यति यदीश्वरः ॥ २३ ॥
भर्तरि प्रोषिते देशान्तरे प्रोषितभर्तृका ।
अन्योपभुक्तपतिका खण्डिता सामिधीयते ॥ २४ ॥
कलहान्तरिता तु स्यात्तप्ता भर्त्रवमानने ।
विप्रलब्धा तु संकेतस्थले भर्तर्यनागते ॥ २५ ॥
उत्का ध्यायति[75b]या तत्र भर्त्रनागमकारणम् ।
भवेद्वासकसज्जा या तत्परा वासके स्वके ॥ २६ ॥
स्वाधीनपतिका तु स्याद्वशे यस्याः पतिः सदा ।
कामार्ताभिसरेत्कान्तं सारयेद्वाभिसारिका ॥ २७ ॥
अनुरागवती स्वीया निजपाणिग्रहीतरि ।
किंचित्कामा रतौ वामा मुग्धा लज्जातिशायिनी ॥ २८ ॥
लज्जास्मरान्तरालस्था मध्याथ कुशला रते ।
प्रगल्भा साथ गुप्ता सा सर्वथा रतगोपिनी ॥ २९ ॥
वाल्हीना त्वशिश्वी स्यात्पालिस्तु नरमालिनी ।
सश्मश्रुर्याथ पोटा स्यान्नारी स्त्रीपुंसलक्षणा ॥ ३० ॥
इभपोटा त्विभी तादृग्द्विजपोटा द्विजा तथा ।
आलिर्वयस्या सध्रीची सखी दासी तु चेटिका ॥ ३१ ॥
पोटा चेटा तथा कुटहारिका कुट्टिनी पुनः ।
शुम्भी शुन्दी शम्भली स्यात्कर्णिका माधवी च सा ॥ ३२ ॥
दूतिर्दूती रुण्डिका च तथा सुरततालिका ।
संघाटिका मता सा च तथा संचारिकेत्यपि ॥ ३३ ॥

4795 वृषस्यन्ती २; कामुका २
4796 ज्यायसी २; यवीयसी ३
4798 °भर्तृका १
4799 खंडिता १
4800 °तरिता १
4801 विप्रलब्धा १
4802 उत्क्ष १
4804 °पतिका १
4806 स्वीया १
4807 मुग्धा १
4808 मध्या १ थ
4809 प्रगल्भा १
4810 त्वशिश्वी १; °मालिनी २
4812 इभपोटा १; द्विजपोटा १
4813 सखी ४
4814 °हारिका ५
4817 °रिके ६ त्यपि

पुंश्च[76a]ली धर्षणी बन्धक्यसती कुलटेत्वरी ।
अविनीता पांसुला च स्वैरिणी लाञ्छनी च(म)ता ॥ ३५ ॥
वेश्या साधारणी पण्या पण्यस्त्री वर्वटी च सा ॥ ३७ ॥
गणिका लञ्जिका रूपाजीवा क्षुद्रा गवेधुका ।
कच्छरा वारयोषा च शूरा दासी धराप्सराः ॥ ३८ ॥
यामस्त्री सा यामकिनी भुजिष्या कारकामिनी ।
कामकूटा विभ्रमोऽस्याः वारमुख्या तु सत्कृता ॥ ३९ ॥
तद्वृन्दे वैश्य-गाणिक्ये सैरन्ध्री त्वन्यगेहगा ।
अलंकारादिचतुरा स्वाधीना गन्धकारिका ॥ ४० ॥
असिक्न्यन्तःपुरे प्रेष्या तरुणी याथ कोटवी ।
नग्निका या वस्त्रहीना मुक्तकेशी च कामिनी ॥ ४१ ॥
कात्यायन्यर्द्धवृद्धा या काषायवसनाधवा ।
श्रवणा श्रमणा मुण्डा भिक्षुकी कुल्टासती ॥ ४२ ॥
सुतः कौलटिनेयोऽस्याः कौलटेयोऽपि संमतः ।
वृद्धा पलिक्नी जरती प्रज्ञा प्राज्ञीप्रजानती ॥ ४३ ॥
प्राज्ञा तु प्रज्ञया युक्ता या[76b]त्वन्तःपुरगामिनी ।
विप्रश्निका चेक्षणिका दैवज्ञा सा च कथ्यते ॥ ४४ ॥
कारीषगन्ध्या कारीषगन्धेर्गोत्रप्रजा हि सा ।
शूद्रा तु शूद्रजातिः स्त्री शूद्री शूद्राङ्गना भवेत् ।
आभीरी तु महाशूद्री जातिपुंयोगयोः समा ॥ ४५ ॥
अर्याणी स्वयमर्या स्यात्क्षत्रिया क्षत्रियाण्यपि ।
उपाध्यायाप्युपाध्यायी या स्वतोऽध्यापिका भवेत् ॥ ४६ ॥
आचार्या तु स्वतो व्याख्याकर्त्री पुंयोगिनी पुनः ।
उपाध्यायाप्यु(न्यु ?)पाध्यायी स्यादर्यी क्षत्रियी तथा ॥ ४७ ॥
आचार्यानी चाथ पुनर्भूरुक्ता दिधिषूरपि ।
या द्विरूढा पतिस्त्वस्याः पुनर्भूदिधिषूरसौ ॥ ४८ ॥

---

4823 °कामिनी २०
4824 कामकूट्ये १; वारमुखा १
4825 वैस्म १; सैरंध्री १
4827 असिक्यं १ तःपुरे
4829 °यन्म १ र्द्ध°
4831 कौलटेयो २ पि
4832 जरती ३; प्रजानती ३
4834 दैवज्ञा २
4835 °गन्ध्या १
4838 °मर्या २
4839 °ध्यायी २
4841 °ध्यायी २ स्यादर्या १ क्षत्रियी १
4842 आचार्यानी १; दिधिषू २ रपि
4843 °षू २ रसौ

स तु द्विजोऽग्रेदिधिषूः सैव यस्य कुटुम्बिनी ।
परिवेत्तानुजोऽनूढे ज्येष्ठे दारपरिग्रहात् ॥ ४९ ॥
परिवित्तिस्तु तज्ज्यायाञ्जायास्य परिवेदिनी ।
पुष्पवत्यविरात्रेयी मलिनी च रजस्वला ॥ ५० ॥
ऋतुमत्यप्युदक्यावीः स्त्रीधर्मिण्यार्तवः पुनः ।
[77a]स्त्रीधर्मश्च रजः पुष्पमृतुस्तत्समयो भवेत् ॥ ५१ ॥
आपन्नसत्त्वा स्याद्गुर्विण्यन्तर्वत्नी च गर्भिणी ।
गुर्वी चोदरिणी भ्रूणः पुंसस्यां सा सदोहदा ॥ ५२ ॥
श्रद्धालुः स्यादथ श्रद्धा जोङ्गटः स्त्री न दोहदम् ।
दौहृदं च प्रजाता तु विजाता च प्रसूतिका ॥ ५३ ॥
प्रसूतका विजननं पुनः प्रसव उच्यते ।
सूतिमासो वैजननो गार्भिणं गर्भिणीगणे ॥ ५४ ॥
कुमारभृत्या गर्भिण्याः परिचर्या निगद्यते ।
भ्रूणः स्याद्दरगो गर्भस्तत्स्याद्दोहदलक्षणम् ॥ ५६ ॥
भर्ता भोक्ता वरयिता रमणो रामिलो वरः ॥ ५५ ॥
पतिर्धवो जीवितेशो वल्लभो दयितोऽपि च ।
कामलः सरसी कान्तः सुविदश्च हृदीश्वरः ॥ ५६ ॥
सेक्ता विवोढा चोद्वोढा प्रेष्ठः सहचरोऽपि सः ।
वातपुत्रस्तूपपतिर्जारोऽथ गणिकापतिः ॥ ५७ ॥
भुजंगः स्याद्विवाहे तूपयामोपयमौ समौ ।
तथोद्वाहः परिणयः पाणिपीडनमित्यपि ॥ ५८ ॥
स्यात्पाणिग्रहणं दारकर्म चाथाम्बुपूर्विका ।
कन्यामलंकृता दद्या[77b]द्ब्राह्मोऽसौ वितते पुनः ॥ ५९ ॥
मखे दद्यादृत्विजे तामेष दैवो निगद्यते ।
चरतः सह धर्मं यत्प्राजापत्योऽथ गोयुगम् ॥ ६० ॥
दत्त्वा समुद्वहेदार्षो गान्धर्वः समयान्मिथः ।

---

4844 °दिधिषू १
4846 °देविनी १
4848 °मिण्या १ सैन
4849 पुष्प ४ मृतु १
4851 भ्रूग ७
4853 दोहृदं ४
4854 प्रसव २
4855 गार्भिणं १
4862 जारोथ ३१
4865 दारकर्म ८
4866 ब्राह्मो १
4867 दैवो १
4868 प्राजापत्यो ११
4869 °दार्षो

आसुरो धनदानाद्यः पैशाचश्छलचौर्यतः ॥ ६१ ॥
राक्षसो युद्धहरणाद्यौतकं युतकं तथा ।
विवाहादिषु यद्देयं सुदायो दाय इत्यपि ॥ ६२ ॥
हरणं चाथ सत्कृत्य कन्यादातात्र कूकुदः ।
कुकुदोऽथाकृतोद्वाहो ठण्ठ इत्यभिधीयते ॥ ६३ ॥
वरस्य सुहृदो जन्या जनीवोढार इत्यपि ।
युवतिर्यस्य जाया स्याद्युवजानिरसौ वरः ॥ ६४ ॥
कल्याणीप्रिय एवं स्यात्सुभगाप्रिय इत्यपि ।
एवं स्यात्पञ्चमीभार्यः सुकेशीभार्य इत्यपि ॥ ६५ ॥
तथैव ब्राह्मणीभार्यः शूद्राभार्य इमा दिशः ।
परदाररते तु स्यात्स्त्रैत्रिय· पारदारिकः ।
दंपती जंपती जायापती च भरिमा तु ना ॥ ६५ ॥
बर्हः पुमान्परीवारः सुविदत्रं कुटुम्बकम् ।
पुत्रः सुतो[78a]दारकः स्यान्नन्दन्तो नन्दनोऽङ्गजः ॥ ६७ ॥
आत्मजस्तनयः सूनुर्दायादश्चोद्वहश्च स· ।
द्वितीय· कुलकृच्चासौ पुत्राद्यास्तु स्त्रियाममी ॥ ६८ ॥
प्राहुर्दुहितर सर्वे पुत्रका पुत्रिकापि सा ।
नन्दन्ती नन्दिनी च स्याद्वातकी च निगद्यते ॥ ६९ ॥
पुत्रोऽपि दुहिता पुत्रौ तयोस्तु तोकमन्तिमे ।
अपत्य च प्रसूति स्त्री प्रजा सततिरित्यपि ॥ ७० ॥
स्वजाते त्वौरसोरस्यौ सुताद्यौ क्षेत्रजोऽन्यजे ।
अमृते जारज कुण्डो मृते भर्त ॐ [रि] गोलकः ॥ ७१ ॥
जारजा त्वमृते पत्यौ कुण्डी भवति कन्यका ।
पारस्त्रैणः पारशव· पारस्त्रैणेय इत्यपि ।
परस्त्रीजेऽथ कानीनः कन्याया उदित· सुतः ।
स्याद्भद्रा मातृसबुद्धौ मात्रा श्लाघ्यत्वसूचने ।

---

4870 आसुरे १, पैशाच १७
4871 राक्षसो १
4873 हरणं ५
4874 कुकुन्दो २, ठंठ १
4875 °वोढार २
4876 °जानि १ रसौ
4877 °णिप्रिय १, °प्रिय १
4878 °भार्य १
4879 °भार्य १, °भार्या १
4881 जायापती २
4882 कुटुबकं ४
4885 कुलज २ कुचासौ (corrupt)

सौभागिनेयः सुभगापुत्रो दौर्भागिनेयकः ।
दुर्भगानन्दनोऽथ स्यात्कैशिन्यः केशिनीसुतः ॥ ७३ ॥
स ज्यैष्ठिनेयः कानिष्ठिनेयो ज्येष्ठाकनिष्ठयोः ।
सुतो माध्यमि[78b]नेयः स्यान्मध्यमाया अथो भवेत् ॥ ७४ ॥
पौनर्भवो दैधिषव्यः पुनर्भूसंभवः सुतः ।
पीलायाः पैल-पैलेयौ नैधेयस्तु निधेः सुतः ।
दास्या दासेर-दासेयौ कौलटेरस्तु बन्धुलः ।
भवेद्वान्धकिनेयश्च तथा कौलटिनेयवत् ।
नट्या नाटेर-नाटेयौ जाडेरोऽपि जडासुतः ।
समौ काणेय-काणेरौ शौभ्रेयः शुभ्रनन्दनः ॥ ७७ ॥
जाडारः स्याज्जडापत्यं पाण्डारः पण्डनन्दनः ।
दत्तासुतः स्याद्दात्तेयः खाञ्जेरः खञ्जिकासुतः ॥ ७८ ॥
पुत्रस्तूरसिलोम्नो यः स स्यादौरसिलोमनः ।
सांमातुरः सतीपुत्रो भाद्रमातुर इत्यपि ॥ ७९ ॥
त्यादस्त्यादायनिस्त्यस्यापत्ये तस्य तु तादवत् ।
तादायनिरथैतस्यैतदायनिवदैतदः ॥ ८० ॥
गोत्रापत्ये तु जातस्य स्याज्जातायनसंज्ञतः ।
जातासुते तु जातेयो मैत्रेयो मित्रयूद्भवः ।
औडुलोमिस्तूडुलोम्नो बाहोर्वाहविराह्वये ।
उडुलोमा[79a]बहुत्वे स्युः शरलोमास्तथेरिताः ।
वैहीनरिस्त्वपत्ये स्याद्विहीनरसमुद्भवे ।
पौत्रो नप्ता पुत्रपुत्रो दौहित्रो दुहितुः सुतः ॥ ८१ ॥

---

4886 दुहितरे १
4888 °पुत्रौ १
4889 अपत्यं १; °संतति ६
4890 °सौरस्यौ २; क्षेत्रजो १
4891 कुंडो १; गोलकः १
4896 °नेमः १; °नेयकः १
4897 °त्कौशिन्मः १
4898 °नेयः १; °नेयो १
4899 °नेयः १
4900 दैधिपवः २
4900A °पैलेयौ २ नैधेय १स्तु
4901 दासेयौ २
4902 °नेय ४ वत्
4903 नाटेयां २ जाडेरौ १ पि
4904 शौभ्रेयः १
4905 जाडारः १
4906 दात्तेयः १
4908 °मातुर ३
4909 °दायनि २
4910 तादायनि २
4911 जातायन १
4912 जातेयो २ मैत्रेयो १
4913 औडुल्योमि १; बाहोर्व्यांहठि १ (corrupt)
4914 उडुलोमा १; °लोमा १ स्तये°
4915 वैहि १ नरि १ स्त्व°
4916 नप्ता ३; दौहित्रो १

प्रणप्ता तु प्रपौत्रः स्यात्तत्पुत्रोऽस्त्री परंपरः ।
भ्रात्रीयः स्याद्भ्रातृपुत्रो भ्रातृव्योऽथ स्वसुः सुतः ॥ ८२ ॥
स्वस्रीयो भागिनेयश्च जामेयः कुतपश्च सः ।
सापत्नः स्यात्सपत्नीजः सुतः सापत्न्य इत्यपि ।
पैतृष्वसेयः स्यात्पैतृष्वस्रीयश्च पितृष्वसुः ॥ ८३ ॥
मातृष्वसेयो मातृष्वस्रीयो मातृष्वसुः सुतः ।
मातुलेयस्तु मातुल्यः श्यालेयः श्यालिकासुतः ।
जात्यन्धो जनुषान्धः स्याज्जानुषान्धिस्तु तत्सुतः ।
पुंसानुजोऽग्रजे पुंसि तस्य पौंसानुजिः सुतः ॥ ८५ ॥
आत्मनापञ्चमस्य स्यादात्मनापाञ्चमिः सुतः ।
भवेद्ग्रामणिपुत्रश्च ग्रामणीपुत्र इत्यपि ।
विना तु बाहविं सर्वेऽप्यौरसाद्या विशेष्यगाः ॥ ८६ ॥
तातस्ततः पिता वप्ता रेतोधा जनकोऽपि च ।
[79b]बीजी जनयितासौ तु भर्ती संस्कारकृद्यदि ॥ ८७ ॥
महागुरुस्तातगुरुस्तु स क्षुद्रोऽथ पितामहः ।
पितृतातोऽथास्य तातः * * * प्रपितामहः ॥ ८८ ॥
मातुर्मातामहाद्येवं स्त्रियां तु स्यात्पितामही ।
एवं मातामही च स्यात्तद्वच्च प्रपितामही ।
जनयित्री जनित्री च जनन्यम्बा प्रसूश्च सूः ।
माता सवित्री चाकाला धात्री तु पृथिवी मता ॥ ८९ ॥
पितरौ मातापितरौ मातरपितरौ जनित्वौ च ।
श्वश्रूश्वशुरौ * * * [श्वशुरौ]ताततसुतौ स्तः पितापुत्रौ ॥ ९० ॥
मातापितृभ्यां यः शून्यश्छेमण्डः स प्रकीर्तितः ।
नरौ नरश्च नारी च युवानौ युवतिर्युवा ।

---

4917 प्रपौत्रः २
4918 भ्रातृव्यो ३
4919 कुतप४ श्च
4920 सापत्य ३
4921=*AK*. 1123. °ष्वसीय २ श्च
4922 °ष्वलीयो २
4923 श्यालेयः १
4924 जनुषांधः २; °षांधि १
4925 पुंसानुजो १
4926 °पांचमिः १
4927 °णीपुत्र २
4931 महागुरुः १
4933 पितामही १
4936 चाच्छाला १; धात्रीत्वत्व्यथिवीमता (corrupt)
4938 श्वशुरौ ३; पितापुत्रौ २
4939 छेमंडा १
4940 नरौ १

भ्राता स्वसा च गदितौ भ्रातरावथ सोदरः ।
सहोदरः सगर्भ्यश्च समानोदर्य इत्यपि ॥ २१ ॥
सोदर्यः सहजश्चाथ वैमात्रेयो विमातृजः ।
स्वसा जामिश्च भगिनी भग्नी यामिर्धवस्य तु ॥ १ ॥
सा ननान्दा ननन्दा च नन्दिनी च स्त्रियास्त्वसौ ।
[80a]ज्येष्ठश्वश्रूः कुली ज्येष्ठा श्यालिका तु कनीयसी ॥ २ ॥
हाली च यन्त्रिणी केलिकुञ्चिका च निगद्यते ।
मातृष्वसा मातृभग्नी पितृभग्नी पितृष्वसा ॥ ३ ॥
भ्राता ज्येष्ठः पूर्वजः स्यादिन्यस्तत्राभियाग्रजौ ।
जघन्यजो यविष्ठः स्याद्यवीयाननुजोऽपि सः ॥ ४ ॥
कनीयांश्च कनिष्ठश्चावरजः सूनुरित्यपि ।
यमौ च यमलौ न स्त्री युगलौ जनकस्य तु ॥ ५ ॥
भ्राता पितृव्यो मातुस्तु तत्र मातुल-मामकौ ।
मातुलानी मातुली च मामिका चास्य कामिनी ॥ ६ ॥
श्यालाः स्युर्भ्रातरः पत्न्याः स्वामिनस्तु कनीयसि ।
रागारो देवरो देवा जामाता दुहितुः पतिः ॥ ७ ॥
भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम् ।
पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता तयोः ॥ ८ ॥
दौहित्री दुहितुः कन्या पौत्री नप्त्री सुतात्मजा ।
प्रजावती भ्रातृजाया सपिण्डास्तु सनाभयः ॥ ९ ॥
पितरः पितृवंश्याः[80b]स्युर्मातुर्मातामहाः कुले ।
स्वो ज्ञातिः स्वजनो बन्धुर्बान्धवश्चारिकोऽपि सः ॥ १० ॥
दायादो भागधेयोऽथ भावे ज्ञातेयमन्तिमे ।
बन्धुता तु भजे लोको जनो विट् चर्षणिः प्रजा ।

4941 भ्रातरौ १ वय
4943 सहज ६ श्चाथवैमात्रेयो १
4945 नन्दिनी ३
4946 कुली २
4947 °कुंचिका ४
4948 मातृभग्नी २
4949 °भियाग्रजौ ५
4952 यक्ष्लौ ३ [For युगलौ]
4953 पितृव्यो १; °मामकौ २
4954 मामिका ३
4956 देवा १ जामाता १
4957=*AK*. 1133. यातरः १
4958=*AK*. 1135. श्वश्रूः १ श्वशुरः १ स्तु
4959 नप्त्री २
4960 °जाया ३; सनाभयः २
4961 पितरः १; °महाः १
4963 ज्ञातेय १
4964 बंधुता १

जनकीयं जनसेदं ※ ※ ※ ※ ※ ※ ※ ※ ।
त्रिषु सार्वजनीनः स्यात्साधुः सर्वजनेषु यः ।
※ ※ ※ ※ ※ ※ ※ ※ जनता स्त्री जनव्रजे ।
भवेद्विश्वजनीनं तद्धितं विश्वजनाय यत् ।
स्यात्सार्वजनिकं सर्वजनीनं च विशेष्यवत् ।
सर्वेभ्योऽपि जनेभ्यो यद्धितं वस्तु भवेदिह ।
एवं प्रातिजनीनः स्यान्माहाजनिक इत्यपि ।
तथा पञ्चजनीनश्च सर्वीयः सार्वेवत्स्मृतः ।
त्रिषु स्वो निज आत्मीय ※ ※ ※ सौव इत्यपि ॥ ११ ॥
न स्त्री नपुंसकः क्लीबः षण्डो ना पण्ड-षण्डकौ ।
तृतीया प्रकृतिर्या स्यात्स्त्रियः प्राया दशावयः ॥ १२ ॥
शिशुत्वं शैशवं बाल्यं बालता शिशु[81a]ता स्त्रियौ ।
बालस्तु स्यान्माणवको माणवीनं तु तद्धितम् ॥ १३ ॥
माणव्यं तत्समूहेऽन्त्येऽथ भूते मासमीरितौ ।
मासीन-मास्यौ षाण्मासो भवेत्षण्मास इत्यपि ।
षाण्मासिकोऽस्त्री ※ ※ ※ वयःस्यात्तरुणो युवा ।
किशोरस्तलुनोऽथ साद्धेकटो जातयौवनः ॥ १४ ॥
भवेत्तरुणिमा पुंसि तारुण्यं यौवनेऽस्त्रियाम् ।
प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि ।
जरी जर्णो ※ ※ (यात)यामो वृद्धत्वं स्थाविरं समे ॥ १५ ॥
भवेद्दशमिता चात्र वार्द्धकं भावद्वन्द्वयोः ।
अतिवृद्धस्तु वर्षीयान्वर्षिष्ठो दशमी च सः ॥ १६ ॥
परोवरीणः स भवेद्यः परानवरांस्तथा ।
आत्मनानुभवत्येनं पुत्रपौत्रीण इत्यपि ॥ १७ ॥
परंपरीणः स परंपरानुभववान्स्वयम् ।

---

4965 जनकीयं १
4966 सार्वजनीनः १.-After lino 4966, Ms. reads: प्रतिजनादिभ्य खञिति सम् एवं प्रातिजनीनस्तर्पणो प्रजागाहचर्या-स्त्वीत्वं
4968 °जनीनं १
4971 °जनीन. १
4972 सार्वेव २
4973 सौव ५
4976 शिशुना ५
4977 माणवको २८; माणवानं १
4978 माणव्यं १
4979 °माम्यौ १
4981 °स्तलुनो १; °द्वेकटो १
4982 यौवनश्रिया
4984 समे २
4987 °वरीण. १
4988 °पौत्रीण १
4989 °परीण १

विना भावप्रत्ययान्तान्बालाद्या भेद्यलिङ्गगाः ।
पलितं जरसा शौक्ल्यं केशादौ विस्रसा जरा ॥ १८ ॥
पलितंकरणी सा स्यात्त्र्यर्थे पलितकारिणी ।
अथो[81b]पजरसं क्लीबाव्ययं स्याजरसोऽन्तिके ॥ १९ ॥
सुप्रजाः शोभनापत्यो दुरपत्यस्तु दुःप्रजाः ।
अप्रजाः प्रजया हीनः सुजम्भा चारुदन्तकः ॥ २० ॥
एवं हरितजम्भाद्याः संज्ञायां श्यावदन्भवेत् ।
श्यावदन्भोऽरोकदंस्तु नाम्न्येवारोकदन्तकः ॥ २१ ॥
उपमायामसंज्ञायां भवेच्छिखरदन्निति ।
उत्काकुच्च विकाकुत्स्यादुद्गतापेततालुकः ॥ २२ ॥
स्यात्पूर्णकाकुदः पूर्णकाकुद्यः पूर्णतालुकः ।
औपम्ये स्यादेणीपदस्तथाजपद इत्यपि ।
पूज्यभ्राता तु सुभ्राता प्रज्ञुः प्रगतजानुकः ॥ २३ ॥
संज्ञुः संहतजानुः स्यादूर्ध्वज्ञुस्तूर्ध्वजानुकः ।
सुसक्थिः स्यात्सुसक्थश्च दुःसक्थोऽसक्थ इत्यपि ॥ २४ ॥
दीर्घसक्थो गौरसक्थो यस्य दीर्घादि सक्थि चेत् ।
दुःसक्था च सुसक्था स्त्री दीर्घसक्थीति दिक्स्मृता ॥ २५ ॥
द्विमूर्धः स्यात्त्रिमूर्धश्च द्विमूर्धी स्त्री त्रि[82a]मूर्ध्यपि ।
अन्तर्लोमो वहिर्लोमोऽथान्तर्लोमा स्त्रियां भवेत् ।
संज्ञायां द्रुणसोऽथ स्यादुन्नसस्तुङ्गनासिकः ।
प्रणसः प्रनसश्च स्यात्प्रकृष्टा यस्य नासिका ॥ २० ॥
खुरणाः स्यात्खुरणसो नःक्षुद्रः क्षुद्रनासिकः ।
खरणाः स्यात्खरणसः शितिनाः श्यामनासिकः ॥ २८ ॥
※ ※ [विग्र्यौ]विग्रोऽपि च विखुर्यः स्याद्विगतनासिकः ।

---

4991=*AK.* 1155. पलितं १; जरा २
4993 °जरस १
4995 अप्रजाः १; सुजंभा १
4997 श्यावदंभो २; °दंतक. २
5000 °काकु २ द्यः
5001 °जपद १
5002 सुभ्राता २ प्रज्ञुः १
5003 संज्ञु. २ सहतजानु' २; °जानुक. २
5004 °सक्थ २ थ दु.सक्थो १ ऽसक्थ १
5005 दीर्घसक्थो १ गौरसक्थी १
5006 दु·सक्था १ च सुसक्था १; °सक्थी १ दि
5007 °त्रिमूर्द्ध १ श्च द्विमूर्द्धी १ स्त्री त्रिमूर्ध्य १ पि
5008 अंतर्लोमो १ वहिर्लोमो १ थान्तर्लोमा १
5009 द्रुणसो १; °न्नस १ स्तुंग°
5010 प्रनस २ श्च
5011 °णसो २
5012 °णस. २ शितिनाः २
5013 विग्रु ३

अवटीटोऽवनाटश्चावभ्रटो नतनासिके ॥ २९ ॥
स्यादामुष्यायणोऽमुष्यपुत्रः प्रख्याततातकः ।
आमुष्यपुत्रिका भावे स्यामुष्यकुलिका तथा ।
पितृभोगाय स हितः पितृभोगीण उच्यते ॥ ३० ॥
एवं स्यान्मातृभोगीणोऽथो यः स्यात्पितृसंनिभः ।
स मनोजवसः प्रोक्तः पितृधर्मा मनोजवः ॥ ३१ ॥
असौ पितृसधर्मापि स्यादथास्मै हितो हि यः ।
स स्यादाचार्यभोगीनो दुर्बलस्तु कृशस्तनुः ॥ ३२ ॥
क्षामः क्षीणोऽमांसलश्च तलिनच्छात-पेलवाः ।
निर्दिग्धः[82b]स्यादुपचितो बलवान्मांसलोंऽसलः ॥ ३३ ॥
पार्ष्णिलः पार्ष्णिसंयुक्तो धमनीलः शिरायुतः ।
बल्लो बलवानुक्तो ललाट्लो ललाटवान् ।
तुन्दिलस्तुन्दिकस्तुन्दिस्तुन्दवांश्च पिचण्डिलः ।
पिचण्डवान्पिचण्डी च बृहत्कुक्षिः पिचण्डिकः ॥ ३४ ॥
उदर्युदरिलोऽपि स्यात्तुण्डिभो वृद्धनाभिकः ।
प्रौण्डश्च बलिभस्तु स्याद्वलिनोऽथ बलासहः ॥ ३५ ॥
बलली भ्रातृयुक्तस्तु भवेद्भ्रातृवलाभिधः ।
पुत्रयुक्तः पुत्रवलो दन्तुरस्तूच्चदन्तकः ॥ ३६ ॥
प्रलम्बाण्डो मुष्करः स्यादथ बाल्यसमुद्भृतः ।
भवेदण्डीर आण्डीरः पौगण्डो विकलाङ्गकः ॥ ३७ ॥
पोगण्डश्चाथ कुब्जः स्यान्निवक्रो गडुलोऽपि सः ।
कुणिः कूणिश्च कुकरो वन्धुरस्तु छिन्नहस्तकः ॥ ३८ ॥
श्रोणः पङ्गुरथो खञ्जः खोटः खोडोऽथ पर्पिकः ।
पर्पचारी पर्पिकी स्त्री पर्पः पीठे हि तद्गतेः ॥ ३९ ॥

5014 °भ्रटो ३
5015 °ष्यायणो १
5016 °पुत्रिका १
5017 °भोगीण १
5018 °भोगीणो १
5020 °सधर्मा ४
5021 °भोगीनो १
5022 °पेलवा· ५
5023 °लोऽमल. ५
5025 बलवा २
5028 °रिलो ११ पि
5029 प्रौंड ३, °द्वलिनो २
5030 बल्ला २ भ्रातृ°; °वला १ भिधः
5031 पुत्रवलो २; °दंत २ त.
5032 मुष्करः २
5033 आण्डीरः २
5034 पोगंड ३; गडुलो ३
5035 कुकरो ३ बंधु १ स्तु
5036 पंगु २ रथो; खोडो ३ थ पर्पिक. १
5037 पर्पः १

खरवाटः खलतिश्चेन्द्रलुप्तिको वभ्रुरित्यपि ।
शिपिविष्टश्च का[83a]णस्तु सिन्नः कनक(न) एकदृक् ॥ ४० ॥
स्युः क्लिन्नाक्षे चुल्ल-पिल्ल-पिच्छाः क्लिन्नेऽक्षिण चाप्यमी ।
नष्टलिङ्गोऽयोगताक्षः पृश्निस्त्वल्पशरीरकः ।
निखर्वः खट्टः खर्वः खर्वशाखश्च वामनः ॥ ४१ ॥
मुण्डस्तु मुण्डितोऽथ स्युः केशि-केशव-केशिकाः ।
अकर्ण एडो बधिरो दुश्चर्मा तु ह्निनमकः ॥ ४२ ॥
षण्डश्च शिपिविष्टोऽथ मूको वाचा विवर्जितः ।
सुभजःप्रमुखाः सर्वे विना षर्पं विशेष्यगाः ॥ ४३ ॥
पिण्डोऽस्त्री विग्रहः कायः सरः (संचरः) स्कन्धपञ्जरः (रौ) ।
असुर्धनो मूघनोऽङ्गमिन्द्रियायतनं पुरम् ॥ ४४ ॥
करणं मूर्तिमत्क्षेत्रं गात्रं संहननं वपुः ।
श्रोत्रं वर्पाङ्गुवेरं च पुद्गलं च कलेवरम् ॥ ४५ ॥
मूर्तिस्तनूस्तनुश्च स्त्री कुडिः सान्तं तनुर्न ना ।
शरीर-देहे अस्त्रीके तत्तु शस्तं वपुष्मन् ॥ ४६ ॥
देहार्धमर्द्धदेहं च देहादेः स्यात्समेंऽशके ।
अङ्गं प्रतीकोऽवयवोऽपघनोऽस्यैकदेशकः ।
प्राणस्थानं मर्म चान्ते पीडनाद्यत्र रुग्भवेत् ।
अङ्घ्रि[83b]रंह्रिः क्रमः पादः क्रमणश्चलनश्च पद् ॥ ४१ ॥
पदमस्त्री च चरणो गोहिरं मूलमस्य च ।
पादाग्रं प्रपदं क्षिप्रं त्वङ्गुष्ठाङ्गुलिमध्यगम् ॥ ४८ ॥
मध्ये पादतलस्याहुरमितोमध्यमाङ्गुलि ।
तलहृस्क्षिप्रतस्तूर्ध्वं द्व्यङ्गुले कूर्चमस्त्रियाम् ॥ ४९ ॥
अङ्घ्रिस्कन्धः कूर्चशिरो द्वंद्वे तु घुटिको घुटः ।
घुण्टिकश्चास्त्रियां गुल्फो निस्तोदः पादशीर्षकः ।
खुरकाप्रपदौ पार्ष्णिस्त्वधस्ताद्घुटयोर्द्वयोः ॥ ५१ ॥

5039 शिपिविष्ट ५; एकदृक् ४
5041 °गताक्षः ३; °रक. २
5042 वामनः ५
5043 मुंडितो २
5044 बधिरो ३
5045 शिपिविष्टो ४ ष गृध्रे १
5052 अस्त्रीके २५; वपुष्मं १
5055 मर्म २
5057 चरणो ९ गोहिरं १
5058 प्रपदं २ क्षिप्रं १
5060 तलहृ १ क्षिप्र°; कूर्चं १
5061 कूर्चशिरो २
5063 प्रस्तौ ८ पार्ष्णि १ स्कन्धः°

पिचण्डिका पिण्डिका स्यादिन्द्रवस्तिस्तदन्तरम् ।
प्रतिजङ्घा त्वग्रजङ्घा जङ्घा तु प्रसृता भवेत् ॥ ५२ ॥
टङ्के नलकिनी टङ्गो अष्ठीवज्जानु चास्त्रियौ ।
नलकीलश्चोरुपर्व पश्चाद्भागोऽस्य मन्दिरः ॥ १५३ ॥
अग्रिमस्तु कपोल्यूर्वङ्क्षणं सक्थिचान्तिमे ।
मृगसक्थं पूर्वसक्थं * * * * तु पूर्वकम् ॥ ५४ ॥
तथा फलकसक्थं स्यादौपम्ये स्तम्भसक्थवत् ।
ऊर्वोरष्ठीवतोर्द्वन्द्वे स्यादूर्वष्ठीवमन्तिगे ॥ ५५ ॥
ऊरुसं[84a]धिर्वङ्क्षणो ना नाभीलं स वरस्त्रियाः ।
विटपोऽस्त्री महावीज्यं मुष्कवङ्क्षणमध्यगम् ॥ ५६ ॥
अण्डकः पेलकः पेलमस्त्रियामण्डकोषवत् ।
मुष्काण्ड-वृषणाः पायुः स्याद्गुदोऽपानमस्त्रियाम् ।
पेलमण्डं गुदस्त्वस्त्री पायुः पुं पुंसि विण्मुखम् ॥ ५७ ॥
अधोमर्म शकृद्द्वारं त्रिवलीक चुलिश्च्युतिः ।
शृथुः क्लीबे त्वपानं स्यात्गुतमाधारचक्रकम् ॥ ५८ ॥
शिश्नमस्त्री मेहनं स्याच्छेपं शेवं च शेफवत् ।
पुंश्चिह्न-शेफ-शेपांसि लिङ्गं तद्वच्च साधनम् ॥ ५९ ॥
सारध्वजो मेढ्रमस्त्री मणिस्त्वस्याग्रमुच्यते ।
सावनी तदधःसूत्रं योनिस्तु न नपुंसके ॥ ६० ॥
च्युतिर्बुलिः कामरूपी मर्कटी च स्त्रियामिमे ।
कामगेह स्त्रीकरणं वराङ्गं शौक-धेनुके ॥ ६१ ॥
कर्कटोऽपत्यमार्गश्च जघुनी भगमस्त्रियाम् ।
स्त्रीपुंसयोस्तु करणे गुह्यं प्रजननं च तत् ॥ ६२ ॥

---

5064 °वस्ति १
5065 त्वग्रजंघा २
5066 मलाकिनी टंगो ४ —After चा, Ms. read मृगस्थैतत्.
5067 °पर्वं ४
5068 कपोल्यूनः स्त्रीपुंसयोर्वभते स्यात्सक्थि ३ नान्तिमे (Corrupt)
5069 पूर्वसक्थं १
5071 °द्वेष्टीव १
5072 °र्वक्षणो ३ ना नाभीलं १
5073 °वीर्य्यं २
5075 मुष्क १ °ऽवृषणा ५, इुदुद for स्याद्गु-दोपा
5076 °र्त्वस्त्री १
5078 °चक्रकं १२
5081 °मस्त्री १३ मणी १ स्त्व°
5082 सावनी १
5085 भगमस्त्रियां ४

उपस्थोऽथ कटिप्रोथः प्रोह-स्फिजौ स्त्रियौ युतम् ।
क्लीबे स्फिगं तदूर्ध्वं तु[84b]कटीक-तरुणे उभे ॥ ६३ ॥

पृष्ठवंशं ह्युभयतो यौ संधी कटिपार्श्वयोः ।
जघनस्य बहिर्भागे न स्त्री यौते ककुंदरे ॥ ६४ ॥

रताकुके कूपकौ च द्वयोः श्रोणिः कटिः स्त्रियाम् ।
ककुद्मती त्रिकस्थानं कलत्रं रसनापदम् ॥ ६५ ॥

कटीर-भसदी श्रोणिफलकं च फटोऽप्यथो ।
पश्चान्नितम्ब आरोहः स्त्रीकट्या जघनं पुरः ।
पुंसि कोष्ठोऽन्तराधिः स्यात्पृष्ठवंशाधरे त्रिकम् ।
नाभिर्द्वयोः कुरुस्तुण्डिस्तुन्दकूपी ततस्त्वधः ।
मूत्राशयो द्वयोर्वस्तिस्तया मूत्रपुटं भवेत् ॥ ६८ ॥

रोमावली रोमलता शिखरिण्युदरं पुनः ।
उदलं जाठरं तुन्दं कुक्षि-कुक्षौ च गर्भकः ।
पिचण्डं जठरो न स्त्री तुन्दिः स्यात्तत्र च स्त्रियाम् ।
क्रूपीदं कालखण्डं तु कालखञ्जं च कालकम् ।
यकृत्कालेयकमथ तिलकं क्लोम दक्षिणे ॥ ७० ॥

रक्तफेनोद्भवो वामे पुप्फुसोऽथान्त्रमान्त्रवत् ।
पुरीतत् स्थविरान्त्रं तु वनिष्ठुः स्यात्त्रिहा पुमान् ॥ ७१ ॥
[85a]ललाटकण्ठजठरस्थिता रेखा वलिर्द्वयोः ।
स्तनौ कुचौ कुचौ वक्षोरुहौ तौ च पयोधरौ ।
तदधः स्तनमूलं स्यादूर्ध्वं तु स्तनरोहितम् ॥ ७२ ॥

स्तनवृन्तं पिप्पलकं चूचुकोऽस्त्री च नर्मठम् ।
कुचाग्रकमथ क्रोडो न पुंसि स्याद्भुजान्तरम् ॥ ७३ ॥
वत्सं वक्ष उरः क्लीबे हृदयस्थानमित्यपि ।

---

5087 उपस्थो ३
5093 चक्टो १०
5094 आरोह २
5095 °तराधिरः, त्रिकं ११
5096 °कूपी ४
5097 मूत्रपुटं २
5098 °रिण्यु १ दरं
5100 पिंडं च for पिचण्डं
5102 कालेयक ५; क्लोम २
5103 पुप्फुसो १
5104 पुरीतत् ३, वनिष्ठुः १
5106 पयोधरौ ५
5107 स्तनमूलं १; °रोहितं १
5108 चूचुकं ४ स्त्री
5109 कुचाग्रक १
5110 °स्थान २६

विशेष्यवत्प्रत्युरसं यद्भवेदुरसि स्थितम् ।
हृदयं हृत्सत्त्वधाम स्तनोरःकोष्ठमध्यगम् ॥ ७४ ॥
रीढकः पृष्ठवंशः स्यात्पृष्ठं तु चरमं तनोः ।
पूर्वभाग उपस्थोऽङ्कः क्रोड उत्सङ्ग इत्यपि ॥ ७५ ॥
स्कन्धो भुजशिरोंऽसोऽस्त्री संधी तस्यैव जत्रुणी ।
बाहो बाहु-भुजे द्वंद्वे दोषा स्त्री दोस्तु तत्स्त्रियाम् ॥ ७६ ॥
प्रवेष्टोऽप्यथ दोर्मूलं खण्डिको भुजकोटरः ।
अभ्युपा(?)च द्वयोः कक्षा पार्श्वमत्री तयोरधः ॥ ७७ ॥
कफोणिश्च कपोणिश्च कफणिर्युजि कूर्परः ।
अरत्निपृष्ठं बाहूय(?)बाहुसंधिररत्निकः ॥ ७८ ॥
प्रगण्डः कूर्परांसान्त [85b] उपबाहुश्च संमतः ।
कलाचिका प्रकोष्ठोऽधोमणिबन्धावधिः स्मृतः ॥ ७९ ॥
करः कुलिः पालन-पञ्चशाख-
भुजादलाः पाणि शयौ शमश्च ।
हस्तोऽस्त्रियामस्य पुनर्मणिः स्या-
दादिस्तथासौ मणिबन्ध उक्तः ॥ ८० ॥
मणिबन्धादाकनिष्ठं करस्य करभो बहिः ।
हस्तपुच्छं कुल्युप च शकर्यङ्गुलिरङ्गुरिः ॥ ८१ ॥
करशाखाथाङ्गुलिभ्यो निर्गते स्यान्निरङ्गुलम् ।
प्रमाणे द्व्यङ्गुलादि स्यात्त्रिरङ्गुलमथास्त्रिषु ।
अस्त्री स्यादङ्गुलोऽङ्गुष्ठस्तर्जनी तु प्रदेशिनी ।
प्रदेशनी मध्यमा तु ज्येष्ठा मध्या च सा भवेत् ।
अनामिका तु सावित्री कनिष्ठा स्यात्कनीनिका ॥ ८४ ॥
पुनर्भवः कररुहः करकण्टः पुनर्नवः ।
करशूको महाराजो भवेत्कामाङ्कुशोऽपि सः ॥ ८५ ॥

5111 प्रत्युरस १
5112 °धाम ३; कोष्ट
5113 दढीकः for रीढक , °वंश २ स्यात्पृष्ठं १ तु
5114 उत्संग ५
5115 °रोंऽसो ३; जत्रुणी १
5117 प्रवेष्टो ६; खंडको for खण्डिको
5118 कक्षा ५
5120 स्वरत्निपृष्ठं ५, °त्निक १
5121 उपबाहु २
5122 प्रकोष्ठे २
5126 °बन्ध १
5127 A K l 1235
5129 निरंगुलं १
5130 °लादि १
5132 मध्या ३
5133 साविन्री २; कनीनिका २

नखोऽस्त्री नखरी त्रय्यां नख्यं त्रिपु नखोद्भवम् ।
प्रादेशश्च प्रदेशश्च तर्जन्या सह विस्तृते ॥ ८६ ॥
अङ्गुष्ठे तालशो कर्णो मध्य[86a]मानामिकायुते ।
सकनिष्ठे द्वयोः किष्कुवितस्तिर्दीष्टिररिफर्फटी । (corrupt)
※ ※ ※ ※ ※ ※ ※ ※ ※ ※ कोपित्यपि । (corrupt)
॥ प्रसारिताङ्गुलौ पाणौ प्रतलः स्याचलः पुमान् ।
तालः प्रहस्तश्चपटश्चपेटायुजि तालिका ॥ ८८ ॥
अर्द्धचन्द्रं कर्करेटं विदुरङ्गुलितोरणम् ।
द्वौ संहतौ सिंहतलौ स्तः संहततलौ करौ ।
प्रतलौ सुचुटी मुष्टिर्द्वयोः संग्राह-मुस्तुकौ ॥ ८९ ॥
संपीडिताङ्गुलौ पाणौ खटकस्त्वर्द्धमुष्टिकः ।
प्रसृतिः प्रसृतः पुंसि पाणौ संकुचिताङ्गुलौ ॥ ९० ॥
प्रसृते सद्रवे द्वंद्वे गण्डूपश्चुलुकश्चुलुः ।
प्रसृताभ्यां युताभ्यां स्यादञ्जलिर्नरलिङ्गकः ॥ ९१ ॥
प्रकोष्ठे विस्तृतकरे हस्तो मुष्टया तु बद्धया ।
सरत्निर्युज्यरत्निश्च निःकनिष्ठेन मुष्टिना ॥ ९२ ॥
एवं वत्तत्प्रमाणे स्युर्वितस्त्याद्या विशेष्यगाः ।
द्विसमादिप्रमाणेऽन्यवचावद्वयसं पुनः ॥ ९३ ॥
तावन्मात्रं तथा स्वार्थे प्रमाणपरिमाण[86b]तः ।
संख्यायाश्चापि सदेहे शयमात्रं विशेष्यवत् ॥ ९४ ॥
दिष्टिमात्रं प्रस्थमात्रं पद्ममात्रमितीरयेत् ।
ऊर्ध्वविस्तृतदोःपाणेर्नृमाने पौरुषं त्रिपु ॥ ९५ ॥
पुरुषद्वयसं च स्यादस्मिन्पुरुषदघ्नवत् ।
स्याद्द्वादशाङ्गुलं छायामानं पौरुषमत्र च ॥ ९६ ॥

---

5137 प्रदेताश्च २
5188 ताल १ शो कर्णो १
5140 कोपि १ त्यपि
5142 तालिका ७
5145 प्रतलो
5146 खटक १ स्त्वर्ध°
5147 प्रसृत ३
5148 °श्चलु॰ ३
5149 °दंजलि १
5150 हस्तो १
5152 वितस्त्या १
5153 द्विसमादि १; °द्वयसं १
5154 तावन्मात्रं १
5156 प्रस्थमात्रे १ पंचमात्र १
5158 °दघ्न ३ वत्
5159 पौरुष १

हास्तिनं हस्तिदघ्नं च हस्तिद्वयसमित्यपि ।
हस्तिमाने द्विपुरुषं द्विहस्ति नवहस्ति च ॥ ९७ ॥
स्त्रियां द्विपुरुषी गङ्गा तथा द्विपुरुषापि सा ।
स्यादूरुद्वयसी चोरुदघ्नी स्यादूर्ध्वमानके ॥ ९८ ॥
ऊरुमात्रीत्यादि पुनर्माने साधारणे भवेत् ।
तिर्यग्बाह्वोः प्रसृतयोरन्तरे व्याम आदिमे ॥ ९९ ॥
न्यग्रोधकश्च व्यायामस्त्रिषु मानार्थका अमी ।
कण्ठो गलो निगरणः फोडाग्रो धमनी धरः ।
नालोऽथ तदधोवर्ती मणिः काकलको मतः ॥ २०० ॥
कंधरा धमनिर्ग्रीवा शिरोधिः स्त्री शिरोधरा ।
अ ॐ वाजे त्वलंकारे ग्रैवं ग्रैवेयमन्यवत् ।
कम्बुग्री[87a]वा त्रिरेखा सा स्त्री तु घाटा कृकाटिका ॥ १ ॥
अवटुर्मिथुनेऽथ स्याच्छिरोधेरन्तरं कृकः ।
कृकपार्श्वौ वीतनौ स्तः नीले प्राकंधरा-शिरे ॥ २ ॥
पश्चान्मन्ये कलम्व्यौ च व्युपो(?) स्त्रि मुखमाननम् ।
तुन्नमास्यं च वदनं लपनं वक्त्रमस्त्रियाम् ।
श्म च तुण्डं तत्तु कर्णालंकारेण मनोहरम् ।
स्यात्कार्णवेष्टिकं भालोऽव्यलीकं निटिलालिके ।
ललाटं स्त्री तु गोधिः स्यात्रिपताकं त्रिरेखकम् ।
कर्णः शब्दग्रहः श्रुत्ता स्त्री श्रुतिः श्रवणोऽस्त्रियाम् ॥ ५ ॥
शब्दाधिष्ठान-पैशुन्य-श्रवः-श्रोत्र-महारवम् ।
पालिस्तु कर्णलतिका वेष्टनं कर्णशष्कुली ।
कर्णमूलं कर्णजाहं यन्मूले पादजाहकम् ॥ ६ ॥
शङ्खोऽस्त्री स्याद्भालकर्णमध्यगः स्त्री तु दृग्दशा ।
दृष्टिश्च न स्त्रियां नेत्रं नयनं चक्षुरक्षिणी ॥ ७ ॥

---

5160 °द्वयस २
5164 ऊरुमात्री १
5166 व्यायाम ३
5167 °धर° ६
5168 काकलके १
5171 कृकाटिका १
5173 कृकपार्श्वे वीतनौ २; नीले २
5174 कलम्व्यौ २
5176 तुण्डं १०
5177 वेष्टिकं १
5178 गोधि ५ स्यात्रिपताकं १
5179 Ms. reads °ग्रहः स्त्री श्रुत्ता श्रुतिः
5181 °लतिका २, °शष्कुली २
5182 °जाहं २

ईक्षणं लोचनं देहदीपोऽम्बक-विलोचने ।
दर्शनं तारकं ※ ※ [तार]-तारके च कनीनिका ॥ ८ ॥
अपाङ्गौ नेत्रयोरन्तौ द्वाविमौ नरलि[87b]ङ्गकौ ।
वामं तु नयनं सौम्यं माननीयं तु दक्षिणम् ।
क्रूरे त्वस्निग्धदृष्टिः स्त्री तथानक्षि नपुंसके ॥ ९ ॥
ये लोहितादिनेत्रास्ते लोहिताक्षादयस्त्रिषु ।
भ्रुवौ स्त्रियौ दृगूर्ध्वे स्तो द्वंद्वे त्वक्षिभ्रुवं तयोः ॥ १० ॥
भ्रुवोर्मध्यं कूर्चमस्त्री कूर्पं चावर्तके पुनः ।
ऊर्णा भ्रुवोर्मध्यगते पक्ष्मा स्त्री नेत्ररोमणि ॥ ११ ॥
मेघवत्पक्ष्मलस्त्वग्रघुड्नासिका तु विकूणिका ।
कुल्मा गन्धवहा घोणा गन्धज्ञा घ्रा च शिङ्खिनी ॥ १२ ॥
नासा नर्कुटकं नक्रं घ्राणं न स्त्री नासिक्यमन्यवत् ।
चिकिनं चिपिटं चिक्क निविडं निबिरीसवत् ।
अवटीटावनाटावभ्रटान्यपि नतेन सः ।
ओष्ठाधरौ तु रदनच्छदौ दशनवाससी ॥ १३ ॥
ओष्ठप्रान्तः सृक्क सृक्कि सृक्कु क्लीबानि सृक्किणी ।
पुरस्तात्त्वसिकं तस्याप्यधस्ताच्चिबुकं भवेत् ॥ १४ ॥
सृक्कणः स्यात्परो गल्लः कपोलो गल्लतः परः ।
कपोलतः परौ गण्डौ हनुह[88a]न्वौ द्वयोस्ततः ॥ १५ ॥
मुखालंकरणौ दन्तौ दंशः खादन-मल्लकौ ।
खुरः सीरी द्विजो जृम्भ-दशनौ न स्त्रियौ रदः ॥ १६ ॥
रदनो रागचूर्णश्च हालः स्याद्धुचकं तथा ।
दन्तूलो दन्तवान्राजदन्तौ मध्यगताविमौ ।
दाढा दंष्ट्राथ मिथुने फाकुः स्याद्रसना न ना ॥ १७ ॥
रसा रसज्ञा रसना जिह्वा लोला च सा मता ।
लम्बिका घण्टिका कण्ठशुण्डिका च सुधास्रवा ॥ १८ ॥

5186 तारकं १४
5188 सौम्यं १ माननीयं १
5189 °नशि २
5190 °शाद्य १
5191 भ्रुवौ २; °क्षिभ्रुवं १
5192 क्रूरे २
5193 ऊर्णा १; पक्ष्मा १
5194 पक्ष्मल १
5196 घ्राणं १२; नासिक्य १
5200 सृक्किणी ४
5201 °स्तात्सक्‍
5202 गल्ल १ कपोलो १
5203 गण्डौ १ हनुहन्वौ २
5206 धूर्णश्च १; °हुचकं १४
5208 दंष्ट्रा २ थ
5209 रसना
5210 सुधास्रवा ५

काकुदन्तालु युग्मे तु मौलिर्मस्तकमस्त्रियाम् ।
मस्तिकं चोत्तमाङ्गं कं वराङ्ग-शिरसी शिरः ॥ १९ ॥
शीर्षं स्यात्करणत्राणं मुण्डं मूर्द्धा कमव्ययम् ।
चिकुरश्चिहुरः केशो मूर्द्धजो वृजिनोऽङ्गजः ॥ २० ॥
अस्रो हलो वेल्लितास्रस्तीर्थवाप(क)श्च कुन्तलः ।
शिरोरुहः शिरसिजः कचो वालस्तु न स्त्रियाम् ॥ २१ ॥
तद्वृन्दे कैशिकं कैश्यमथ केशादितः परः ।
पाशः पक्षश्च हस्तश्च कलापो भार उच्चयः ॥ २२ ॥
रचना चेति केशानां भूयस्त्वप्रतिपादकाः ।
अलको[88b]ऽस्त्री कर्कराल: खंखरश्चूर्णकुन्तलः ॥ २३ ॥
भाले त्वस्त्री भ्रमरकः कुरलो भ्रमरालकः ।
कबरी केशवेषोऽथ धम्मिल्लः संयताः कचाः ।
वेणिः प्रवेणिः शीर्षण्य-शिरस्यौ विशदे कचे ।
केशेषु वर्त्म सीमन्तः शिखा तु स्याच्छिखाण्डिका ॥ २५ ॥
चूडा केशी केशपाशी जुटकं च शिखण्डिका ।
बालानां काकपक्षोऽसौ शिखण्डक-शिखाण्डकौ ॥ २६ ॥
.....................स्ता जटा च सटा द्वयोः ।
जटालस्तद्युतः क्षेपे त्रिपु जूटः पुनर्नरि ।
जटुकं कवरोऽङ्कीवे कक्षागुह्यकठा (चा?) जटाः ॥ २७ ॥
तनूरुहं लोम रोम न स्त्री तु श्मश्रु दाढिका ।
दंष्ट्रिका मासुरी नव्या कूर्चोऽस्त्री चिबुकस्थिते ॥ २८ ॥
लोमस्वङ्कुरितेषु द्वौ हृषिता हृष्ट इत्यपि ।
लोमशो रोमशो रोमसंयुक्तः पद्य भेयवत् ।

---

5211 °द ताल २
5213 मूर्द्धा ७
5216 वाल १५ स्तु
5217 कैश्य २
5220 °कुंतलः ४
5221 °रालकः ३
5222 °वोष २ धम्मिल्ल- १
5224 सीमंतः १
5225 शिखंडिका ७
5226 °शिखाण्डकौ ३
5227 For the prior half, Ms. reads: जटीः कै पाठीप्रतीति (corrupt)
5228 जटाल १ स्त?
5229 कवरो २
5231 मासुरी १: कूर्चो १ र्थो
5232 हृष्ट २
5233 °संयुक्तः ३

रसासृङ्मांस-मेदोऽस्थि-मज्ज-शुक्राणि धातवः ।
सप्त वा दश चैकेषां रोमत्वक्स्ना[89a]युभिः सह ॥ २९ ॥
रस आहारजन्माग्निसंभवः षड्रसासवः ।
आत्रेयोऽसृक्करो धातुर्धनमूलो(ल)महापरः ॥ ३० ॥
रुधिरे रक्त-कीलाल-तेजोज-रसजानि च ।
आत्मजं देहजं तिग्ममस्रं लोहितमस्त्रियाम् ॥ ३१ ॥
मांसकृच्छोणितमसृग्याशिष्टं प्राणदं तथा ।
आसुरं क्षतजन्माथ क्रव्यं पललमस्रजम् ॥ ३२ ॥
पिशितं तरसं कीनं मेदस्कृत्काश्यपं तथा ।
जरूथमुद्रसं तेजोभवं जङ्गलमस्त्रियाम् ॥ ३३ ॥
पलमांसामिषाण्यस्त्री तन्नादौ पिशिमामिषम्(?) ।
त्रिषु वल्लूरमुत्तसं शष्कुली शुष्कमामिषम् ॥ ३४ ॥
अपि सा मिथुने वृक्का-वुक्कानौ बुक्कमग्रिमे ।
सुरसं चाथ तद्भक्ष्यः पेश्यो नारीभगादिजाः ॥ ३५ ॥
दन्तमांसे तु वेला स्त्री पूयो दूष्यं नपुंसकम् ।
वसा शुद्धामिषस्नेहोऽथान्तिमे मेद-मेदसी ॥ ३६ ॥
गौतमं मांसजं तेजःसंभवं च वपा च सा ।
मस्तिष्कोऽस्त्री शिरःस्नेहो मस्तु[89b]लुङ्गक इत्यपि ॥ ३७ ॥
गोर्द-गोदे अस्त्रि कुल्यं भारद्वाजं च मज्जकृत् ।
मांसपित्तं च मेदोजं तेजोजं चास्थिसम्भवम् ॥ ३८ ॥
कि(की)कसं श्वप्रियं सारः कर्करस्तरुणं तु तत् ।
ग्रीवाकर्णघ्राणनेत्रकोशजं वलयं पुनः ॥ ३९ ॥
स्यात्पर्शुका पृष्ठपार्ष्णिपछलकानिबन्धजम् ।
नितम्बताडुशङ्खांसशिरोजान्वंसगण्डजे ॥ ४० ॥

---

5234 Cf. Vagbhata. °ग १ मेदो १ स्थि १ मज्ज १ शुक्राणि १
5236 For lines 5236–7 cf. Abh. ci. 3, 284.
5237 महापर १
5241 °जन्मा १७ ४
5244 °मिषाण्य १५ स्त्री
5245 शष्कुली २
5247 पेश्यो १
5248 दूष्ये २
5249 वसा १; °स्नेहो २
5250 च सा ७
5252 °गोदे ५
5253 चास्थि स्तु च
5254 कर्करः १२ तरुणे १
5255 वलयं १

कपालोऽस्त्री कर्परोऽस्त्रि निर्मूटं दन्तसंभवः ।
रुचकं नलकं त्वन्यच्छङ्खोऽस्थ्यस्थिल्लाटजः ।
शरीरास्थि करङ्कः स्यात्कङ्कालोऽस्थ्यस्थिपञ्जरः ।
भगालं नृकपाले स्यात्खट्वाङ्गं नरपञ्जरम् ।
शिरोस्थनि करोटिः स्त्री पृष्ठास्थि तु कशेरुका ॥ ४२ ॥
कशारुका न ना पार्श्वास्थनि स्त्री वङ्क्रि-पर्शुके ।
पार्श्वं तु पर्शुकावृन्दे पृष्ठग्रन्थौ गडुः पुमान् ॥ ४३ ॥
न क्लीबे मज्ज-मज्जे स्तः शुक्रकृत्कौशिकोऽस्थिजः ।
अस्थि स्नेहोऽप्यथो शुक्र-रेत-रेतांसि मज्जजम् ॥ ४४ ॥
इ[90a]न्द्रियं बीजमानन्दप्रभवं किट्टवर्जितम् ।
प्रधानं पौरुषं पुंस्त्वं गर्भकृद्धातुरित्यपि ॥ ४५ ॥
बलं वीर्या न ना वध्रं त्वक्त्वचासृग्धरा शिपिः ।
कृत्तिरुछविरुछादनी च त्वचो ना चर्म चाजिनम् ॥ ४६ ॥
स्पर्शनं चाथ तद्भेदा भासिनी लोहिनी सिता ।
ताम्रा च वेदिनी रोहिण्यपि मांसधरा तथा ॥ ४७ ॥
लसीका तु त्वग्रसोऽथ धमनिः स्त्री शिरा सिरा ।
नाडी नाभिगृहा स्नायुः स्त्री स्नसा वस्नसापि सा ॥ ४८ ॥
कण्डरा*[तु]महास्नायुः किट्टं तु मलमस्त्रियाम् ।
कफो रसमलः श्लेष्मा बलासः खटकूटवत् ॥ ४९ ॥
शिङ्घाणः स्नेहजन्माथ स्थानभेदात्स पञ्चधा ।
रसनास्थो बोधकोऽसौ त्रिकस्थस्त्ववलम्बकः ॥ ५१ ॥
शिरःस्थस्तर्पकोऽथामाशयस्थः क्लेदकः कफः ।
श्लेषकः संधिसंस्थानः श्लेष्मलः श्लेष्मणः कफी ।
त्रिष्वथासृक्मलः पित्तमाग्नेयं पल्लज्वरः ॥ ५२ ॥

5258 निर्मूटं ३
5259 रुचकं १ नलकं १
5260 °पंजरः ३
5261 भगालं १; खट्वांगं १; °पंजरं १
5262 करोटि १
5263 °पर्शुके १
5264 पार्श्वं १; गडुः १
5266 °ह्रोप्य ६ थो
5267 °वर्जितम् १
5269 वीर्या १५
5271 स्पर्शनं ११; भासिनी १ लोहिनी १ सिता १
5272 ताम्रा १ च वेदिनी १ रोहिण्य १ पि मांसधरा १
5273 लसीका १
5275 °स्नायुः २; मल २
5278 बोधको १
5279 °स्तर्पको १
5280 श्लेषकः १; कफि २
5281 °ज्वरः ४

पाचकं पक्तृ पि[90b]त्तं स्यात्पक्वामाशयमध्यगम् ।
हृद्गतं साधकं तत्त्वामाशयस्थापि रञ्जकम् ॥ ५३ ॥
दृक्स्थमालोचकं त्वक्स्थं भ्राजकं ग्रहणी पुनः ।
पाचकस्याश्रयः सैव कला पित्तधरा स्मृता ॥ ५४ ॥
पक्वाशयादधो नाभेरूर्ध्वं त्वाहृत्स्थलं भवेत् ।
आमाशयो जरायुस्तु पुंसि गर्भाशयोऽपरा ॥ ५५ ॥
उल्वमस्त्री च कललं शुक्रार्तवघनेऽस्त्रियाम् ।
मूत्रं बस्तिमलं किट्टोत्थ (?) मनुष्यजलं स्रवः ।
प्रस्रावश्च भवेन्मेहोऽथोच्चारावस्करौ समौ ।
वर्चः पुरीषं लेण्डं च शकृच्छमलमन्तिमे ।
विष्ठा न स्त्री गूथ-मल-वर्चस्का विड्विषौ न ना ॥ ५८ ॥
मूत्रं विष्ठा वान्तमलौ खमला मांससंभवा ।
दूषीका दूषिका दूषिः पिचण्डी च पिचाटकम् ॥ ५९ ॥
दृग्मल कर्णगूथं तु तावर्म पि  प इत्य  ।
जिह्वामलं तु कुलुकं लाला तु कफकूर्चिका ॥ ६० ॥
सृणीका स्यन्दिनी [91a] वक्त्रासवोऽप्यस्यास्त्वतिस्रवः ।
स्यात्प्रसेकोऽथ शिङ्घाणकुरण्डो नासिकामलम् ॥ ६१ ॥
पिप्पिकं स्याद्दन्तमलं पुष्पिका लिङ्गजं मलम् ।
स्वेदो मेदोमलोऽथास्थिमलौ स्तो नख-रोमणी ॥ ६२ ॥
स्नेहोऽक्षित्वग्विशां मज्जो मलोऽथौजश्च रेतसः ।
शुक्रशोणितसंयोगे प्रकृतिर्दोषभूयजा ॥ ६३ ॥
वेषोऽस्त्री वेश आकल्पो नेपथ्यं प्रतिकर्म तु ।
प्रसाधनं मण्डनं च भूषितस्तु प्रसाधितः ॥ ६४ ॥

---

5282 पक्तृ २
5283 साधकं १; रंजकं १
5284 °चकं १ त्वक्स्थं १
5285 °धरा २
5287 आमाशयो १; °शोपरा ३
5288 उल्व ४ मस्त्री
5290 °न्मेदो ७
5292 विड्विषो १३
5293 °मलो १ समला १
5295 दृग्मल ६; विंड्रप २
5296 कुलुकं १
5297 °स्रवो ५
5298 °त्प्रसेको १; °मलं ३
5299 पिप्पिकं १; पुष्पिका १
5300 मेदोमलो १
5301 °थौज १ श्च
5302 प्रकृति १
5303 नेपथ्यं ३
5304 मंडनं ३

विभूषितोऽलंकरिष्णुरलंकर्ताप्यलंकृतः ।
परिभूषित-विभ्राजौ रोचिष्णुर्मण्डितस्तथा ॥ ६५ ॥
भ्राजिष्णुर्भूषिताद्याः स्युरेकादश विशेष्यगाः ।
अलंकारः परिष्कारो मण्डयन्तोऽप्यलंक्रिया ॥ ६६ ॥
मण्डनाभरणे न स्त्री भूषणं तद्धिरण्मयम् ।
हैमं च मेचकचूडामणिस्तु स्याच्छिरोमणिः ॥ ६७ ॥
न स्त्री किरीट-कोटीरोष्णीषाणि मुकुटं तथा ।
मकुटं नरि मौलिः स्यात्पत्रपाश्या ललाटिका ।
[91b]बालपाश्या पारितथ्या शङ्खचर्चापि सा मता ।
कर्णपूरोऽवतंसोऽस्त्री कर्णिका कर्णभूषणम् ॥ ६९ ॥
ताटङ्को न स्त्रिया कर्णदर्पणश्च निगद्यते ।
कुण्डलोऽस्त्री कर्णवेष्टो वाली स्यात्कर्णपृष्ठगा ।
उत्क्षिप्तिका तु कर्णान्दूः स्त्रिया ग्रैवेयकं पुनः ।
ताडपत्रं दन्तपत्रमुभयं च समार्थकम् ।
स्याद्ग्रैवेयं कण्ठभूषा लम्बनं तु ललन्तिका ॥ ७१ ॥
लम्बमाना सा तु हैमी भवेत्प्रालम्बिका स्त्रियाम् ।
कन्धरातोरणं कण्ठी स्यादुरःसूत्रिका पुनः ॥ ७२ ॥
मौक्तिकद्वंद्वे तु हारः स्यान्मुक्तास्रङ्मौक्तिकावली ।
मुक्तालता भवेन्मुक्ता प्रालम्बो मध्यगोऽस्य च ॥ ७३ ॥
मणिः स्यात्तरलो मध्यनायकोऽथ सरोलता ।
सरिका यष्टिका देवच्छन्दस्तु शतयष्टिकः ॥ ७४ ॥
इन्द्रच्छन्दोऽष्टोत्तरी स्याद्यष्टीनां च सहस्रतः ।
तदर्द्धे विजयच्छन्दो हारस्त्वष्टोत्तरं शतम् ॥ ७५ ॥
भवेद्रश्मिकलापोऽर्द्धहारोऽथ द्वादशोन्मितैः ।
[92a] तैरर्द्धमाणवोऽथार्द्धगुत्सोऽस्माद्द्विगुणैः सरैः ॥ ७५ ॥

---

5307 भ्राजिष्णु ११
5309 भूषणं ७
5310 हैमं २; °मणिः २
5312 मौलिः ५
5313 °चर्चा ३
5316 °वेष्टो २ वाली १; °पृष्ठगा ७
5317 कर्णांदू २
5319 °भूषा २
5320 °माना ३; °म्बिका १
5321 कण्ठी १; °सूत्रिका १
5323 प्रालंबो ६
5324 °नायको २ म
5326 इंद्रच्छंदो १
5327 विजयच्छंदो १ हार १
5329 °माणवो १, °गुत्सो १

गुत्सः सप्ततियष्टिः स्यात्कचिद्वात्रिंशता सरैः ।
इतोऽर्द्धतो माणवको मन्दरोऽपि तदर्द्धतः ॥ ७६ ॥
तद्वद्गोस्तन-गोपुच्छावेकावल्येकयष्टिका ।
सैव नक्षत्रमाला स्यात्सप्तविंशतिमौक्तिकैः ॥ ७७ ॥
बाहुभूषा खद्व[ः] केयूराङ्गदे चाथ न स्त्रियाम् ।
षडमी स्युः पारिहार्यः कटको वलयोऽपि च ॥ ७८ ॥
आवापः कङ्कणश्चैव वालकः करभूषणम् ।
हस्तसूत्रं प्रतिसरस्त्रिषु रात्नं तु पुष्पकम् ॥ ७९ ॥
अङ्गुलीयं तूर्मिका स्याद्वालकोऽपि च न स्त्रियाम् ।
साक्षराङ्गुलिर्मुद्रा सा स्यासको हस्तबिम्बकः ॥ ८० ॥
काञ्चिः काञ्ची सिञ्जिनी च रशना रसनापि च ।
सप्तकी च कलापोऽस्त्री क्लीबे सारसनं तथा ॥ ८१ ॥
शृङ्खला त्रिषु पुंस्कट्यामथ पादाङ्गदं भवेत् ।
सिञ्जिनी स्यात्तुलाकोटिः स्यात्पादकटकोऽपि च ॥ ८२ ॥
मञ्जीरो हंसको न स्त्री नूपुरश्च तथान्दुकः ।
[92b] त्वक्फल-कृमि-रोमाणि चतस्रो वस्त्रयोनयः ॥ ८३ ॥
क्षौमादि त्वङ्मयं वाल्कं क्षौममस्त्री दुकूलकम् ।
दुगूलकं च चरमे कार्पासं बादरं फलात् ॥ ८४ ॥
कौशेयं कृमिकोशोत्थं राङ्कवं मृगरोमजम् ।
त्रिषु कार्पासादयोऽथ चीर-चार्सोंशुकानि च ॥ ८५ ॥
आच्छादनं च वसनं चेलं सिक् नेत्रमस्त्रियाम् ।
प्रोत-प्राच्छाद-सिचया वस्त्रं शाटकमम्बरम् ॥ ८६ ॥
अस्त्रीण्यथो निष्प्रवाणि तन्त्रकं नाहतं नवम् ।
पटचरं जीर्णवस्त्रं त्रिष्वथो अञ्चलोऽस्त्रियाम् ॥ ८७ ॥
दशा भूम्नि द्वयोश्चाथ वर्तिर्वस्तिर्द्विलिङ्गकः ।

---

5330 गुत्स: १
5331 माणवके १
5332 °गोपुच्छ १
5337 प्रतिसर १; पुष्पकं १
5339 °मुंद्रा १
5341 सारसने ८
5342 शृङ्खला १
5345 °योनय: १
5346 क्षौमादि १; वाल्कं २
5347 बादरं २
5348 °कोशोत्थं २
5350 चलसिक्
5351 °भंवरं १४
5352 नाहते for नाहतं

दशा तूली जवनिका शाणी सच्छिद्रवाससि ।
नक्तकः कर्पटोऽस्त्री स्यात्प्रोतं च पटलं त्रिपु ॥ ८८ ॥
गुणस्तन्तुः सूत्रमस्त्री तत्तु कार्पासजं पिचोः ।
पिचव्यं त्रिपु तत्साधु धौतकौशेयकं पुनः ॥ ८९ ॥
पत्त्रोर्णं बहुमूल्यं तु तन्महाधनमन्यवत् ।
तत्स्यादुद्गमनीयं यद्धौतयोर्वस्त्रयो[93a]र्युगम् ॥ ९० ॥
पटि त्रिपु सुचेलो ना वराशिः स्थूलशाटकः ।
स्त्रियां बृहतिका वस्त्रे महीयसि निगद्यते ।
कुथः कुटार ऊर्णायुः शाल्लरो रल्लकाविकौ ॥ ९१ ॥
औरभ्रः कम्बलो द्वंद्वे परिस्तोमास्तरौ तथा ।
वर्णः प्रवेणिर्नवता सूची-वान-कुथास्त्रिपु ॥ ९२ ॥
निचोलः प्रच्छदपटो निचुलश्चोत्तरच्छदः ।
अर्धांशुकं निवसनमुपसंव्यानमित्यपि ॥ ९३ ॥
परिधानं चान्तरीयं * * * * * * * * ।
संव्यानमुत्तरासङ्गो भवेद्बृहतिका स्त्रियाम् ॥ ९४ ॥
प्रावारश्चाथ नीशारो हिमानिलनिवारणम् ।
नीवी त्वर्धांशुकग्रन्थिरुच्चयोऽथ वरस्त्रियाः ॥ ९५ ॥
अर्धोरुकेऽम्बरे चण्डातकोऽस्त्री चलनश्च सः ।
अन्यस्याश्चलनी क्षिप्रोढाया आनन्दवस्त्रकम् ॥ ९६ ॥
घर्घरी तु कुमारीणां शाटी चोटी चटी च सा ।
कच्छा कच्छाटिका कक्षा परिधानापराञ्चले ।
कच्छापटोऽस्त्री कौपीनमथ वक्षोम्बरे भवेत् ।
चोलोऽङ्गिका कञ्चुलिका कूर्पा[93b]सोऽस्त्री च कञ्चुकः ॥ ९८ ॥
वीटीका चोलकग्रन्थिरुष्णीषं पुनरस्त्रियाम् ।
तिरीटं च शिरोवेष्टः शिरोवेष्टनमित्यपि ॥ ९९ ॥

---

5355 जवनीका ५
5357 सूत्रम ३ स्त्री
5358 पिचव्यं १
5359 पत्रोर्णं १; °घन ३
5360 °नीयं १
5361 सुचेलो २; °शाटक° २
5364 द्वंद्वे ८
5365 °कुथ ८ त्रिपु
5366 निचुलोस्तो (corrupt)
5370 नीशारः १
5371 °रुच्चयो २
5372 चलन२ च
5373 °श्चलनी १
5374 चटी ४
5375 °चले ५
5376 कौपीन २
5377 कंचुलिका २
5378 °ष्णीषं २

निचोलो वारबाणेऽस्त्री कार्पाससार्द्धचोलकः ।
जङ्घावस्त्रं मङ्घुर्णं स्यात्कन्था स्याद्यतिवाससि ।
चीवरं भिक्षुसघाटी निवीतं प्रावृतं त्रिषु ॥ ३० ॥

गोमूत्रवर्णं वस्त्रं यत्तद्गोमूत्रकमुच्यते ।
स चीवरायमाण. स्यादर्जयेच्चीवराणि यः ।
स वस्त्रयंस्तु वस्त्राणि यः समाच्छादयेत्त्रिषु ॥ ३०० ॥

स्यात्त्रिष्वाप्रपदीनं तत्प्राप्नोत्याप्रपदं हि यत् ।
सर्वाङ्गीणं तु सर्वाङ्गव्यापि वस्त्रादि यद्भवेत् ॥ १ ॥

अस्त्री वितानमुल्लोचः कदर्कः खजकश्च सः ।
चन्द्रोदयश्चाथ भवेद्दूष्यं वस्त्रगृहं स्त्रलम् ॥ २ ॥

अस्त्रियां तुवरं प्रोताच्छादनं कुटरुः पुमान् ।
केणिका स्यात्पटकुटी भवेद्गुणलयन्यपि ॥ ३ ॥

अवस्तारो जवनिका नीरङ्गिन्यवगुण्ठिका ।
अपटी प्रतिसीरा च स्याति[94a]रस्करिणी च सा ॥ ४ ॥

प्रतिशीरा काण्डपटो गोणीकण्ठालिकं समे ।
जालिकाल्या तु सा गोणीतरी गोणितरी तथा ।
प्रसाधनं तु चरमे परिकर्माङ्गसंस्क्रिया ॥ ५ ॥

मृजा मार्ष्टिर्मार्जना स्यादभ्यङ्गस्तैललेपनम् ।
मूर्धतैलं शिरोबस्ति पिच्छ( शा ? )भ्यङ्गैः ससिश्चनैः ॥ ६ ॥

उद्वर्चनोत्सादने द्वे तत्रोच्छादनमित्यपि ।
जिल्गु ( ? ) द्वर्चिर्मलं पिण्डमाप्लावस्त्वाप्लवो नरि ॥ ७ ॥

भवेदभिषवः स्नानं मज्जनं च समार्थके ।
जेन्ताकस्तु भवेत्सेको य उष्णोदकनिर्मितः ।
विलेपनं त्वङ्गरागो वर्णको न स्त्रियामथ ।

---

5380 After line, Ms reads ठेक ५ ।
5382 °संपाटी ३, प्रावृतं २
5385 वस्त्रय १ स्तु
5386 °पदीनं १
5387 सर्वांगार्ण १, यद्भवेन् १
5389 चंद्रोदय ५
5391 °यन्यपि ३
5394 काण्डप्ये १
5395 °तरी गोणीतरी २
5396 सस्त्रियां २
5397 °र्मार्जना ३
5398 °तैलं १
5400 पिंड ३
5401 मज्जनं ५
5402 जैंताक १
5403 वर्णको ३

गात्रानुलेपनी वर्तीरनुबोधः प्रबोधनम् ॥ ९ ॥
विच्छित्तिः स्त्रीसमालम्भश्चर्चा चर्चिक्यमित्यपि ।
पत्रलेखा पत्रभङ्गिर्मकरी पत्रवल्लिका ॥ १० ॥
पत्राङ्गुलिश्च मादिश्च मालुरस्त्री विशेषकः ।
तमालपत्रं पुण्ड्रश्च चित्रकं तिलकोऽस्त्रियाम् ॥ ११ ॥
कश्मीरजन्म घुसृणं वर्णं बाह्लीक-बाह्लिके ।
कालेयं [94b] जागुडं चाग्निशिखं च कुसुमान्त(न्त्य)कम् ॥ १२ ॥
केसरं किसरं वेरं पीतकं पीतनं वरम् ।
असृग्रक्ताम्बरं न स्त्री कुङ्कुमं हरिचन्दनम् ॥ १३ ॥
संकोचं पिशुनं धीरं दीपनं रक्तचन्दनम् ।
कस्तूरिका गन्धधूलिर्मृगनाभिर्लताण्डजा ॥ १४ ॥
स्यादेणनाभिजा दर्पो मदोऽसौ गन्धशेखरम् ।
मार्जारी वेधमुख्या च मदनी च निगद्यते ॥ १५ ॥
कर्पूरोऽस्त्री चन्द्रनामा घनसारः सिताभ्रकः ।
रेणुसारो वेधकं च तथैव रसकेसरम् ॥ १६ ॥
हिमभस्म हिमाह्वं च स्त्रियां तु हिमवालुका ।
गोरोचना रोचना स्याद्गोपित्तं च प्रकीर्तितम् ।
कर्पूरागरुकस्तूरीकङ्कोलैर्यक्षकर्दमः ॥ १७ ॥
पुरसर्जाभया लाक्षी शठी नखजटानतैः ।
स शैलेयैः समधुभिर्धूपः कामशरो मतः ॥ १८ ॥
स्थानात्स्थानान्तरं गच्छन्धूमो गन्धपिशाचकः ।
तरूणां प्रसवाघायी गवेद्दोहदधूपकः ।
चूर्णोऽस्त्री वासयोगाः स्युर्भावितं वासितं त्रिषु ।
पिष्टातः पटवासः[95a]स्यादुध(?)लिशक इत्यपि ॥ १९ ॥
संस्कारो गन्धमाल्याद्यैर्यः स्यात्तदधिवासनम् ॥ २० ॥
माल्यं मालास्रजौ मूर्ध्नि केशमध्ये तु गर्भकः ।
मालावान्मालिको माली माल्यधारी दधत्स्रजम् ॥ २१ ॥

---

5404 वर्तीर स्तु°
5408 तिलको ५
5413 °चंदन ४
5416 मदनी १२
5420 °पित्तं १
5423 कामशरो १
5426 °योगाः ३
5427 °लिशक २
5428 °वासनम् १
5430 माली २; °धारी १

पद्ममालाधरः पद्ममालभारी निगद्यते ।
स्रगस्ति यस्य स स्रग्वी स्रजीयांस्तु स्रजिष्ठवत् ॥ २२ ॥
माला*[वा]नपि मालिष्ठः स्रग्विणोऽतिशये त्रिषु ।
प्रभ्रष्टकं शिखालम्बि पुरोन्यस्तं ललामकम् ॥ २३ ॥
प्रालम्बमृजुलम्बि स्यात्कण्ठाद्वैकक्षिकं तु तत् ।
यत्तिर्यक् क्षिप्तमुरसि शिखासु स्त्री न शेखरः ॥ २४ ॥
अवतंसस्तथोत्तंसो नरि त्वापीड उच्यते ।
उच्छीर्षकं तूपधानमुपबर्हश्च गण्डुकः ॥ २६ ॥
संस्तर-प्रस्तरौ तुल्यावासन्दी लघुखट्विका ।
निपद्याथो मञ्चकः स्याच्छयनं तल्पमस्त्रियः ॥ २७ ॥
मञ्च - पर्यङ्क - पल्यङ्क - कर्णवंश्या नृलिङ्गकाः ।
शयनीयं च तलिमं नैर्यूहो गजदन्त[95b]जः ॥ २८ ॥
तन्मण्डपस्तु कुद्रङ्कः शय्या स्यात्खट्वया समा ।
पर्यङ्किका वालशय्या महाशय्या तु भूपतेः ॥ २९ ॥
खट्वैकदेशो मार्जारोऽस्त्रियां त्वासन-विष्टरे ।
पीठं नपुंस्यथौशीरमेकोक्त्या शयनासने ॥ ३० ॥
पादपीठं फलहकः पादपः पादुकापि च ।
आसन्दी वेत्रपीठं स्यालोचकं कज्जलाञ्जने ।
दीपोऽस्त्रियां प्रदीपश्च दशाकर्षी दशेन्धनः ॥ ३१ ॥
जटाज्वालो गृहमणिर्द्योतनोऽञ्जनकेतनः ।
स्नेहप्रियोऽथास्य पात्रं कोशिका मल्लिका द्वयोः ॥ ३२ ॥
तदाधारस्खलं पूपी ताम्बूलं मुखवासनम् ।
चर्वितेऽसित्रवेला स्त्री स्यादावेलो नृलिङ्गकः ॥ ३३ ॥

---

5431 °भारी १
5432 स्रग्वी १
5433 मालिष्ठः ४
5434 प्रभ्रष्टकं १; ललामकं १
5435 प्रालंब १; °क्षिकं १
5437 त्वापीड ४
5438 गंडुकः ४
5439 °प्रस्तरौ २
5440 निषद्या २
5442 तलिमं १ नैर्यूहो १
5443 कुद्दंकः १; खट्वया २
5444 °शय्या १ महाशय्या १
5445 मार्जारो १
5446 पीठं ३; °शीर १
5447 फलहकः ३; पादुका ४
5448 आसंदी १; °लांजने २
5451 स्नेहप्रियो ५; मल्लिका २
5452 पूपी १; °वासनम् २
5453 °दावेलो २

फरूवकं पूगपात्रं पर्कटी पूगकर्त्तकः ।
स्याचाम्बूलकरङ्कश्च स्वगी ताम्बूलभाजनम् ॥ ३४ ॥
ताम्बूलदो वागुरिकः ※ ※ ※ [ताम्बूल]पिटकस्त्रिपु ।
स्त्रियौ तु पेटा-मञ्जूषे पुटकं पुस्तकादिभृत् ।
वंशजे भाजने पिण्ड-कण्डोलौ पिटक[96a]स्त्रिपु ।
समुद्गकः संपुटकः प्रसेवः स्यूत इत्यपि ।
कटस्त्रिपु किलिञ्जो नासने वीरणनिर्मिते ।
कटकोणः(लः) प्रतिग्राहः पतद्ग्राहः पतद्ग्रहः ॥ ३६ ॥
प्रोन्दुकः पालमप्यन्त्ये कङ्कतस्तु त्रिलिङ्गकः ।
प्रसाधनः केशमृट् च स्यादादर्शस्तु दर्पणः ॥ ३७ ॥
स्युरात्मदर्श-मुकुर-मकुराः कर्करो दृढः ।
यथामुखीनस्तितये स यथामुखदर्शनः ॥ ३८ ॥
एवं स्यात्संमुखीनेऽथ न स्त्री भ्रमरको गुडः ।
गिरिर्गुडेरो गण्डोलो गडोलोऽस्त्री तु कन्दुकः ॥ ३९ ॥
गेन्दुकोऽप्यस्य ल्युतादानं(?)क्रीडावीटा तु पच्छिका । (?)

इति नृवर्गः ।

वंशोऽन्ववायः संतानोऽन्वयश्चाभिजनः कुलम् ।
गोत्रं च जननं जातिः संततिश्च समार्थकाः ॥ १ ॥
वंश्यः कौलेयकः कौलः कुलीनो बीजय-गोत्रजौ ।
महाकुलीनस्तु महाकुलो माहाकुलीनवत् ॥ २ ॥
सभ्य-साधू सज्जनार्यौ समौ पार्षद-पार्षदौ ।
पारिषद्यः पारिषदो भवेद्दुष्कुलजः पुनः ॥ ३ ॥
[96b]दौष्कुलेयो दुष्कुलीनः पांसनेऽमी त्रिदोष्यगाः ।

---

5454 °पात्रं २
5455 °भाजनं ३
5456 वागुरिकः ३; पिटक २
5457 मंजूषे २ पुटकं १; °भृत्
5458 पिटक ३
5459 संपुटकः २; स्यूत २
5462 पाल ६
5463 केशमृट् २
5464 °मकुराः ५
5465 °मुखीन १
5466 °संमुखीनो १
5467 गडोलो ६
5468 ल्युतादानं १; °वीटा १
इति नृवर्गः ॥
5470 संतति १० ध
5471 °गोत्रजौ ६
5474 पारिषदो ११
5475 पांसने ३

वर्णा नरि ब्राह्मणाद्याश्चातुर्वर्ण्यं पुनः स्मृतम् ॥ ५ ॥
विप्र-क्षत्रिय-विट्-शूद्रास्ते त्वशूद्रा द्विजा मताः ।
ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्चतुष्टये ॥ ६ ॥
आश्रमोऽस्त्री ब्राह्मणस्तु विप्र-भूदेव-वाडवाः ।
द्विजो द्विजातिर्मुखजोऽग्रजन्मा चाग्रजातिवत् ॥ ७ ॥
वर्णज्येष्ठो वेदगर्भः सूत्रकण्ठस्त्रयीमुखः ।
कजो मित्रश्च सावित्रो ब्रह्मा चैतश एतशाः ॥ ८ ॥
शमीगर्भश्च यागादियुक्तः षट्कर्मा ※ ※ ※ ※ ※ ।
※ ※ ※ ※ ※ ※ ※ ※ सोमपीथी स सोमपाः ।
ब्रह्मण्यं स्याद्ब्रह्महितं विशेष्यसमलिङ्गकम् ।
ब्राह्मणौघे तु वाडव्यं ब्राह्मण्यमपि चान्तिमे ॥ ९ ॥
भवेद्ब्राह्मणजातीयो ब्राह्मणत्वसमन्वितः ।
असावग्निष्टोमयाजी सोमयाजी च सोमसुत् ।
जातिविप्रो ब्रह्मबन्धुः कुब्रह्मो ब्राह्मणब्रुवः ॥ ९ ॥
कुब्रह्माथ महाब्रह्मो महाब्रह्मा स वन्दितः ।
सुराष्ट्रब्रह्म-सौ[97a]वीरब्रह्मौ स्तो देशनामतः ॥ १० ॥
बटुस्तु स्यान्माणवकः स कृतोपनयो भवेत् ।
उपनायस्तूपनयो बटूकरणमानयः ॥ ११ ॥
भद्राकृतिः स्त्रियां भद्राकृतिश्चूडाकृतिः स्त्रियः ।
मङ्गल्यमुण्डनं चूडाकरणं चौलमित्यपि ।
अग्नीन्धनं त्वग्निकार्यमाग्नीध्रा चाग्निकारिका ॥ १२ ॥
स्याद्विधामघवान्नित्यादिक ऋग्ब्रह्मचर्यवान् ।
बटुर्महानाम्निकोऽत्र माहानाम्निक एव च ।
वर्णी तु ब्रह्मचारी स्याद्भिक्षा स्याद्ग्रासमात्रकम् ।
भैक्षं भिक्षासमूहे स्यादथ संस्कारपूर्वकम् ॥ १३ ॥

5476 घर्णा १; °र्वर्म्य १
5477 द्विजा १
5478 मह्मचारी १; °प्रस्थो १ भिषु १
5479 श्राश्रमो १
5482 एतशाः १९
5483 पट्कर्मा १
5485 ब्रह्मर्य १; °लिंगकं १
5486 माह्मय २
5487 °जातीसो १
5488 सोमयाजी ४
5490 °ब्रह्मा २
5491 ब्रह्म १ °ब्रह्मौ १
5493 °मानयः ४
5496 °कार्य२ माग्नीघ्रा
5498 °नाम्निक २
5499 °चारी २ स्याद्भिदा १
5500 भैक्षं १

उपाकर्मोपाकरणं गुरुतो ग्रहणं श्रुतेः ।
स्याद्ब्रह्मवर्चसं वृत्ताध्ययनर्द्धिरथाञ्जलिः ॥ १४ ॥
पाठे ब्रह्माञ्जलिः पाठे विप्रुषो ब्रह्मबिन्दवः ।
ध्यानयोगासने ब्रह्मासनमध्ययनं पुनः ॥ १६ ॥
अधीतिः पठनं पाठो निपठश्च निपाठवत् ।
पाठे शिष्योपदेशार्थे निगाद-निगदौ समौ ।
साम्नि क्लीबान्ययं तत्स्याच्चेदग्नि[97b]ग्रन्थिसीम तत् ॥ १७ ॥
ब्रह्मोद्यं ब्रह्मवद्यं च वेदप्रवचनं समम् ।
श्रुतिः पाठविच्छेदो ब्रह्मारण्यं तु पाठभूः ।
साकल्यवचनं पारायणं कल्पो विधिक्रमौ ॥
मुख्यः स्यात्प्रथमः कल्पोऽनुकल्पस्तु ततोऽधमः ॥ १८ ॥
पठिताभ्यसनेऽभ्यासो योग्या च गुणनी स्त्रियौ ॥ १९ ॥
गर्भाधानादिसंस्कारकारी गुरुरुदीरितः ।
मन्त्रव्याख्याकृदाचार्य ईज्य इज्योऽथ पाठकः ॥ २० ॥
उपाध्यायोऽध्यापकः स्याच्चक्षाश्च कवरः समाः ।
व्यापारितः ससत्कारं मास सञ्जालिक(?)स्त्रिपु ॥ २१ ॥
छात्रान्तेवासिनौ शिष्यो विनेयश्च समार्थकः ।
शिष्योपाध्याययोर्द्वन्द्वे शैष्योपाध्यायिका स्त्रियाम् ।
निशाध्ययनमस्यास्ति सोढं नैशः स नैशिकः ॥ २२ ॥
अपपाठो यस्य वृत्तो भवेदेकः परीक्षणे ।
ऐकान्यिकः स शिष्यः स्यादेवं द्वैयान्यिकादयः ॥ २३ ॥
यो द्वितीयादिरूपेण ग्रन्थं गृह्णाति स द्विकः ।
द्वितीयकश्चाथ त्रिकः स तृतीयक [98a] इत्यपि ॥ २४ ॥
द्विकादयस्तु ग्रहणे ग्रन्थस्य क्लीबलिङ्गकाः ।
अधीयन्स्यादकृच्छ्रेण पठंस्तद्वत्तु धारयन् ।

5501 °करणे २
5502 °वर्चसं १
5503 ब्रह्मांजलि १; °बिंदव १
5504 ब्रह्मासन १
5506 °निगदौ १
5508 °प्रवचने २
5509 पाठभू ५
5510 पारायणं१, °क्रमौ ३
5511 कल्पो१नुकल्प१स्तु
5512 गुणनी ३
5513 गुरु १
5514 आवाप for आचार्य, इज्योप४पाठक
5515 स्याद, कवर ५ समा
5516 °लिक१स्त्रिपु
5518 °ध्यायिका १
5519 नैशिक २
5520 भवेदेक
5521 ऐकाविक, °कादय १
5523 द्वितीयक २, तृक स तृतीयक २

चतुर्दश्यां श्मशाने वा योऽधीते ब्राह्मणः श्रुतिम् ।
चातुर्दशिक उक्तोऽसौ तथा श्माशानिकस्त्रिषु ॥ २३ ॥
पारायणं वर्तयेद्यः स पारायणिकस्त्रिषु ।
येनाधीतमधीती स शैक्षः प्राथमकल्पिकः ॥ २४ ॥
अनूचानो गणिः पुंसि योऽधीती साङ्ग आगमे ।
स्यात्पारंपर्यमाम्नायः संप्रदायो गुरुक्रमः ॥ २५ ॥
एकब्रह्मव्रताचारा मिथः सब्रह्मचारिणः ।
सतीर्थ्यास्त्वेकगुरवो लब्धानुज्ञस्तु यो गुरोः ॥ २६ ॥
समावृत्तः स्नातकस्तु यो भवेदाप्लुतो व्रती ।
गर्भाधानादिसंस्कारैर्युक्तोऽसौ संस्कृतस्त्रिषु ।
अभावात्स्त्रीपरित्यागस्तुरगब्रह्मचर्यकम् ॥ २७ ॥
अजपस्त्वसदध्येता शाखारण्डो[ऽप्य]शाखकः ।
निराकृतिर्वेदहीनो नष्टाग्निर्वीरहा भवेत् ॥ २८ ॥
व्रात्यः संस्कारहीनः स्यादवकीर्णी क्षत[98b]व्रतः ।
गृही ज्येष्ठाश्रमी सत्री गृहपाय्यो गृहस्थवत् ।
गृहमेधी गृहपतिर्गृही च ※ गृहाधिपः ॥ २९ ॥
पुंस्युपाधिस्तथाभ्यागारिकः सोऽतिकुटुम्बकः ।
व्रतसंग्रहणं दीक्षाथादिष्टी क्रतुषु व्रती ॥ ३० ॥
यजमाने यष्टा यष्टो दस्रो याजकृदुक्थशाः ।
सोमयाजी दीक्षितः स्याद्दीक्षिता तत्क्रतुवती ॥ ३१ ॥
आर्त्विजीनस्त्वृत्विगर्हो यज्ञार्हो यज्ञियो मतः ।
स सोम्यः सोमपानार्हस्त्रैवार्षिकधनो हि यः ।
※※※※※※※※※※माहिताग्निश्च साग्निकः ।
अभ्याहितोऽप्यथारम्भः उद्घातः प्रक्रमस्तथा ॥ ३४ ॥
अभ्यादानमुपोद्घातो ह्यात्वारम्भ उपक्रमः ।

5527 चातुर्दशेक १; °निक १ त्रिषुः
5528 पारायणीकः १
5529 °मधीती १ स शैक्षः १; °कल्पिकः २
5530 गणिः २
5531 °र्यं साम्नाय गुरुक्रमः ४
5533 °गुरवो १
5534 समावृत्तः १; मती १
5537 °दध्येना १ शाखारंडो १
5538 °हीनो १
5539 °हीन २; °कीर्णी १
5541 °पतिर्गृहवि
5543 दीक्षा २
5544 याजकृदुक्थसाः
5545 दीक्षिता ३
5546 यज्ञियो १
5549 अभ्याहितो ३
5550 उपोपातो ५; उपक्रमः १

प्रत्युत्क्रमः प्रयोगः स्याच्छंयुवाकस्तु शंयुगी ॥ ३५ ॥
वृतिः सुगहना कुम्बो स्यात्स्तम्भे युग–यूपकौ ।
चपालोऽस्त्री तत्कटको यूपाग्र नर्म न स्त्रियाम् ॥ ३६ ॥
यज्ञः सवोऽध्वरो यागो वसुरोचिर्मखः क्रतुः ।
मन्युः स्तोमः सत्तरश्च सचाय्य. सप्ततन्तुकः ॥ ३६ ॥
वर्हिर्वितानमस्त्री स्या[99a]त्सत्रमिज्याथ यज्ञियम् ।
यज्ञकर्मोचितमथ कुण्डपाय्य. ससोमकः ॥ ३७ ॥
सौमिकी–दीक्षणीयेष्टि–ज्योतिष्टोमाः समार्थकाः ।
अग्निष्टोमश्च तद्भेदा राजसूयं न योषिति ॥ ३८ ॥
वाजपेयं चाश्वमेधो नरमेधादयोऽपरे ।
दर्शश्च पौर्णमासश्च यागौ पक्षान्तयोः पृथक् ॥ ३९ ॥
वैतानिकाः श्रौतयज्ञाः स्मार्ता गृह्या प्रकीर्तिताः ।
स्थालीपाकः पार्वणः स्यादग्निहोमयुताहुताः ॥ ४० ॥
प्रहुता बलिहृत्याद्याः स्युर्ब्रह्मणि हुताः पुन. ।
विप्रभोजनसयुक्ताः पाकयज्ञास्त्रयोऽप्यमी ॥ ४१ ॥
श्रुतिपाठो ब्रह्मयज्ञो देवयज्ञोऽनले हुति· ।
बलिदानं भूतयज्ञ. पितृदानं पितृक्रतुः ।
निवाप· पिण्डदानं च श्राद्धं तर्पणमित्यपि ॥ ४२ ॥
नृयज्ञोऽतिथिसंतृप्तिः पञ्चामी स्युर्महामखाः ।
होमो होत्रं वषट्कारो हुतिराहुतिरित्यपि ॥ ४३ ॥
दीक्षान्तोऽवभृथो यज्ञे सुत्या त्वभिषुतस्त्रिपु ।
स्वाध्यायः स्या[99b]ज्जपः सुत्याभिषव· सवनं च तत् ।
समाजस्तु सभा-ससद्घटा-समिति पर्षदः ॥ ४४ ॥
आस्याऽऽस्थानी-परिषद, समज्या गोष्ठिका च सा ।
आस्थानं च सदः पुंसि स्त्रीनपुंसकयोः सदः ॥ ४५ ॥

---

5551 प्रयोग २, °वाक१युगी°
5552 कुंबो २, °यूपकौ २
5558 चपालो १, नर्म १
5556 यज्ञियं १
5557 कुण्डपास·
5558 सोमिकी, °होम
5559 अग्निष्टोम६श्च, °सूयं १
5560 वाजपेयं १ चाश्वमेधो १
5561 दर्श१श्च, वायुश्च
5562 गृह्या· १
5563 पार्वेण २, °होम°, °हुता· १
5564 प्रहुता १
5565 पाकयज्ञा १
5566 °यज्ञो २ देवयज्ञो १
5567 बली°
5568 तर्पण ६
5569 °तृप्ति २
5570 °राहुति ५
5571 °भृथो २, सुत्या १
5572 °ज्जप २, स्या for तत्
5575 सद १२

पर्षद्वलाः सभासूराः सदस्या विधिदर्शिनः ।
सभासदः समास्ताराः सभ्याः सामाजिकाश्च ते ॥ ४६ ॥
होत्रा स्त्री(?) यजनाचार्य-ऋत्विग्यक्षर-याज्ञिकाः ।
स्त्रीर्विर्यजुर्विदध्वर्युरविनः कठयज्युवत् ॥ ४७ ॥
अध्वर्योरिदमर्थे स्यादाध्वर्यवमिति त्रिषु ।
होता ऋत्विगथोद्गाता भवेत्सामग उक्थशाः ।
समग्रवेदविद्ब्रह्मा ब्रह्मत्वं तस्य कर्मणि ॥ ४८ ॥
आग्नीध्रो ※ ग्निमिन्धे ※ भेदाः पोत्रादयोऽपरे ।
द्वंद्वे तु होतापोतारावथ निर्मन्थदारुणि ॥ ४९ ॥
द्वंद्वेऽरणिर्गार्हपत्यो नर्यो गृहपतिश्च सः ।
शंस्य आहवनीयः स्यादथान्वाहार्यो दक्षिणानलः ॥ ५० ॥
अग्नित्रयमिदं त्रेता प्रणीतः [100a] संस्कृतोऽनलः ।
समूह्य-परिचाय्योपचाय्या अग्निधृतिस्थले ॥ ५१ ॥
अनाय्यो दक्षिणाग्निर्यो संततोपचितोऽनलः ।
चित्यः स्त्रियां त्वग्निचित्या यदग्नेश्चयनं भवेत् ॥ ५२ ॥
धाय्या तु सामिधेनी स्यादग्नेर्या ※ [ऋक्] समिन्धनी ।
अग्न्याधानं त्वग्निहोत्रमग्निरक्षणमित्यपि ॥ ५३ ॥
हवनी होमकुण्डं स्याद्धुतं त्रिषु वषट्कृतम् ।
होमाग्निस्तु महाज्वालो महावीरः प्रवर्गकः ।
होमधूमस्तु निगणो होमभस्म तु वैष्टुतम् ॥ ५४ ॥
समिद्भस्म तु रक्षा [क्षा]रो भूतिर्भसितमित्यपि ।
परंपराकं शसनं प्रोक्षणं च पशोर्वधः ॥ ५५ ॥

---

5576 °दर्शनः
5577 सामाजिका ८
5578 °यजनोचार्य,° °याज्ञका.
5579 यजुर्विद°; कठ ५
5580 °ध्वर्यव १
5581 ऋत्वि २ दयो; उक्थशा ३
5582 °ह्मा १
5583 °ग्निमिधे २ भेदा पोत्रा१दयो
5584 °पोतारो १ थप
5585 °रणि १; °पति २
5586 °वनीय. १; °णानल. २
5587 त्रेता १ प्रणीतः १
5588 समूह्य १ परिचाय्यौं १ पचाय्या १
5589 सततो १
5590 °चित्यः १
5591 दग्ने°
5592 त्वग्नि°; °रक्षण २
5593 °कुंडं २; °कृतं २
5594 प्रवर्गकः ४
5595 निगणे १; वैष्टुतं १
5596 भंसित ३
5597 °णं च ३. After ॥ ५५ ॥, Ms. reads छ ३

उपलम्भ्यः प्रशंस्योऽसावथालम्भ्यो वधोचितः ।
प्रमीत उपसंपन्नः प्रोक्षितश्च विशेष्यवत् ॥ ५६ ॥
हविर्होम्यं च सांनाय्यं हव्यपाके चरुः पुमान् ।
होत्रं च तत्र पक्के स्यात्तत्पात्रेऽपि भवेच्चरुः ॥ ५७ ॥
व्रीहीणां तु पुरोडाशो भवेद्व्रीहिमयो हि सः ।
अष्ट[100b]स्तूपः पुरोडाशो कपालेष्वष्टसु ह्यसौ ।
संस्कृतोऽष्टाकपालोऽथ तप्तक्षीरगतं दधि ।
स्यादामिक्षा क्षीरसरः पयस्या मस्तु वाजिनम् ॥ ५८ ॥
हव्यं यद्देवदेयं स्यात्कव्यं पित्र्यमिमे समे ।
आज्ये तु दधिसंयुक्ते पृषदाज्यं पृषातकः ॥ ५९ ॥
दध्ना युते मधुन्यस्त्री मधुपर्कः महोदयः ।
यज्ञशेषे सुरोच्छिष्टममृतं च प्रकीर्त्तितम् ॥ ६० ॥
त्रिषु सा देवता यस्येत्यर्थेऽपोनप्त्रियं हविः ।
अपोनप्त्रीयमेवं स्यादपांनप्त्रियमित्यपि ॥ ६१ ॥
अपांनप्त्रीयमप्युक्तं यद्दैवतमपोनपात् ।
अपांनपात्कमाद्याथ पिङ्गाक्षीपुत्रदेवतम् ॥ ६२ ॥
हविः पैङ्गाक्षीपुत्रीयमथ द्यावापृथिव्यवत् ।
सा द्यावापृथिवी यच्च भवेत्तद्दैवतं हि यत् ॥ ६३ ॥
गृहमेध्यं तु तद्दैवं गृहमेधीयमित्यपि ।
माहाराजिकमेवं स्याद्यन्महाराजदैवतम् ॥ ६४ ॥
आमिक्षीयं तथामिक्ष(क्ष्य)मामिक्षार्थे हितं हि यत् ।
तथैव स्यात्पुरोडाश्यं पुरोडाशीय[101a]मित्यपि ॥ ६५ ॥
स्रुवादीनि तु पात्राणि स्रुवोऽङ्गुष्ठबिलो नरि ।
स्रुक् स्त्रियामुत्तरा त्वेषा जुहूः सा त्वरिपकाऽधरा ॥ ६५ ॥

---

5598 उपलंभ्यः १; °वृथालंभ्यो १
5599 प्रमीत ३; प्रोक्षित ३
5600 सांनाय्यं ३
5601 होत्रं २
5602 पुरोडाशो ३
5604 °तौष्टाकपाले ११
5605 पयसा ३; वाजिनं १
5606 हव्यं १; कव्यं १
5607 पृषातकः २
5608 महोदय २
5609 सुरोछिष्टममृतं २
5610 ऽपोभरित्रयं
5612 °नप्त्रीय २
5614 °पुत्रीयं १
5616 °मेध्यं १; °धीय २
5617 °राजिक १
5618 तथामिक्षं २ भोमिक्षार्थे
5619 °डाशीय २
5621 जुहू

उपभृत्स्याद्ध्रुवा तु स्याज्जुह्वाज्याप्यायिका हि या ।
सा भवेत्स्वयमातृण्णा स्वयमन्तर्बिला शिला ॥ ६६ ॥
खड्गप्रतिकृतिः स्फ्यः स्यात्सोमपानस्य भाजने ।
चमसस्त्रिषु शम्या तु दृषदानहनी च सा ।
शम्यायास्तु स्वविष्ठोऽन्तः प्रोच्यते कुम्बमन्तिमे ॥ ६७ ॥
निधनं दर्भमुष्टिः स्यात्प्रस्तरस्तद्विशेषक ॥ ६८ ॥
जीवतण्डुल उक्तोऽसौ य ईषत्पक्वतण्डुलः ।
व्रीहीणामवघाते स्यात्फलीकरणमन्तिमे ॥ ६९ ॥
स्यादाग्निष्टोमिकी राजसूयिकी तस्य तस्य चेत् ।
दक्षिणीयो दक्षिणार्हस्त्रिषु दक्षिण्य इत्यपि ।
क्रतुक्रिया भवेदिष्टं पूर्तोऽस्त्री खातकर्म यत् ।
इष्टापूर्तं तदुभयं दक्षिणा तु क्रतुप्रिया ॥ ७० ॥
वरोऽभीष्टार्थदान स्याद्दानं तु प्रतिपादनम् ।
विश्राणन वितरणं स्पर्शनं च विहापनम् ॥ ७१ ॥
प्रा[101b]देशन निर्वपणमुत्सर्जन-विसर्जने ।
तथापवर्जन त्याग विसर्गोत्सर्गकाः समाः ॥ ७२ ॥
अंहतिश्च स्त्रिया तत्तु देवेभ्यः कामसिद्धये ।
चेद्दिव्यदोहदं तत्स्यादुपयाचितक च तत् ॥ ७३ ॥
पूर्णानकं पूर्णपात्रं हर्षाद्वर्द्धापक च तत् ।
प्रयत्नेन विना लभ्यं स्वस्तिलभ्य विशेष्यवत् । (?)
प्रवारणं काम्यदानं हन्तकारो बलिः समौ ।
बलेर्हितादौ बालेयं गदितं भेद्यलिङ्गकम् ।
याथाकथाचं तु यथाकथा चैव प्रदीयते ।
प्रावृषेण्यं प्रावृषि यद्देय शरदि शारदम् ॥ ७४ ॥

5622 °भृत्याद्ध्रुवा
5623 °तृष्णा १
5624 स्त्य॰ १
5625 आनहनी २
5626 स्रुच १
5627 °मुष्टी १ स्यात्स्तर १
5628 °तंडुल १ दर्भी
5629 °करण १
5630 °ष्टोमिकी १, °सूयिकी १
5631 दक्षिन्य १
5632 प्रतुक्रिया, °ष्टि १ पूर्ते
5633 °पूर्तं १, दक्षिणा १
5634 वरो १, °दानं २
5637 °गोत्सर्गकाः
5638 अहतिश्च १५
5639 °याचितके १
5640 °द्वर्षापकं १
5641 अय° for प्रय°, स्वस्तिलभ्यं
5642 °दानं १, बलि २
5643 यथाकथाचं १
5644 °कथार्थ १
5645 प्रावृषेन्यं १

हस्त्यं हस्तेन यद्देयं चत्वारोऽमी विशेष्यवत् ।
मृतार्थं तदहे दानं त्रिषु स्यादौर्ध्वदेहिकम् ॥ ७५ ॥
अन्वाहार्यं मासिकं स्यात्पार्वणं दार्शिकं समे ।
नान्दीश्राद्धं वृद्धिहेतुः श्राद्धं श्रद्धायुतं त्रिषु ॥ ७६ ॥
पर्येषणा परीष्टिश्चान्वेषणा च गवेषणा ।
सनिस्त्वध्येषणा च स्यात्पूज्यानां याच्ञतोऽर्थना ॥ ७७ ॥
विज्ञप्तिः स्याद्विज्ञपकं विनयाच्चा[102a]र्थनं हि यत् ।
विनयः स्याद्वैनयिकः प्रश्रयः प्रणयश्च सः ।
याच्ञार्थना याचना स्याददर्नाध्येषणैषणा ॥ ७८ ॥
भिक्षाभिशस्तिः प्रणयोऽथार्घ्यमर्घार्थमम्बु यत् ।
पाद्यं पादार्थकं वारि स्यादथाचमनार्थकम् ॥ ७९ ॥
भवेदाचमनीयं च तद्वत्स्नानीयमित्यपि ।
आतिथ्यमातिथेयी च स्यादावेशिकमित्यपि ।
अभ्यागतः प्राघुणः स्यादागन्तुश्च गृहागतः ।
प्राघूर्णकावेशिकौ चातिथिर्नाघ्र्यादयोऽन्यगाः ।
सूर्योढस्त्वस्तगे भानौ यः प्राप्तो गृहिणो गृहम् ।
पूजार्हणा सपर्यार्चा नमस्यापचितिः स्त्रियाम् ॥ ८२ ॥
नमस्कारो नतिः पादग्रहणं चाभिवादनम् ।
नमस्क्रिया वन्दना च प्रणाम उपसंग्रहः ॥ ८३ ॥
प्रणिपातस्त्वनुनयः प्रणतिः स्त्री क्षमापणम् ।
वरिवस्या तु शुश्रूषा परिचर्या प्रसादना ।
आराधनोपासना च परीष्टिर्भक्तिरित्यपि ॥ ८४ ॥
सेवोपास्तिश्च भजनं सेवनं चाप्युपासनम् ।
उपचर्योपचारोऽथ प्रतिपत्तिश्च गौ[102b]रवम् ॥ ८५ ॥
अभ्युत्थानं च सत्कारः सन्मानश्च सभाजनम् ।

---

5646 हस्त्वं १
5647 °दैहिकं १
5648 अन्वाहार्यं १; दर्शिकं २
5649 °श्राद्दं १; श्राद्ध श्रद्धायुता
5650 गवेषणा ४
5651 °ष्यणा २
5652 °द्विज्ञपकं २
5655 °भिशंसि, °भार्घ्यं १
5656 पार्द्यं १
5657 °स्त्रीनीय १
5658 °दावेशिक ३
5661 सूर्योढ १
5664 °नीद्या
5665 °चनम्
5669 °पचारो १९
5670 सभाजनं ३

व्रज्याटाट्या पर्यटनमट्याप्युक्ता स्त्रियामिह ॥ ८६ ॥
परिव्रज्या व्रतादानं चर्या त्वीर्यापथे स्थितिः ।
ईर्या तपस्या संबोधमार्गश्च नियमस्थितिः ॥ ८७ ॥
आनुपूर्व्यं त्वानुपूर्वी-परिपाट्यावृतः स्त्रियः ।
क्रमानुक्रम-पर्याया अतिपातस्त्वतिक्रमः ॥ ८८ ॥
पर्यायोपात्ययौ चाथ व्यत्ययः स्याद्विपर्ययः ।
व्यत्यासश्च विपर्यासो व्युत्क्रमश्चोत्क्रमश्च सः ।
प्रायश्चित्तिः स्त्रियां प्रायश्चित्तं पापनिबर्हणम् ॥ ८९ ॥
उपस्पर्शस्त्वाचमनमथ मौनमभाषणम् ।
हृदि साक्षात्कृतिर्ध्यानं धारणा चित्तबन्धनम् ॥ ८८ ॥
प्राणायामः प्राणयमो निःश्वासोच्छ्वासरोधनम् ।
प्रत्याहारस्त्विन्द्रियाणां विषयेभ्यो विकर्षणम् ॥ ८९ ॥
मोक्षोपायो भवेद्योगो नियमो व्रतमस्त्रियाम् ।
पुण्यकं चाथ न स्त्री स्यादौपवस्त्रमुपोषणम् ॥ ९० ॥
उपवासोऽथ कृच्छ्रं स्याद्व्रतं सांतप[103a]नादिकम् ।
संसि(शि)तं तु व्रतं सम्यक्तया निष्पादितं हि यत् ।
व्रते तु यत्नवान्नो(न्यो)हि संशितो मेधलिङ्गकः ।
शरीरसाधनापेक्षं नित्यं यत्कर्म तद्यमः ॥ ९१ ॥
नियमस्तु स यत्कर्म नित्यमागन्तुसाधनम् ।
सर्वेनसामपध्वंसि जप्यं त्रिष्वघमर्षणम् ॥ ९२ ॥
उपवीतं यज्ञसूत्रं प्रोद्धृते दक्षिणे करे ।
प्राचीनावीतमन्यस्मिन्निवीतं कण्ठलम्बितम् ॥ ९३ ॥
यज्ञोपवीतपाठे स्याचातुलश्च मयूरकः ।
पालाशो दण्ड आषाढो व्रते राम्भस्तु वैणवः ॥ ९४ ॥

---

5671 °भट्या ४
5672 °दानं २
5675 °पर्याया ७
5676 °पात्ययौ ४
5678 °बर्हणो
5679 °चमन २; °षणं २
5680 धारणा° १
5681 °यमो २
5683 °द्योगो २
5684 पुण्यकं ३
5685 उपवासो ३
5686 संशितं १
5687 संशितो १
5689 नियम १
5692 °नावीत १

आश्वत्थो जितनेमिः स्यादौदुम्बर उदूखलः ।
बैल्वः सारस्वतो शैच्यः पैलवस्त्वौपरौधिकः ।
कुण्डी कमण्डलुर्न स्त्री व्रतिनामासनं बृषी ॥ ९६ ॥
वृसी च क्वचित्त्वजिनं चर्म च व्रतिवाससि ॥ ९७ ॥
अङ्गुल्यग्रे तीर्थं दैवं स्वल्पाङ्गुल्योर्मूलेकायम् ।
मध्येऽङ्गुष्ठाङ्गुल्योः पित्र्यं मूले त्वङ्गुष्ठस्य ब्राह्मम् ॥ ९८ ॥
करमध्ये तु सौम्यं स्याद्वानप्रस्थस्त्ववरण्यगः ।
वैखानसोऽप्य[103b]थो भिक्षुर्भवेत्सान्यासिको यतिः ॥ ९९ ॥
पाराशरी च कर्मन्दी परिव्राण्मस्करी च सः ।
पारिरक्षक-निर्ग्रन्थ-पारिकाङ्क्षि-तपस्विनः ॥ १०० ॥
नीवरो रक्तवसन-परिव्राजक-तापसाः ।
साधन्तश्च भदन्तः स्यादथ वाचंयमो मुनिः ॥ १ ॥
तपःक्लेशसहो दान्तः शान्तः श्रान्तो जितेन्द्रियः ।
यतिर्यती स्थाण्डिलस्तु व्रतात्स्थण्डिलशायिनि ॥ २ ॥
द्वयातिगः सात्त्विकः स्याद्यो भवेद्विरजस्तमाः ।
ऋषयः सत्यवचसः सात्त्वन्तो ब्रह्मतत्पराः ॥ ३ ॥
योगाय यौ प्रभवतश्चिम्विमौ योग्य-यौगिकौ ।
पवितः प्रयतः पूतः पवित्रः पावनः शुचिः ।
मेध्यः पुण्योऽथ वाल्मीकि-वाल्मीक-कुशिनः कविः ॥ ४ ॥
प्राचेतसश्च वल्मीको मैत्रावरुण इत्यपि ।
त्रिशङ्कुयाजी गाधेयो विश्वामित्रश्च कौशिकः ॥ ५ ॥
व्यासस्तु माठरः कृष्णः कानीनो बादरायणः ।
पाराशर्यः सत्यवतीसूनुर्वैयासिकिः शुकः ॥ ६ ॥
व्यासमाता सत्यवती वासवी ग[104a]न्धकालिका ।
सालङ्कायनजा दाशेयी च योजनगन्धिका ॥ ७ ॥

---

5695 जितनेमि॰, उदूखल २
5697 कमंडलु २
5698 वृसी ३
5699=A K lines 1453-4 दैव १, ॰कार्य १
5700 पित्र्यं १, ब्राह्म १
5701 सौम्य १
5706 भदंत १७, मुनि २
5708 ॰यंती ७
5709 सात्विका २
5712 पवित्र for पवित
5713 पुण्यो ८
5714 ॰वरुण ७
5717 ॰सूनु ४
5719 ॰गन्धिका ६

कुशारणिस्तु दुर्वासाः शतानन्दस्तु गौतमः ।
राहुलो गौतमस्तस्य त्वहल्या कामिनी भवेत् ।
भवेद्याडिर्विन्ध्यवासी नन्दिनीतनयश्च सः ॥ ८ ॥
स्फोटायनस्तु कक्षीवान्पालकाप्यः करेणुभूः ।
कौटिल्यनामा चाणक्योऽशमिलो विष्णुगुप्तकः ॥ ९ ॥
अङ्गुलः पक्षिलः स्वामी कौण्डिन्यश्च स कथ्यते ।
उपव[र्षो]हलभृतिर्गोटिङ्गस्तु महाव्रती ॥ १० ॥
वात्स्यायनो मल्लिनागः कणादः कश्यपो मतः ।
याज्ञवल्क्यो यज्ञरात्रिर्योगीशो ब्रह्मवित्तमः ।
यास्को निरुक्तकारी स्यात्कृशाश्वो नटसूत्रकृत् ।
शालिहोत्रोऽश्विनीजन्मा तद्वेदा अङ्गिरा भृगुः ॥ ११ ॥
गर्गो नडो भरद्वाजः शङ्खो लिखित इत्यपि ।
अग्निवेशः सुश्रुतश्च स्वारणादिः पराशरः ॥ १२ ॥
गौतमश्च जरत्कारुरसितो वहवोऽपरे ।
गर्गस्यान[104b]न्तरापत्ये गार्गिर्नाडिर्न्न(ने)डस्य च ॥ १३ ॥
तयोस्तु गोत्रापत्ये स्याद्गार्ग्यो नाडायनः क्रमात् ।
गार्गी नाडायनी च स्यात्स्त्र्यपत्ये ह्यनयोः क्रमात् ।
पुमपत्ये तु गर्गस्य गार्ग्यायण उदीरितः ॥ १४ ॥
नाडायनिर्नडस्य स्यात्स्त्र्यपत्ये पूर्ववद्द्वयम् ।
स्याच्छौनकायनो वात्स्यः शौनकोऽन्य उदीरितः ॥ १५ ॥
शारद्वतायनो भृग्वपत्ये शारद्वतस्तयः ।
दार्भायणो भवेदाग्रायणो दार्भिः परः स्मृतः ॥ १६ ॥
बाभ्रव्यः कौशिकापत्ये स्याद्बाभ्रव्यायणी स्त्रियाम् ।

---

5720 दुर्वासाः २; गौतम' २
5721 गोतम २; °हिल्या १
5722 °तनय ३ श्च
5723 स्फोटामनस्तुकक्षीवा २ न्पा°; करेणुभुः २
5725 कौंडिन्य ७
5726 उपवहलभृति २। °व्रती २
5727 °नागः २; कस्यपो २
5728 °वितमः ४
5729 यस्के; °कारी २ स्यात्कशा.श्वो; °कृन् २
5730 °जन्मा २; अंगिरा १
5731 गर्गो १ नडो १ भरद्वाजः १ शंखो १ लिखित १
5732 °वेशः १; स्वारणादिः ३ पराशरः १
5733 गोतम ११ श्च; °त्कारु १ रसितो १
5734 गार्गि १ नाडि १
5735 °द्गार्ग्यो १; °यणः १
5737 पुत्रापत्ये; °यण १
5738 °यनि १; द्वयं १
5739 वात्स्यः २ शौनको १ न्य
5741 दार्भोयणो १; दार्भिः १

कौञ्जिः कुञ्जानन्तरो यः कौञ्जायन्योऽस्य गोत्रजः ॥ १७ ॥
वातण्ड्यः स्यादाङ्गिरसो वतण्डी तु स्त्र्यपत्यके ।
काप्य-बौध्यावाङ्गिरसौ कापेयो बौधिरन्यजः ।
वत्सापत्ये तु वैकर्णः कश्यपस्य त्वपत्यके ॥ १८ ॥
वैकर्णेयस्ततोऽन्यस्यापत्ये वैकर्णिरुच्यते ।
भार्गायणस्तु त्रैगर्तो भार्गिस्त्वितर ईरितः ॥ १९ ॥
गार्गीया गर्गशिष्याः स्युर्गर्गरूप्यं[105a]तदागतम् ।
गार्गीयं यद्गर्गहितं गार्ग्यायाः स्युर्विशेष्यगाः ॥ २० ॥
जारत्कारेय आस्तीकः स्याज्जारत्कारवश्च सः ।
भारद्वाजो भवेद्द्रोणः कृपीशो द्रुपदान्तकः ।
द्रौणिर्द्रौणायनिश्च स्यादश्वत्थामा कृपीसुतः ॥ २१ ॥
गोत्रान्तेभ्यस्तस्य वृन्दे क्लीबे स्युर्गार्ग्यकादयः ।
स्यार्षेयः प्रवरस्त्वस्ति(?) ते पुनर्यस्य पञ्च चेत् ।
पञ्चावत्ती स उक्तोऽथ सापिण्ड्यं साप्तपूरुषम् ॥ २२ ॥
मेधारुद्रः कालिदासः कालीदासश्च तिन्तिडः ।
भूगर्भो भवभूतिः स्याच्छ्रीकण्ठपदलाञ्छनः ॥ २३ ॥
उम्बेको विश्रुतश्चासौ शतलुम्पस्तु भारविः ।
संन्यासवत्यनशने पुमान्प्रायोऽथ यो व्रती ॥ २४ ॥
श्राद्धे न भुङ्क्ते सोऽश्राद्धभोजी स्याच्छ्राद्धिकः पुनः ।
श्राद्धी स्याल्लिङ्गवृत्तिस्तु भवेद्धर्मध्वजी तथा ॥ २५ ॥
वार्त्ताशी भोजनार्थं यो गोत्रादि वदति स्वकम् ।
उच्छिष्टभोजनो देवनैवेद्यबलिभोजनः ॥ २६ ॥
गुरु[105b]हा नरकीलः स्यान्मलोऽश्राद्धः सुरार्चने ।
पञ्चयज्ञपरिभ्रष्टो यो द्विजः स मलिम्लुचः ॥ २७ ॥

---

5743 कौंजिः १; °यन्यो १
5744 वातृंघ्य; °से वंत*तु
5745 काप्य १ बौध्या १; कापेयो १
5747 °र्णेय १; वैकर्णि १
5748 °यण १ स्तु; भार्गि १
5749 गार्गीया १; °रूप्यं १
5750 यागीयं १
5751 °व ३ थ
5755 आर्षेयः ( repeated ) प्रवर २ स्तु श्री for prior half.
5756 °वत्ती १ स उक्तोय सापिंन्वं १
5757 कालि° ( both times ); तितिडः ४
5759 विश्रुत ५; भारपिः २
5760 प्रायोर्थयो
5761 °भोत्री १ स्याच्छ्राद्धिकः
5762 थाद्धी २
5763 वार्त्तासी १
5764 °भोजनो १
5765 °कील: २ स्यान्मल्ले १
5766 मल-for पञ्च-

खरुर्निपिद्धैकरुचिर्वीरोज्झो न जुहोति यः ।
अग्निहोत्रच्छलयाच्चापरो वीरोपजीवकः ॥ २८ ॥
वीरविप्लावको जुह्वद्धनैः शूद्रसमाहृतैः ।
अनाश्रमी स्याद्द्विधुरो भानोस्तूदयनास्तयोः ॥ २९ ॥
सुप्तो भवेदभ्युदितोऽभिनिर्मुक्तश्च स क्रमात् ।
नग्नव्रता वेदबाह्याः सर्वे पाखण्डनामकाः ॥ ३० ॥
शैव ऊर्ध्वस्रोतसिकः शुद्धान्ती सिद्धमार्गिकः ।
पञ्चार्थिकः पाशुपतो नाकुलोऽथ महाव्रती ॥ ३१ ॥
तान्त्रिकः सोमसिद्धान्ती कापाली च विशेषदृक् ।
शाक्तो वामस्रोतसिकः कौल आन्वयिकोऽपि सः ॥ ३२ ॥
पूर्वाम्नायी तु महामार्गो भैरव्युपासको गदितः ।
वैष्णव एकायनकः स शाश्वतः पाञ्चरात्रिकश्चोक्तः ॥ ३३ ॥

इति ब्रह्मवर्गः ।

[106a] क्षत्रमस्त्री क्षत्रियः स्याद्राजन्यो बाहुजो विराट् ।
भार्यो द्वितीयवर्णश्च नाभिः क्षात्रं तु तस्य यत् ॥ १ ॥
राजा राट् पृथिवीशक्रो महीक्षित्पार्थिवो नृपः ।
मध्यलोकपतिर्भूभृत्प्रजानाथश्च भूपतिः ॥ २ ॥
गुपिलो जागृविः संपद्वरः संयद्वरोऽवसः ।
मूर्धाभिषिक्तो भूदेवो नरदेवोऽपि लोकपः ॥ ३ ॥
महिनं माहिनं राज्यमाधिराज्यं तु तन्महत् ।
प्रभावती तु प्रभुता तथैव प्रभविष्णुता ।
मण्डलेशो माण्डलिकः सामन्तो नृप इत्यपि ॥ ४ ॥
अधीश्वरोऽप्रतिरथो यं नमन्त्यखिला नृपाः ।
चक्रवर्ती सार्वभौमस्ते तु स्युर्भरतादयः ॥ ५ ॥

---

5767 खरु १; °र्नीपिद्धो १
5 68 °जीवकः १
5770 °द्विधुरो १
5771 °दितो १; °क्त १ श्च
5773 °मार्गिकः ४
5774 नकुलो ३
5776 °विशे ४
5777 °सको ३
5778 °रात्रिक ४७
इतिब्रह्मवर्गः ।

5780 क्षात्रं १; यतमृ for यत्
5783 गुपीलो
5784 लोकपः १०
5785 राज्य ३ माधिराज्यं १
5786 °विष्णुता ३
5787 नृप ३
5788 °रथो २
5789 °भौम २

ईजे यो राजसूयेन मण्डलेशोऽन्यभूपतीन् ।
आज्ञापयत्यसौ सम्राट् क्षत्रजातिस्तु तत्सुतः ॥ ६ ॥
साम्राज्योऽन्यस्तु साम्राजो विश्वराट् सर्वभूपतिः ।
सुराजा यः प्रजापोषी कुराजा तु प्रजाहरः ।
द्विषन्तं तापयन्राजा द्विषंतप उदीरितः ।
द्विषन्तीं तापय[106b]न्नेष द्विषतीतापनामकः ।
परंतपः परोत्तापी राजघो राजघातकः ।
श्वेतच्छत्रिक उक्तोऽसौ यः श्वेतच्छत्रमर्हति ।
एवं शत्रुंसहः शत्रुंतपाद्या नाम्नि मेयवत् ।
राजन्यकं राजकं च क्षत्रं राजगणे क्रमात् ।
राजन्यानां तु विषयो भवेद्राजन्यकः पुमान् ॥ ७ ॥
राज्ञस्त्विदं राजकीयं कथितं मेयलिङ्गकम् ।
स्यादिराजो मनुर्द्वन्द्वे विवस्वत्तनयोऽपि सः ।
मनायी च मनावी च मनुर्मनुनृपाङ्गना ॥ ८ ॥
मनूद्भवः स्यादिक्ष्वाकुरैक्ष्वाकस्तस्य नन्दनः ।
इक्ष्वाकवस्तु भूम्नि स्युरार्षभिप्रमुखाः पुनः ॥ ९ ॥
शलाकापुरुषा भूपाः पृथुः स्यादादिभूपतिः ।
वैन्यश्चाप्यथ मान्धाता युवनाश्वसुतो मतः ॥ १० ॥
कुवलाश्वो धुन्धुमारो हरिश्चन्द्रस्त्रिशङ्कुजः ।
पुरूरवा बौधिरैल उर्वशीरमणश्च सः ॥ ११ ॥
शाकुन्तलेयो भरतः स्यात्सर्वदमनोऽपि सः ।
दौष्यन्तिर्हैहयस्तु स्याद्दोः[107a]सहस्रभृदर्जुनः ॥ १२ ॥
कार्त्तिकेयोऽथाजमीढो धार्मिर्मोक्षणलिङ्गवान् ।

---

5791 सम्राट् १
5792 साम्राजो १
5793 कुराजा १
5794 द्विषंतप १
5795 °मप्रेष्यधिपती
5796 परंतप· १; राजघो १
5799 °न्यक. १ राजकं च १ क्षत्र १
5800 °न्यकः १
5801 °कीयं
5802 °तनयो ३
5803 मनु ३
5804 °रैक्ष्वाक १
5805 °कव १ स्तु
5806 °पुरुषा १
5807 वैन्य ३
5808 °मारो १
5809 °रमण ४
5810 °त्सर्वदम सर्वे दमः सोऽपि सः
5811 दौष्यन्ति ४
5812 °केयो ४१ राज°; °वान् १

※※※※※※※※ ऽजातशत्रुर्युधिष्ठिरः ।
धर्मपुत्रस्तपः पुत्रः शल्यारिः कङ्क इत्यपि ॥ १३ ॥
पृष्ठशृङ्गी भीमसेनो भीमो मारुतनन्दनः ।
वृकोदरो हिडिम्बेशो धृतराष्ट्रसुतान्तकः ॥ १४ ॥
बकारिर्मागधारिश्च गणकुल्कीचकान्तकः ।
किर्मीरारिश्चाथ पार्थः सव्यसाची धनंजयः ॥ १५ ॥
नरः कृष्णोऽर्जुनो राधावेधी फाल्गुन-फल्गुनौ ।
किरीटी विजयो जिष्णुः श्वेताश्वो हरिसारथिः ॥ १६ ॥
कपिध्वजश्च कर्णारिर्गुडाकेशश्च शक्रजः ।
किरातजेता ※※※※※※※※※※※ ।
सुभद्रेशश्च बीभत्सुस्तथा मध्यमपाण्डवः ॥ १७ ॥
गाण्डीवं गाण्डिवं न स्त्री धनुस्तस्य रथ. पुन॰ ।
नन्दिघोषोऽथ शङ्खोऽस्य देवदत्तः प्रकीर्त्तितः ।
भीमस्य पौण्ड्रः शङ्खः स्यान्नकुलस्तन्त्रिपालकः ।
ग्रन्थिकः सहदेव. स्यान्माद्रेयौ द्वाविमौ यमौ ॥ १९ ॥
विना यमाभ्या कौ[107b]न्तेयाः धर्मवाय्विन्द्रनन्दनाः ।
तापत्याः पाञ्चयश्च स्युरेते पञ्चापि पाण्डवाः ॥ २० ॥
तपाः कुन्ती पृथा च स्यान्मद्री माद्री समे उभे ।
पाञ्चाली द्रौपदी कृष्णा याज्ञसेनी च वेदिजा ॥ २१ ॥
भवेदुत्पलगन्धिश्च सैरन्ध्री नित्ययौवना ।
भीष्मः शातनवो गाङ्गो गाङ्गेयश्च पितामहः ॥ २२ ॥
गाङ्गायनिस्तथा देवव्रतः स्वच्छन्दजीवन. ।
धृतराष्ट्रस्त्वाम्बिकेयो धार्तराष्ट्रास्तु कौरवाः ॥ २३ ॥
कर्णो वैकर्तनोऽङ्गेशो राधेयश्च वृषापि स ।
कानीनोऽप्यस्य चापस्तु कालपृष्ठमुदीरितम् ॥ २४ ॥
सौभद्रस्त्वभिमन्यु' स्यात्परीक्षित्तूत्तरात्मज॰ ।

---

5814 वैरू ७
5818 °रारि ११ धायपार्थ , सव्यसची
5823 °पाण्ड्व २१
5824 गाण्डिवं २ न स्त्री
5825 °घोषो १, °दत्त १
5826 पौंद्र १, °पालक २
5827 °देव' २, माद्रेयौ १, यमो २
5829 तापात्या पाचय २
5830 पृथा २, माद्री २
5832 °यौवना ८
5834 °जीवन ८
5835 °केयो २, °राष्ट्रा१ स्तु
5837 कानीनो ६, °पृष्ठ १

पारीक्षितः सर्पसत्रव्रती च जनमेजयः ।
भम्भासारः श्रेणिकः स्यात्कुन्तलः शालिवाहनः ॥ २७ ॥
हालश्चाथो साहसाङ्को विक्रमादित्य इत्यपि ।
शकान्तकोऽथ श्रीहर्षो वत्सराज इति स्मृतः ॥ २८ ॥
महापद्मस्तु नन्दः स्याद[ 108a ]ग्निमित्रस्तु शूद्रकः ।
वृषलश्चन्द्रगुप्तः स्याद्बिन्दुसारस्तु तत्सुतः ॥ २९ ॥
शकटारो नन्दमन्त्री शाकश्चेति नृपाः परे ।
सर्वे रामप्रभृतयो मता मौखरजा नृपाः ॥ ३० ॥
कुरोरपत्यं क्षत्रं यत्तत्कौरव्यं बहूक्तिषु ।
कुरूणि ब्राह्मणास्त्वित्थं कौरव्या इति संमताः ॥ ३१ ॥
राजबीजी राजवंश्योऽथाभिजिद्भूपनन्दनः ।
आभिजित्यश्चाभिजितो भवेद्ग्रन्थिहरः पुनः ॥ ३२ ॥
मन्त्री त्वमात्य आमात्यः सचिवः सामवायिकः ।
धीसखो व्यापृतस्त्वन्य आयुक्तश्च नियोग्यपि ॥ ३३ ॥
स्यात्कर्मसचिवश्चाथ मुक्तव्यापारमन्त्रिणि ।
पात्रदीरो महामात्रः प्रधानान्यन्तिमे ध्रुवम् ॥ ३३ ॥
पुरोहितः पुरोधाः स्यान्नेपः सौवस्तिकश्च सः ।
द्रष्टा तु व्यवहाराणां प्राड्विवाकोऽक्षदर्शकः ॥ ३४ ॥
त्रिषु धर्माधिकाराणां धर्माध्यक्षश्च धार्मिकः ।
दौवारिको द्वारपालो द्वाः[108b]स्थो द्वाःस्थितदर्शकः ॥ ३५ ॥
प्रतीहारो वेत्रधर-वेत्र्युत्सारक-दण्डिनः ।
क्षत्ता चाथ प्रतीहारी द्वाःस्था दौवारिकी स्त्रियाम् ॥ ३६ ॥
रक्षिवर्गस्त्वनीकस्थो राजशिक्षाविचक्षणः ।
अध्यक्षोऽधिकृतस्तुल्यावधिकारो नियोजनम् ॥ ३७ ॥

---

5838 °मन्युः २
5840 श्रेणिकः २
5841 हाल ३
5842 °तको ३; °राज २
5843 नंदः २; शूद्रकः २
5844 °गुप्तः २
5845 शाक २
5846 मौखरजा १
5848 कौरव्या १
5850 °जितो २
5854 °मात्रः; °नान्यं २ न्ते १ तिमे ( Corrupt ) ध्रुवं
5855 °न्नेयकार १ पः सौवस्तिक ४
5856 °हाराणां प्रास्यात्प्रायदर्शिः स्येव २ द्विवाचो; °दर्शकः ४
5857 °काराग १
5858 दौवारिके; द्वाः स्थे, °दर्शकः ॥ ३५ ॥ ४ ॥
5860 क्षत्ता १०; °रिकी ३
5861 °क्षणः ३
5862 °कृत २

प्रक्रिया चाथ शुल्कोऽस्त्री देयं घट्टादिकेषु यत् ।
स्थायुकोऽधिकृतो ग्रामे गोपो ग्रामेषु भूरिषु ॥ ४० ॥
देशाध्यक्षो दैशिकः स्यादथ भौरिक-हैरिकौ ।
स्वर्णाध्यक्षो नैष्किकस्तु रूप्याध्यक्षोऽथ कौपिकः ॥ ४१ ॥
स्याद्भाण्डागारिकः कोषागारिकश्चाथ शौल्किकः ।
स्याच्छौल्कशालिकश्चाथ ह्याट्टिकश्चापिकर्मिकः ॥ ४२ ॥
स्थानाध्यक्षः स्थानिकः स्यात्सेनानीर्दण्डनायकः ।
सेनापतिश्चाथ दौःसाधिको दण्डाधिकारिणि ॥ ४३ ॥
स्यादन्तर्वैशिकश्चान्तर्वेश्मिकश्चावरोधिकः ।
शौद्धान्तिकान्तः पुरिकौ त्रिषु तु स्थायुका[का]दयः ॥ ४४ ॥
[109a] सौविदल्लाः कञ्चुकिनः स्थापत्याः सौविदाश्च ते ।
शण्ढः षण्ढो वर्षवरः सेवकस्तूपजीवकः ॥ ४५ ॥
अनुजीवी चोपजीवी स्यादर्थी च त्रिलिङ्गगाः ।
संवाहकोऽङ्गमर्दी स्याच्छायाकृच्छत्रधारकः ।
सेवा श्ववृत्तिर्दुर्वृत्तिरतिथी च निगद्यते ॥ ४६ ॥
विषयोऽनन्तरो राजा शत्रुर्मित्रमतः परम् ।
उदासीनः परतरः पार्ष्णिग्राहस्तु पृष्ठतः ॥ ४७ ॥
अमित्रः शात्रवः शत्रुर्द्विड् द्विषन्द्वेषणो रिपुः ।
परिपन्थी प्रत्यनीकः प्रतीपः परिपन्थिकः ॥ ४८ ॥
प्रत्यर्थी प्रत्यवस्थाता प्रतिपक्षः परोऽप्यरिः ।
दस्युः सपत्नोऽसहनो विरोद्धरुरु-दुर्हृदः ॥ ४९ ॥
वैरी वैरायमाणश्च विरोधी च विपक्षवत् ।
अभिघाती चाभिमातिर्जिघांसरात्यरातयः ॥ ५० ॥
भ्रातृव्यश्चाहितो(तः) सख्यङ् वयस्यः सवयाः सुहृत् ।
सजूः स्निग्धः सहचरः सखा मित्रं नपुंसकम् ॥ ५१ ॥

---

5866 °ध्यक्षो १; °ध्यक्षो २
5867 °गारिक ३
5868 °शालिक° ३ थाथ; °कर्मिक २
5869 स्थानिक २
5870 सेतापति ३; °कारिणि २
5871 °वंशिक° for °वैश्मिक°
5874 °वस्तप° for °वस्तुप
5875 °लिंगगा ३
5877 श्ववृत्तिर्दु २ र्वृत्तिरतिथी ४ च
5878 विषयानं°; शत्रु १ मित्र १
5879 परतर° २, पृष्ठात्त-
5883 °ओहसनो
5885 °साती जिघा°
5886 °श्चाहितो २३
5887 सख्यामित्रे

अजर्यं संगतं सख्यं सौहार्दं * [सौ]हृदं तथा ।
तथा साप्तपदीनं स्यान्मैत्री [109b] स्त्रीक्लीबयोर्भवेत् ॥ ५२ ॥
तारमैत्रं तु तत्सख्यं जन्मतारानुकूल्यजम् ।
अनुरोधोऽनुवृत्तिः स्त्री चरमे त्वनुवर्तनम् ॥ ५३ ॥ ५४ ॥
चरश्चारः स्पशो वार्तायनश्च प्रणिधिश्च सः ।
अवसर्पो मन्त्रवेत्ता हेरीको गूढपूरुषः ॥ ५५ ॥
यथार्हवर्णो विश्वस्तस्त्वाप्तः प्रत्ययितस्त्रिषु ।
स्वाम्यमात्य-सुहृत्कोश-राष्ट्र-दु*[र्ग]बलानि च ॥ ५६ ॥
राज्याङ्गानि प्रकृतयः पौराणा श्रेणयोऽपि च ।
तत्र स्वराष्ट्रचिन्ता स्यादावापस्त्वरिचिन्तनम् ॥ ५७ ॥
परिस्पन्दः परिकरः परिबर्हः परिच्छदः ।
परिग्रहः परीवारस्तन्त्रोपकरणे अपि ॥ ५८ ॥
संधिर्ना विग्रहो यानमासनं द्वैधमाश्रयः ।
षड्गुणाः शक्तयस्तिस्रः प्रभुत्वोत्साहमन्त्रजाः ॥ ५९ ॥
क्षयः स्थानं च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम् ।
स प्रतापः प्रभावश्च यत्तेजः कोशदण्डजम् ॥ ६० ॥
भेदो दण्डः साम दानमित्युपायचतुष्टयम् ।
भेदोप[110a]जापौ शास्तिः स्त्री * * * * * * * * ।
शास्तिः स्याद्भूपतेर्दण्डयमो दण्डश्च साहसम् ॥ ६१ ॥
दिशोदण्डस्तु दिग्दण्डो दम्यो दण्ड्यश्च मेघवत् ।
द्विपाद्यश्च त्रिपाद्यश्च दण्डो द्विस्त्रिगुणो हि यः ।
साम सान्त्वं सान्त्वनं च ढौकनप्राभृते समे ॥ ६२ ॥
कार्याय गुप्तं यद्देयं तत्र लञ्चो द्वयोर्भवेत् ।
उत्कोच आमिष कौशलिकं चात्र प्रकीर्तितम् ॥ ६३ ॥

5890 तत्सख; °ल्यजं ४
5891 °वृत्ति· २; °वर्तनं ३
5894 °वर्णो १०; °यित ३
5895 °दुर्बलानि
5896 राज्यागानि १ प्रकृतय १
5897 तंत्रं १; °दावाप १
5899 °करणे ८
5900 =AK I. 1504. संधि १ र्ना विग्रहो १; °मासने १; °श्रय· १
5901 =var. AK I. 1505 षड्गुणा· १ शक्तयः १ स्त्रिस्रः
5902 =AK I. 1506 स्थाने १ च शुद्धि १ श्च
5903 =AK I. 1507. प्रभाव १ श्च
5904 =AK I. 1508. भेदो १; साम १ दान १ मित्युपाय १
5905 °जापौ २
5907 द्विशोदंड १ स्तु; दंड्य २ श्च मंधवत्
5908 द्विपाद्य १ श्च त्रिपाद्य १ श्च दंडो १
5909 सान्त्वनं ३; °प्राभृते २
5911 कौशलिकं ४

उपहारस्तूपचार उपग्राह्यमुपायनम् ।
उपदानं चोपदा स्यादायस्त्वर्थागमो भवेत् ॥ ६४ ॥
आगतः शुल्कशालायास्त्विव्यसौ शौल्कशालिकः ।
एवं तैर्थः शौण्डिकश्च तीर्थादिभ्यः स आगतः ॥ ६५ ॥
करो बलिर्भागधेयी द्वयोर्धर्मोदितः पुनः ।
शौचाशौचपरिज्ञानममात्यानां मतोपधा ।
मायोपेक्षेन्द्रजालानि क्षुद्रोपाया अमी त्रयः ।
मृगयाक्षाः स्त्रियः पानं वाक्पारुष्यार्थदूषणे ॥ ६७ ॥
दण्डपारुष्यमित्येतद्धेयं व्यसनसप्तकम् ।
पौरुषं विक्रमः[110b]शौर्यं शौण्डीर्यं च पराक्रमः ॥ ६८ ॥
रहस्यालोचनं मन्त्रोऽषडक्षीणस्तदादिकः ।
यस्तृतीयाद्यविषयोऽषडक्षीणादयस्त्रिषु ।
छन्न-प्रच्छन्न-विजिन निःशलाक-विविक्तकाः ॥ ६९ ॥
उपह्वरोऽस्त्रियां क्लीबे केवलं च रहो रहम् ।
निर्मक्षिकं निर्जनं च क्लीबाव्ययमुपांशु तु ॥ ७० ॥
रहश्चालिङ्गमेकान्तं द्वंद्वहीनं प्रकीर्तितम् ।
अथानुरहसं त्र्यथा यद्रहोनुगतं भवेत् ॥ ७१ ॥
तथाऽवरहसं यत्स्याद्रहसोऽवगतं हि यत् ।
स्याचसरहस यत्स्याद्रहो ह्येव तापकम् ॥ ७२ ॥
एकान्तिकं रहस्यं च रहोजन्म विशेष्यवत् ।
विश्वासाश्वास-विश्रम्भ-प्रत्ययाः स्युः समार्थकाः ॥ ७३ ॥
श्रेषो यथोचिताङ्कशोऽथाश्रेषः कल्प आदिमे ।
न्यायो नयश्च नीतिः स्त्री देशरूपं समञ्जसम् ॥ ७४ ॥

5913 चोपदा ६; °गमो २
5914 °शालिकः १
5915 शौल्कि १ श्च
5916 °धेसी
5917 मतोपधा १
5918 क्षुद्रोपाया १
5920 °सप्तकं १
5921 पराक्रमः ५
5922 मंत्रे १ ऽषडक्षीण १
5924 छन्नप्रछन्न°
5927 °मेकांतं ११
5928 °रहस १
5929 तथा ३ वरहसं १
5930 स्यात्सरहसं १
5931 °जन्म ३
5932 °प्रत्ययाः ४
5933 श्रेयो १; आदिपुल्लिंगमे for आदिमे
5934 नीतिस्त्री त for नीतिः स्त्रीः समंजसं

.. युक्तमौपयिकं लभ्यं भजमानाभिनीतवत् ।
न्याय्यं प्राप्तं चोचितं चेत्यष्टौ त्रिषु च सांप्रतम् ॥ ७५ ॥
[111a]स्थाने वरं चाव्ययानि मर्यादा धारणा स्थितिः ।
संस्था चाज्ञा तु निर्देशो निदेशोऽप्यववादवत् ॥ ७६ ॥
आदेशोऽपि नियोगश्च शासनं शिष्टिरित्यपि ।
विप्रियागो-व्यलीकानि मन्तुः स्यादपराधवत् ॥ ७७ ॥
दण्ड्यस्त्रिष्वपराधार्हः समे तूद्दान-बन्धने ।
संदानं स्यात्संयमनं हननं च समार्थकम् ॥ ७८ ॥
प्रकीर्णकं चामरोऽस्त्री वालव्यजनमित्यपि ।
रोमगुच्छोऽथातपत्रं तपादातपवारणम् ॥ ७९ ॥
छत्रं त्रिष्वथ तद्राज्ञो नृपलक्ष्म समीरितम् ।
वङ्किका तु स्त्रियामेतत्केकिपक्षादिनिर्मितम् ।
मञ्चो भद्रासनं राजपीठं सिंहासनं तु तत् ॥ ८० ॥
सौवर्णे पादपीठं तु पदासनमथास्त्रियाम् ।
भृङ्गारः कनकालुः स्त्री भद्रकुम्भो भृतो घटः ॥ ८१ ॥
बलस्थितिर्निवेशः स्याच्छिबिरं च नपुंसके ।
हस्त्यश्व-रथ पादातं सेनाङ्गं स्याच्चतुष्टयम् ॥ ८२ ॥
हस्तीभो द्विपिबो द्विपो द्विरदनो नागः करी [111b] पुष्करी
　　पद्मी पेचकि-पीलु-कुम्भि-करटि-स्तम्बेरमानेकपाः ।
मातङ्गश्च मतङ्गजः सुरगजो दन्ती च दन्तावलो
　　वेतण्डश्च मितंगमोऽपि जलकाङ्क्षः सिन्धुरश्चन्दिरः ॥ ८३ ॥
दीर्घप्राण-विषाणि-वारण-महादाना द्विपायी जटी
　　स्याच्छूर्पश्रवणो विलोमरसनश्चोच्चैर्मृगः सामजः ॥ ८४ ॥
अन्तःस्वेदक-षष्टिहायन-महाकाया मतङ्गः कपिः
　　शुण्डालोऽपि च सूचिकाष्ठ-पिचिलौ शत्रिश्च गर्जोऽपि च ॥ ८५ ॥
स्त्रीलिङ्गेऽत्र न कुञ्जरो निगदितो द्वंद्वे करेणुस्तथा

5938 संस्था ४
5940 °यागो बालि भप्रिया वस्मतकानि for the prior half; °राध ५ वत्
5941 दंष्य १
5942 हननं १
5944 रोमगुच्छो ४; तपारामप°
5945 छत्रं ४; °लक्ष्म १
5946 वङ्किका १
5947 °पीठं १ सिंहासनं १
5948 पदासनं २ मथा°
594॰ cf. AK 1, 1532. °कुम्भो; घटः २
5950 °च्छिबिरं १
5955 वेतुण्डश्च
5960 करेणु २६

वशा वन्ध्यावतोका तु स्रवद्गर्भाथ संधिनी ।
आक्रान्ता वृषभेणाथ वेहद्या हि वृषोपगा ॥ ४३ ॥
गर्भोपघातिनी चाथ प्रष्ठौही यास्ति गर्भिणी ।
असिक्री च पलिक्री च या गौः स्याद्बालगर्भिणी ।
काल्योपसर्या प्रजने धेनुः स्यान्नवसूतिका ॥ ४४ ॥
धेनुंभव्या भविष्यन्ती धेनुर्या सुव्रता पुनः ।
सुखदो[136b]ह्याथ करटा यातिदुःखेन दुह्यते ॥ ४५ ॥
सुकरा स्यादचण्डी सा परेष्टुर्बहुसूतिका ।
गृष्टिः सकृत्प्रसूता या बहुदुग्धा तु बञ्जुला ॥ ४६ ॥
प्रौढवत्सा बष्कयिणी पीनोध्नी पीवरस्तनी ।
अत्यूध्नी बन्दितोध्नी स्याद्व्यूध्नी तु द्विगुणस्तनी ॥ ४७ ॥
॥द्रोणक्षीरा द्रोणदुग्धा धेनुष्या पीतदुग्धका ।
उत्तमर्णगृहे यावदृणमुक्ति स्थिता हि या ॥ ४८ ॥
अद्यश्वीना तु सा गौः स्याद्याद्यश्वो वा विजायते ।
सुपुच्छी तु सुपुच्छा स्याच्चित्रपुच्छा तु सा भवेत् ।
नित्यं कम्बरपुच्छ्येव व्याघ्रपुच्छी तु तादृशी ।
समांसमीना प्रत्यब्दं या सूतेऽस्मी तु मेघवत् ॥ ४९ ॥
॥गवां मले गोमयोऽस्त्री भूमिलेपनमित्यपि ।
सादो गोग्रन्थिरुपलोत्पले न स्त्री करीषवत् ।
पिष्टकं छगणं छाणं शुष्के गोमूत्र-गोजले ।
आपीनोऽस्त्री क्लीबमूधः कीलः पुष्पलकः शिवः ।
तिष्ठद्गु त्वव्ययं दोहसमयः क[137a]थितो गवाम् ।
स्यादायतीगवं तद्वद्यत्रागच्छन्ति धेनवः ॥ ५० ॥
दारागवोः पुनर्द्वंद्वे क्लीबे दारगवं भवेत् ।
नपुंसि दाम ※※※※※※※ समन्विता ।

6763 वध्या २, °द्गर्भा २ य सधिनी १
6766 °पलिक्नी २
6767 °सर्या २; धेनु १, °सूतिका २
6768 °भव्या १
6769 °दोह्या २
6770 दचडी २; परेष्ट १
6771 गृष्टि° १; वञ्जुला २
6772 °यिणी २, °स्तनी २
6773 °घ्नूध्नी १
6774 °दुग्धा २
6776 °श्वीना १
6777 सुपुच्छा २
6778 °पुच्छ्ये १ प
6779 °मीना १
6782 °गोजले २
6783 °मूध २, शिव २
6785 °तीगवं १
6786 °गव १

उद्दामानं तथोद्दामां प्राहुरुत्कृष्टदामनीम् ॥ ५१ ॥
पशुरज्जुर्दामनी स्यात्प्रजनोपसरौ समौ ।
द्रोणी गवादनी च स्त्री गवादेर्भक्ष्यभाजनम् ।
गोगोयुगं तु गोयुग्ममेवं स्यादुष्ट्रगोयुगम् ॥ ५२ ॥
गोपल्लवं गवां पल्लवं तद्वत्स्यादुष्ट्रपल्लवम् ।
अजः शुभोऽपि जाबालश्छगलश्छागलश्छगः ॥ ५३ ॥
वस्तः स्तभः पशुश्छागोऽथाजा छागी गलस्तनी ।
सर्वभक्षा च मञ्जाथ वर्करस्तरुणः पशुः ॥ ५४ ॥
वार्ध्रीणस * * * * पशुभेदाः प्रकीर्तिताः ।
अजथ्या*[सा]द्वैयलिङ्गा हिलाजाया अजस्य वा ॥ ५५ ॥
तथाविथ्याप्यथाजस्य भिषवस्याच्छागलेगिनः ।
आजकं स्वजवृन्देऽन्त्ये गेण्डस्तूर्णासुरेडकः ॥ ५६ ॥
अविर्हुडुरजो वृष्णिरुरणोर[137b]म-रोमशाः ।
मेषोऽस्त्री मेढ-संफाल-शृङ्गिणो अविको धनुः ॥ ५७ ॥
जालकिन्यविला वेणी कुररी चरजापि सा ।
पृष्ठशृङ्गो वनाजः स्यादेडिकः शिशुवाहकः ॥ ५८ ॥
ऊर्णा मेषादिलोम्नि स्त्री वृन्दे त्वौरभ्रकं मतम् ।
ऊर्णायास्तु विकारे स्यादौर्णमौर्णकमन्त्यवत् ।
कम्बल्यं कम्बलीया तु नामनि * * * * * ।
संघातोऽवेरविकटोऽविपटस्त्वविविस्तृतौ ॥ ५९ ॥
अविसोढं नाविदूरं भवेदविमरीसवत् ।
अविक्षीरे महाङ्गस्तु मय उष्ट्रः क्रमेलकः ॥ ६० ॥
मरुप्रियः केलिकीर्णो दीर्घग्रीवः शिशुः शलः ।
द्विककुद्द्रोलि-वासन्त-रवणाः कण्टकाशनः ॥ ६१ ॥

---

6788 °द्दामां २, °दामकी
6789 °र्दामनी १; °सरौ २
6790 °दनी २ स्त्री
6791 °युग्मं २; °युगं १
6792 °पल्लवं १, °ल्लवं १
6794 °श्छगो १*
6795 मंजा १; वर्कर १
6796 °णस १ भिदिशाप ति (corrupt)
6797 अजथ्या १
6798 °विथ्या १; °लेगिनः १
6800 अविर्हुडुरुमा
6802 रजा ६
6803 वनाजः १; °वाहकः २
6804 ऊर्णा १; °रभ्रकं १
6805 °मौर्णिक २
6806 कम्बल्यं १ कंबलीया १
6807 °विपटो १ °विपट १
6808 °मरीन २

दासेरकश्च मृतघ्नो चारणो दुर्गलङ्घनः ।
ललज्जिह्वो मया तृष्टा करभः स त्रिहायणः ॥ ६२ ॥
औष्ट्रकं तूष्ट्रवृन्देऽन्त्ये चिरमेही तु गर्दभः ॥ ६३ ॥
चक्रीवांश्चक्रवालश्च वालेयो रासभः खरः ।
शङ्कुकर्णो[138a]थाश्वतरे स्त्री वेगसर-वेसरौ ॥ ६४ ॥
सर्जूः स्त्री वाणिजवणिक्कुलाधारश्च नीवरः ।
क्रयिको नैगमः सार्थवाहो विक्रयिकश्च सः ।
पण्याजीवो ह्यापणिकः क्रयविक्रयिकोऽपि सः ।
वैदेहिको वणिकश्च क्रायिकः क्रयिकः क्रयी ॥ ६६ ॥
कन्यापालः पाल्वणिकान्याजीवश्च स स्मृतः ।
मूल्यं निमानं वस्नोऽस्त्री पुंस्यर्घोऽवक्रयस्तथा ।
नीवी परीणयो मूलं लाभोऽधिकफलं हि यत् ॥ ६७ ॥
वैलाभ्यं तु विलाभत्वं स्त्रियां गावे विलाभता ।
विलाभिमा पुंसि च स्याद्विलाभो मूलसंक्षयम् ।
उपधानं तूपनिधिर्न्यासोऽनाख्याय भाण्डगम् ।
वस्तु न्यस्तं परकरे स्थापितं तु प्रकाश्य यत् ।
स निक्षेपोऽथ तद्दानं प्रतिदानमुदीरितम् ।
क्रेतव्यमात्रके क्रेयं क्रय्यं न्यस्तं क्रयाय यत् ॥ ६९ ॥
पणितव्यं तु विक्रेयं पण्यं पन्यं च तादृशम् ।
विक्रीतं पणितं च स्यात्पनितं च पणायितम् ॥ ७० ॥
क्रे[138b]यादयोऽन्यलिङ्गाः स्युर्विपणो विक्रयः समौ ।
तुला तु तोलनामत्रं पात्रं पाण-घटौ समौ ॥ ७१ ॥
प्रमाहस्तु तुलासूत्रमुद्गीर्णं तोलितोचयते ।
तुलया समितं तुल्यमुद्गीर्णाद्यां विशेष्यगाः ।
त्रिषु क्रीतादिके गौपुच्छिकं क्रीतं हि तेन यत् ॥ ७१ ॥

---

6813 °जिह्वो २०
6814 औष्ट्रक १
6816 °वेसरौ ३
6817 °णिग्गुलाधाश्च
6820 वणिक १२
6822 °क्रय ५
6825 °द्विलाभो १
6826 °न्यासो ३
6928 सनिक्षेपो १; प्रतिदान १
6829 क्रेयं १ क्रय्यं १
6831 पनायितं ४
6832 विक्रय २
6833 तुला १
6834 प्रमाह १ स्तु, °तोच्यते ३
6835 तुल्य २

निष्केण नैष्किकं क्रीतं तथा परमनैष्किकम् ।
पाणिकं पादिकं च स्यात्प्राश्थिकं द्रौणिकं तथा ॥ ७२ ॥
षाष्टिकं स्यात्साप्ततिकं क्रीतं यत्स्यात्पणादिभिः ।
शत्यं च शतिकं चाथशतं स्याच्छतकः पुनः ॥ ७३ ॥
परिमाणं यस्य शतं पञ्चक्रीतं तु पञ्चकम् ।
कतिकं कतिभिः क्रीतं भवेत्तावतिकं पुनः ॥ ७४ ॥
तावत्कं चाथ विंशत्या क्रीतादि स्याच्च विंशकम् ।
असंज्ञायां कंसिकी तु कंसक्रीत्यर्द्धिकी तथा ॥ ७५ ॥
प्रतिकी कार्षापणिकी शौर्पं शौर्पिकमित्यपि ।
तथा द्विशूर्पकक्रीते द्विशूर्पं च द्विशौर्पिकम् ।
पाराय[139a]णिकमेवं स्याद्वैपारायणिकं तथा ।
द्विकार्षापणतुल्यं स्याद्विकार्षापणिकं * नौ ॥ ७६ ॥
शातमानं वैशतिकं साहस्रं वासनं पृथक् ।
अध्यर्द्धमतिकं चाध्यर्द्धकार्षापणिकं तथा ॥ ७७ ॥
अध्यर्द्धकार्षापणवदथ द्विशतमानवत् ।
द्विशातमानं संप्रोक्तमथ द्वैनिष्किकं मतम् ॥ ७८ ॥
द्विनिष्कं बहुनिष्कं तु बहुनैष्किकमुच्यते ।
द्वैविस्तिकं द्विविस्तं स्यात्त्रिविस्तादेरमुन्नयेत् ॥ ७९ ॥
अथोच्यतेऽध्यर्द्धविंशतिकीनमथ संमतम् ।
द्विखारीकं तथाध्यर्द्धखारिकाद्येवमुन्नयेत् ॥ ८० ॥
खारीकं च द्विपण्यं च द्विमाष्यं च द्विमाष्यवत् ।
अध्यर्द्धशाण्यमध्यर्द्धशाणं स्यात्तु द्विशाण्यवत् ॥ ७१ ॥

6837 °नैष्यिकं १
6838 पाणिकं १ पादिकं २; प्राश्थिकं १ द्रौणिकं १
6839 पाष्टिकं १; °तिकं १
6840 शतिकं १
6842 कतिकं १
6843 विंशकं १
6844 कंसिकी १; °र्द्धिकी १
6845 °पणिकी २ सौर्यं शौ°
6846 द्विशूर्पक°; द्विशूर्पं च द्विशौर्पिकं २
6848 °णिकं २
6849 शतमानं १ वै शतिकं १; वासनं १
6851 °पण २ वत्°
6852 द्विशातमानं २
6853 द्विनिष्कं २; °नैष्किक २
6854 द्विविस्तं २
6855 °कीनं १ मथ
6857 खारीकं १ द्विपण्य १ द्विमाष्यं च द्विमाष्य १ वत्
6858 °शाणं २

द्वैशाणं च द्विशाणं स्यादथास्य परिमाणकम् ।
स्यात्प्रस्थः प्रास्थिकोऽसौ स्यात्पञ्चकः पञ्चसंघकः ॥ ७२ ॥
पञ्चच पञ्चको वर्गो दशद्दशक इत्यपि ।
क्लीबे सत्यापनं[139b] सत्यंकारः सत्याकृतिः स्त्रियाम् ।
गणेये गणनीयं स्यात्संख्यातं गणितं त्रिषु ॥ ७३ ॥
संख्या त्वेकादिका सा तु संख्येयेष्वादश त्रिषु ।
विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः ॥ ७४ ॥
विंशत्यादेस्तु संख्यायां द्वित्वाद्यपि समुन्नयेत् ।
संख्यायामपि संख्येये त्र्यादयो भूम्नि संमता ।
नित्यं द्विवचनान्तो द्वावुभौ न तु तथोभयः ।
एकद्वित्रिचतुःपञ्चषट्सप्ताष्टनवक्रमात् ।
दशैकादश संप्रोक्ता द्वादश स्युस्त्रयोदश ॥ ७५ ॥
एकोनविंशतिस्त्वेका द्विविंशतिरिमे समे ।
द्विचत्वारिंशता तुल्या द्वाचत्वारिंशदित्यपि ॥ ७६ ॥
अष्टाचत्वारिंशदष्टचत्वारिंशसमार्थका ।
त्रयश्चत्वारिंशति स्युस्त्रिचत्वारिंशदित्यपि ॥ ७७ ॥
द्वापञ्चाशद्द्विपञ्चाशत्पष्टिस्तु स्यात्त्रिलिङ्गका ।
दशानां तु समीपे ये भवन्त्युपदशा हि ते ॥ ७८ ॥
आसन्नविंशा त्वेकोनविंशतिश्चैकविंशतिः ।
पञ्च षड्वा पञ्च[140a]षाः स्युर्द्वित्रा द्वौ च त्रयोऽपि च ।
सुचतुष्कश्च सुचतुरोऽचतुरस्तु विवर्जितः ॥ ७९ ॥
चतुर्भिः स्याद्द्विचतुरस्त्वय्यां तूपदशादयः ।
तयबन्तं नपुंसि स्यादथ पञ्चतयं भवेत् ॥ ८० ॥
स्युर्यस्य पञ्चावयवा द्वयी तु द्वितयी भवेत् ।
त्रितयी तु त्रयी चाथोभयी चैकादशं पुनः ॥ ८१ ॥

---

6859 द्विशाणं २
6860 प्रास्थिको १
6861 पंचको २; °द्दशक २
6862 °कृतिः २
6863 °नीयं २; गणितं २
6864 °दिका १
6868 °थोभयः
6869 एक १ द्वि १ त्रि १ चतुः १ पंच- १ षट् १
6870 °कादश १; द्वादश १; °दशः
6871 एकोन°; °शति २
6873 °रिंश २ समा°
6875 द्विपंचाश २ त्प°
6878 द्वित्रा १
6879 सुचतुरो १
6880 °द्विचतुरः २
6881 पंचतयं १
6882 द्वितयी २
6883 त्रयी २ चाथोभयी १ चैकादशं १

एकादशाधिकं यस्माच्छतं चापि सहस्रकम् ।
समानजातीयत्व एव प्रकृतिप्रत्ययार्थयोः ॥ ८२ ॥

त्रिंशं तु त्रिंशदधिकं शतं विंशं च तादृशम् ।
एकत्रिंशं चैकविंशं द्विम(त?)यं तु द्विमागवत् ॥ ८३ ॥

एकादशः पूरणे स्यात्पञ्चमः पञ्चपूरणः ।
षष्ठः षण्णां कतीनां तु पूरणः कतिथो मतः ॥ ८४ ॥

स्यात्कतिपयथोऽप्येवं चतुर्णां तु चतुर्थवत् ।
तुरीय-तुर्यौ पूगानां बहूनां च गणस्य च ॥ ८५ ॥

संघस्य पूरणे पूगतिथे बहुतिथस्तथा ।
क्रमाद्भवेद्गणतिथस्तथा संघतिथः पृथक् ॥ ८६ ॥

स्या[140b]द्विशतितमो विंशो विंशतेः पूरणो हि यः ।
यावतां तावतां यावति * * * * [ थ-तावति ]थौ क्रमात् ॥ ८७ ॥

द्वयोर्द्वितीयः संप्रोक्तस्त्रयाणां स्यात्तृतीयकः ।
एकषष्टस्त्वेकषष्टितमस्तत्पूरणो हि यः ॥ ८८ ॥

षष्टेः षष्टितमोऽप्येवं सहस्रतमकः पुनः ।
सहस्रपूरणोऽथैकसहस्रतम ईदृशः ॥ ८९ ॥

तथा शततमः प्रोक्तो यो षट्शततमस्तथा ।
अर्कं तु स्यात्परिच्छिन्नं कियत्तु कति संस्मृतम् ।
यावांस्तावांस्तथैतावान्यदादिपरिमाणके ॥ ९१ ॥

एकादशादयस्त्र्यां पङ्क्तिस्तु दशवाचिका ।
आब्धिभूतरसादीनां ज्ञेयाः संख्या हि लोकतः ॥ ९२ ॥

चतुरादिप्रकारे तु चतुर्धा पञ्चधा तथा ।
षोढा षड्धाथैकधा स्यादैकध्यं च द्विधा पुनः ॥ ९३ ॥

---

6886 त्रिंशं तु १; विंशं १
6887 एकत्रिंशं १; द्विमयं १
6888 करणे for पूरणे; पंचमः १
6889 षष्टः १
6890 °पयो १
6891 °तुर्यौ ३
6892 °तिथौ १ बहुतिथ १
6893 संघतीयः १
6894 विंशो २; करणो for पूरणो
6896 °द्वितीयः १
6897 °तम २
6898 °तमो १
6900 °तम १ तथा
6901 अर्कं १; °च्छिन्न २; कति २
6902 यावां १ स्ता
6904 °भूत १
6905 चतुर्धा १
6906 षढा २; °ध्यं २

द्वेधा द्वैधं त्रैधमेवं त्रिधा त्रेधा च तादृशम् ।
अव्ययं धान्तमेधान्तं ध्यमुञ् क्लीबे धमुञ्स्तथा ॥ ९४ ॥
त्रिषु भागे द्वितीयः स्याद्वै[141a]तीयीकश्च स स्मृतः ।
तार्तीयीकस्तृतीयः स्याद्विधायास्तु स चेद्भवेत् ॥ ९५ ॥
तदा द्वितीय एव स्याल्लघुः पाद्यः समावुभौ ।
द्वौ द्वौ पादौ द्विपदिका द्वे द्वे द्विशतिका शता ।
एवं चतुर्मोदकिकेत्यादयोऽपि स्त्रियां मताः ।
एकादितो दशगुणं यथोत्तरमुदीरितम् ॥ ९६ ॥
एकं दश त्वलिङ्गं स्याच्छतं त्वस्त्री सहस्रकम् ।
अस्त्री स्यादयुतं लक्षं न ना प्रयुतमस्त्रियाम् ॥ ९७ ॥
स्त्री कोटिरर्बुदं त्वस्त्री स्यादब्जं खर्वमन्तिमे ।
निखर्वं च महापद्मं शङ्कुर्द्वन्द्वेऽथ वारिधिः ॥ ९८ ॥
अन्त्यं मध्यं परार्द्धं स्यान्न संख्यास्ति ततः परम् ।
असंख्यद्वीपवाद्यादि पुद्गलात्माद्यनन्तकम् ॥ ९९ ॥
परःशतं परोलक्षं यच्च ❋ [ता]दिकतः परम् ।
क्लीबाव्ययं भवेत्पारे परार्द्धं तस्य पारगम् ॥ १०० ॥
पोतुः स्यात्पौतवाध्यक्षो मेयवन्मानशोध्यकः ।
ऊर्ध्वमानं किलोन्मानं प्रतिमानं च कथ्यते ॥ १ ॥
[141b]आयामस्तु प्रमाणं स्यात्परिमाणं तु सर्वतः ।
तुलाद्यैः पौतवं मानं द्रुवयं कुडवादिभिः ॥ २ ॥
पाय्यं हस्तादिभिस्तत्र वंशी तु त्रसरेणुकः ।
षड्वंशीभिर्मरीचिः स्यात्ताभिः षड्भिश्च राजिका ॥ ३ ॥
त्रिराजिकः सर्षपोऽथ यवोऽष्टाभिश्च सर्षपैः ।
गुञ्जा चतुर्यवा तास्तु पञ्च स्युर्माषकोऽस्त्रियाम् ॥ ४ ॥

---

6907 द्वैधं ३; त्रेधा ३
6909 °यीक २ थ
6910 तार्तीयस्तृतीयः २
6911 °तीय १
6912 °दिका १; द्वैद्वैद्विशतिका १
6913 °दिके १ स्या°
6915 दश, १
6916 °द्युतं १; प्रयुत २
6917 कोटि १ खर्बुदं १; दब्जं १ खर्वं १
6918 निखर्वं १; °पद्मं १ शंक २
6919 अंत्यं १ मध्यं १ परार्धं १
6921 परःशतं १
6922 परार्द्धं १
6923 °वाध्यक्षो २
6925 प्रमाणं २
6926 पौतवं १; द्रुवयं
6927 पाय्यं १
6928 °मरीचिः १; राजिका १
6929 सर्षपो २ थ यवो १
6930 °र्षका २

धान्यको हेममाषोऽस्त्री स्यात्तत्र हेम नपुंसके ।
द्वे कृष्णले रूप्यमाषस्तथा धान्यकणा दश ।
केचित्तु सप्तगुञ्जाभिर्माषकः परिकीर्त्यते ।
चतुर्माषस्तु धरणः शाणष्टङ्कश्च न स्त्रियाम् ।
निष्कोऽपि न स्त्री गद्याणो माषकैः पङ्क्तिरीरितः । 693
क्षुद्रको द्रङ्क्षणः कोलो वटकश्च[स्त्व?]ष्टयुग्मकम् ॥ ५ ॥
कोलद्वयं तु कर्षोऽस्त्री स्यादक्षः पाणिमानिका ।
तिन्दुकं स्यात्पाणितलं किंचित्पाणि(:)पिचुश्च सः ॥ ६ ॥
बिडालपदकं क्लीबे स्त्रिया षोडशिका मता ।
करमध्यो हंसपदोदुम्बरे कवलग्रहः ॥ ७ ॥ 694
सुवर्णको बिस्तो[142a] हेमोक्षे कर्षाभ्यां शुक्तिरष्टमी ।
शुक्तिद्वयं पलं मुष्टिश्चतुर्थी षोडशी वशा (?) ॥ ८ ॥
प्रकुञ्चो विचमात्रं च हेम्नस्तत्कुरुबिस्तकः ।
रूप्य-माषौ षोडशभिर्धरणो राजतो भवेत् ॥ ९ ॥
शतमानं तु न स्त्री स्याद्दशती राजतं पलम् । 694
पलद्वयं तु प्रसृतः प्रसृतिः स्त्री च कथ्यते ॥ १० ॥
प्रसृतिभ्यामञ्जलिः स्यात्कुडवोऽर्द्धशरावकः ।
अष्टमानं च कुडवः सेटकः कुटपश्च सः ॥ ११ ॥
कुडवौ द्वौ सरावोऽस्त्री प्रस्थोऽस्त्री तौ च मानिका ।
त्रिष्वाढकश्चतुःप्रस्थो द्रोणोऽस्त्री चतुराढकः ॥ १२ ॥ 695
नल्वणः कलशस्त्र्यां राशिर्नोन्मनमन्तिमे ।
द्रोणाभ्या शूर्पकुम्भौ च[च] चतुःषष्टिशरावकः ॥ १३ ॥
शूर्पाभ्यां तु भवेद्द्रोणी गोणी स्त्री च वहो नरि ।
गोणीभिः पञ्चभिः क्रीते पञ्चगोणिर्विशेष्यवत् ।
द्रोण्यश्चतस्रः खारी स्यात्पलानां तु शतं तुला । 695
ऊर्णापलशते तु स्यात्कम्बलं मिथुने न तत् ॥ १४ ॥

6931 हेममषो, हेम ४
6932 °माष १
6935 निष्को ५
6936 क्षुद्रो for क्षुद्रको, वंटक ४ ष्ट°
6940 °ग्रह° ३
6941 °णेके ४ बिस्तो २; °रष्टमी २
6943 °विचमार्द्र ७
6944 राजतो १
6945 दशने, पलं २
6946 प्रसति २
6947 °मञ्जलि
6948 सेटक १ कुटमश्च स .१
6949 सरावोऽ १ स्त्री
6950 °ढक १ श्चतु प्रस्थो २
6951 °न्मान ६
6952 °शरावक ३
6953 न ३ रि
6954 °गोणि १
6955 तुल १
6956 त्कवलं २

स्याच्चु[142b]लविंशतिर्भार आचितो दशभारकः ।
शाकटीनः ॐ ॐ ॐ [शाकट]श्च शलाटश्चाचितोऽपि सः ॥ १५ ॥
स्याद्या ॐ [व ?]हारिकद्रव्ये नाणकं न स्त्रियां नरि ।
भागस्तु रूप्यकस्यार्द्धं ॐ ॐ ॐ ॐ ॐ ॐ ॐ ॐ ॥ १६ ॥
स जातरूपः सौवर्णो राजतः कलधौतकः ।
दीनारस्य तु भागे स्याद्दाणको नरलिङ्गकः ।
ॐ ॐ [पण-]कर्षोपणावस्त्री कार्षिकस्ताम्रिकः पणः ॥ ११७ ॥
पणश्चतुष्काकिणीको द्रम्मः षोडशभिः पणैः ।
निष्कोऽस्त्री षोडशद्रम्मास्त्रिषु भागस्य वृद्धिमत् ॥ १८ ॥
भाग्यं च भागिकं स्त्री तु विंशत्यादिर्हि भागिका ।
द्विखारं तु द्विखारि स्यात्खारिद्वयसमित्यपि ॥ १९ ॥
स्त्रियां तु खारीद्वयसी तथा स्यादर्द्धखारवत् ।
अर्द्धखारि च यत्खारी खार्यर्द्धादिप्रमाणकम् ॥ २० ॥
द्रव्यं द्युम्नं वित्तं रुक्थं मघं रिक्थम् ।
स्वः स्वापतेय-वसुनी द्रविणं न स्त्री न राः क्लीबे ॥ २१ ॥
अर्थो विभवो लभसो नरि न स्त्री स्वो हिरण्य-दाये च ।
[143a]धनमप्यस्त्री शेवं पुनरन्त्ये स्वाप्यविन्नो स्यात् ॥ २२ ॥
धनवान्धनिको हिरण्यवो-
ऽप्ययमाढ्योऽपि धनीभ्य ऋद्धिमान् ।
अथ लक्ष्मण ईरितः श्रिया
सहितः श्लील उदीरितोऽपि सः ॥ २३ ॥
च्व्यर्थे स्याच्च्वीकरणं यस्त्वाढ्यो न भूतपूर्वः स्यात् ।
आढ्यचर एष धनको हिरण्यकोऽसौ धनादिकामो यः ॥ २४ ॥
केशवचरं च केशवरूप्यं चोक्तं गवादिवित्तं यत् ।
स्यात्केशवस्य पूर्वं भूतं धनवन्मुखास्त्र्याम् ॥ २२५ ॥

इति वैश्यवर्गः ।

---

6957 °भार १
6958 °श्चाचितो ४
6960 भाग १
6961 सौवर्णो २; कलधौतकः २
6962 °द्राणको १
6963 कार्षिक १ ताम्रिक १ निष्पण ७
6965 निष्को १; द्रम्
  °भर्हि २

6967 °द्वयस ३
6973 धन १८
6975 ऋद्धिमान् ६
6977 श्लीलः २
6978 भूतनपूर्वः for न भूतपूर्वः
6979 धनको १ हिरण्यको १ सौ
  °रूप्यं २

इति वैश्यवर्गः ।

शूद्रो जघन्यजः पज्जो वृषलोऽवरवर्णको(कः) ।
पद्योऽन्त्यवर्णोऽप्युक्तोऽथ ग्रामकूटो महत्तरः ॥ १ ॥
ते तु मूर्धावसिक्तादा रथकृन्मिश्रजातयः ।
क्षत्रियायां द्विजान्मूर्धावसिक्तोऽम्बष्ठकः पुनः ॥ २ ॥
वैश्यायां स्तः पारशव-निषादौ शूद्रयोषिति ।
माहिष्यो विट्स्त्रियां क्षत्रादुग्रस्तु वृषलस्त्रियाम् ॥ ३ ॥
शूद्र्यां तु करणो वैश्यात्सूतः क्षत्राद्विजस्त्रियाम् ।
[143b] वैश्याद्वैदेहिकस्तस्यां चाण्डालः शूद्रतोऽपि च ॥ ४ ॥
क्षत्र्यां वैश्यान्मागधः स्यात्क्षत्ता स्याच्छूद्रतः सुतः ।
वैश्यायां शूद्रजन्मायोगवोऽमी द्वादश स्मृताः ॥ ५ ॥
[माहिष्याद्रथकारः] स्यात्करण्यां यस्य संभवः ।
कारिः कारुश्च कुलुश्च शिल्पी च प्रकृतिः स्त्रियाम् ॥ ६ ॥
द्वयोः श्रेणिस्तद्गणः स्यादाम्वष्ठ्याम्बिष्ठनन्दनः ।
कुलजस्तु कुलश्रेष्ठी कला-विज्ञान-शिल्पकाः ॥ ७ ॥
लेखाधिकारी कायस्थः पञ्जिकाकार इत्यपि ।
मालाकारो मालिकः स्यात्पुष्पाजीवस्तु पुष्पलूः ॥
पुष्पलावी कुलालस्तु मृत्करो भरटोऽपि सः ॥ ८ ॥
कुम्भकारो दण्डभृच्च स्तो दार्दुरिक-चाक्रिकौ ।
कुलालचक्रं दण्डारः पलगण्डस्तु लेपकः ॥ ९ ॥
तन्तुवायः कुविन्दः स्यात्तन्तुवापः स्वविस्तथा ।
तसर-त्रसरौ सूत्रवेष्टे तर्कुस्तु कर्त्तकः ॥ १० ॥
सल्लोल-तर्कौ तर्काटी तर्कला च सहापि सा ।
साधनं यत्कर्तनस्य नर्त्तना तर्कु[144a]पीठिका ॥ ११ ॥

---

6983 °वर्णो २; प्राम्यकूरो for ग्रामकूटो; महत्तरः २
6984 =AC. 895*ab*.
6985 Cf. AC. 895*cd*. °सिक्तो १ बष्टक॰ १
6986 °निषादी ३
6987 माहिष्यो १; °दुग्र १ स्तु
6988 करणो १; सूतः १
6989 चांडालः १
6990 क्षत्ता १
6991 °गवो १ मी
6992 क्षत्र्यां वैश्यान्मागधः १ for माहिष्याद्रथकारः. करिण्या for करण्यां
6993 प्रकृति॰ ५
6994 श्रेणि १; °दाबष्ठ्यां १ मष्ठ°
6995 °श्रेष्ठी २
6996 °कार ३
6997 मालिकः २
6998 पुष्पलावी ३
7000 दंडार १
7002 सूत्रवेष्टे ३
7004 °पीठिका ॥ ११।२

स्यात्पिञ्जनं विहननं तूलस्फोटनकार्मुकम् ।
वाणिर्व्यूतिः स्त्रियौ न स्त्री पुस्तं लेप्यादिकर्म च ।
न स्त्री वेमा वानदण्डस्तन्तुकाष्ठं तुरी स्त्रियाम् ।
तुन्नवायस्तन्तुवायः सौचिकश्च स्रविश्च सः ॥ १३ ॥
द्रव्यं तु तन्तुवायस्य कुविन्दैर्नरि निगद्यते ।
कृपाणी कर्त्तरी कल्पन्यपि सूची तु सेवनी ।
सूचिसूत्रं पिप्पलकं सेवनं सीवनं समे ॥ १४ ॥
स्त्रियां स्यूतिरथो तैली धूसरश्चाक्रिकोऽपि सः ।
परञ्जं तैलयन्त्रं स्यात्पण्डाली तैलमानिका ॥ १५ ॥
तैलपात्रं कूपकः स्याद्गङ्गाजीवस्तु चित्रकृत् ।
भवेच्चौलिक्रिकश्चाथ शस्त्रमार्जोऽसिधावकः ॥ १६ ॥
शाणाजीवो भ्रमासक्तः क्ष्णवनं तेजनं समम् ॥ १७ ॥
व्योकारो लोहकारः स्यात्कर्मारो लोहघातकः ।
गुहेरोऽथास्त्रियां कूटमयोघनक इत्यपि ॥ १८ ॥
व्रश्चनः पत्रपरशुरिषीका तूलिकेषिके ।
इषीकतूलं द्वंद्वे स्यादिषीकातूल्योरपि ॥ १९ ॥
नाडि[144b]धमः स्वर्णकारः कलादः पश्यतोहरः ।
हेमलो मुष्टिकृत्स्वर्णकारोऽथ निकषः कषः ॥ २० ॥
ओकषो हेमलं शाणो द्वंद्वे स्यान्निकषोपलः ।
आकर्षे कुशलो मेघलिङ्ग आकर्षकः स्मृतः ॥ २१ ॥
तैजसावर्तनी मूषा कुन्दं तर्क-भ्रमौ नरि ।
आस्फोटनी वेधनिका संदंशः कङ्कवक्त्रकः ॥ २२ ॥
मणिकारो वैकटिकोऽथो काम्बविक-शाङ्खिकौ ।
करंधमी कांस्यकारः शौल्बिकस्ताम्रकुट्टकः ॥ २३ ॥

---

7005 विहननं २
7006 °र्व्यूति ३; °कर्म २
7007 °दंड २; तुरी २
7008 °वास for °वाय°; °स्थवि ४ थ
7010 कल्पन्य ३ पि
7011 पिप्पलकं २
7012 स्यूति ३
7013 °यंत्रं ३; °मानिका २
7014 कूपकः २
7015 °क्रिक ३
7016 °सक्त ४; तेजनं २
7018 गुहेरो ५; °घनक २
7019 °परशु २
7020 °तूलं १
7023 °षोपल: ७
7024 आकर्षक: १
7025 मूषा २: °भ्रमौ २ नरि २
7026 वेधनिका २
7027 वैकटिको २; °शांखिकौ २
7028 °कारः २

तक्षा तु वर्धकिस्त्वष्टा रथकारश्च काष्ठतट् ।
स्थपतिर्ग्रामतक्षस्तु ग्रामाधीनो हि वर्धकिः ॥ २४ ॥
स्वतन्त्रः कौटतक्षोऽथ वासी वाशी च तक्षणी ।
वृक्षभित्ककचस्त्वस्त्री करपत्रकमन्तिमे ।
अयानयीनः शारा स्याद्वयोः साफल्यौलिगः ॥ २५ ॥
स उद्घनो यत्र काष्ठे काष्ठं निक्षिप्य तक्ष्यते ।
वृक्षादनो वृक्षभेदी टङ्कोऽस्त्री भावदारकः ॥ २६ ॥
निर्णेजकः स्याद्रजको धावकः कर्मकीलकः ।
[145a]मर्जूरथ स्याद्विट्सारी विट्किरः कुणपश्च सः ।
क्षुरमर्द्दी क्षुरी मुण्डी चण्डिलान्तावसायिनौ ॥ २७ ॥
दिवाकीर्त्तिर्नापितश्च क्षुरो नापितशस्त्रकम् ।
वपनं मुण्डनं क्षौरं तथैव परिवापणम् ॥ २८ ॥
नखलु स्यान्नखच्छेदि नाराची त्वेषणी स्त्रियाम् ।
अपत्ये कुम्भकारादेः कौम्भकार्यो भवेत्तथा ।
कौम्भकारिस्तान्तुवाय्यस्तान्तुवायिरिमौ समौ ।
सदृशौ ताक्षण-ताक्षण्यौ नापिन्यो नापितायनिः ।
देवाजीवो देवलको देवागारिक इत्यपि ।
जाबालः स्यादजाजीवः सोऽजपालश्च कीर्त्तितः ।
जीवान्तकः शाकुनिकः पाक्षिकोऽप्यथ सौनिकः ॥ ३१ ॥
वैतंसिकः कौटिकश्च मांसिको मांसविक्रयी ।
स्यान्मार्गिको हारिणिकोऽथैवं सौकरिकादयः ॥ ३२ ॥
उन्माथः कूटयन्त्रं स्याद्वागुरा मृगजालिका ।
जालिकः स्याद्वागुरिकोऽथावपातावटौ समौ ॥ ३३ ॥

---

7030 °तक्ष १ स्तु
7031 °तक्षौ १
7032 वृक्षभि १ त्क°; °पत्रक ३
7033 °यौलिगः ३
7034 =AC. 919*ab*. उद्घनो १
7035 Cf. AC. 919*cd*. °भेदी २; °दारकः २
7039 °र्नापित ७ क्षुरो १
7040 °वापणं ४
7041 °च्छेदि १; त्वेषणी २
7042 कौम्भकार्यौ
7043 कौम्भकारी २; °वायि २
7044 °नानापिन्यौ for नापिन्यो
7045 °गारिक ३
7046 °पाल ३ श्च
7047 पाक्षिको ३
7048 °विक्रयी २
7049 °कोऽ २
7050 स्या २ द्वा°; °जा १ लिका २
7051 °रिको २; °वटौ २.

पाशकश्चैव पाशो यस्तथाकर्ष[145b]श्च ईरितः।
आकर्षकस्तत्कुशलः पाश्या स्त्री पाशसंहतौ ।
पाशाकर्पौ वन्ध-वल्गे शुल्व-शुम्बे वटारकः ।
गुणः स्त्रियौ रज्जु-तन्त्र्यौ वटी त्रिप्वथ सा यदि ॥ ३४ ॥
पाणिभ्यां सृज्यते पाणिसर्या संकीर्तिता तदा ।
वार्त्तावहो वीवधिको भवेद्विवधिकश्च सः ॥ ३५ ॥
तथा वैवधिकः स्त्री तु तादृग्वीवधिकी मता ।
बद्धशिक्ये तूभयतः स्कन्धवाह्ये हि दारुणि ॥ ३६ ॥
वीवधो विवधश्चोभौ पर्याहारे समार्थकौ ।
विहंगिका भाक्ष[र]यष्टिः कथिता च विहंगमा ॥ ३७ ॥
तदालम्बि तु शिक्यं स्यात्काचो न स्यङ्कटोऽस्त्रियाम् ।
भारिको भारवाहः स्याद्भृतकस्तु भरण्यभुक् ।
तथा कर्मकरो वैतनिकोऽपि धमको(?)ऽथ सः ।
भृतिं विना कर्मकारोऽथ भरण्यं च वेतनम् ।
कर्मण्यं भर्म मूल्यं च भरणं निष्क्रयः पणः ॥ ३९ ॥
निर्वेशः स्त्री तु भृत्या स्याद्धर्मण्या च भृतिर्विधा ॥ ३३ ॥
वेश्याभृतिर्भवेद्भोगोऽथ भृत्यो दासन्चे[146a]टकौ ॥ ४० ॥
भैष्य-दासेर-दासेय-नियोज्य-परिचारकाः ।
पराचित-परिस्कन्द-भुजिष्य-परिकर्मिणः ॥ ४१ ॥
डिङ्गरः किंकरो गोप्य-परजात-पैरधिताः ।
प्रेष्यः श्लिकुश्चाथ नीचो विवर्णश्च पृथग्जनः ॥ ४२ ॥
इतरः पामरो मर्मरीकः प्राकृत-बर्बरौ ।
क्षुधुनो यवनो म्लेच्छो मातङ्गस्तु जनंगमः ।
अन्तावसायी श्वपचः श्वपाको निष्ठ्य-नाहलौ ।
अन्तेवासी दिवाकीर्तिः पुल्कसः प्लव इत्यपि ॥ ४४ ॥

7052 पाशश्च: चैव; °पैश्च १
7053 आकर्पक १
7055 वटी ७
7056 °सर्पा १
7058 वैवधिक ३; °धिकी १
7060 विवध २; समाप्यकौ
7061 विहंगमा ३
7062 °यंकटौ ३
7063 °वाहः २
7064 °निकोपिधमको ४ थ
7065 °कारो १
7068 °द्भोगो १
7071 डिकरः
7072 श्लिकु १८
7073 °बर्बरौ ८
7074 म्लेच्छो ३

समौ चाण्डाल-चण्डालौ निपादश्च निपादिवत् ।
चाण्डालकिस्तु चण्डालपुत्रो नैषादकिस्तथा ॥ ४६ ॥
पुलिन्दा नाहला निष्ठ्याः शबरा वरुडा भुराः ।
मेदा भिल्लाः किराताश्च सर्वेऽपि म्लेच्छजातयः ॥ ४७ ॥
पादूकृच्चर्मकारः स्यात्स्त्री तूपानच्च पादुका ।
पन्नद्धा स्यात्प्राणिहिता पादूः पादत्रमित्यपि ॥ ४८ ॥
आबद्धा तु पदं सानुपदीना परिकीर्तिता ।
नध्री नर्ध्रो वरत्रा च*[व]ध्री वर्ध्रो च नध्र[146b]कः ॥ ४९ ॥
सनंगव्या तदर्था सा सनंगुश्चर्मणोत्रि(मि?)दि ।
साचर्मभेदिनी धारा द्वयोश्चर्मप्रभेदिका ॥ ५० ॥
व्याधो मृगवधाजीवो लुब्धको मृगयुः पुमान् ।
पालिशं मृगहिंसा भूः श्यैनंपाता पुनः स्त्रियाम् ।
पापर्द्धिर्मृगयाऽऽखेटो मृगव्यां क्लीबयोषितोः ॥ ४८ ॥
आच्छोदनं कुकुरस्तु कुकुरः कूकुरः शुनः ।
शुनिश्च शुनकः श्वानश्वास्थिभुग्भुग्नवालधिः ॥ ४९ ॥
कौलेयकः सारमेयो मण्डली रात्रिजागरः ।
रथ्यामृगश्च भषको रतशायी रतान्दुकः ॥ ५० ॥
रतकीलो ललजिह्वो जिह्वालिट् च रतव्रणः ।
शालावृको दतिहरिर्वाताण्डो मृगदंशकः ॥ ५१ ॥
उन्मत्तोऽसावलर्कः स्याद्विश्वकद्रुर्मृगव्यवित् ।
सरमा तु शुनी प्रोक्ता शुनारोऽस्त्री शुनीपयः ॥ ५४ ॥
शुनःपुच्छादयो नाम्नि शुनीं पाता शुनिंधयः ।
शौवः कुकुरसंकोच[:]शून्यं शुन्यं शुने हितम् ।
शुनःपुच्छादयस्त्रय्यां कपाटघ्नः पुनर्मतः ।
चोरश्चौरस्त[147a]स्करः स्यादैकागारिक-मोषकौ ।
प्रतिरोधि-परास्कन्दि-पाटच्चर- मलिम्लुचाः ॥ ५५ ॥

---

7077 निपादिवत् १५
7078 °दकि ३
7079 नाहला १ निष्ठ्या १ शबरा १ वरुडा १ भुरा १
7080 मेदा १ भिल्ला १ किराता १
7081 °कार २
7082 पादू° २५ पादत्र ६
7083 °पदीना १
7085 सनंगु ७
7088 पालिशं १
7089 ऽऽखेटो
7090 आच्छोदनं १
7091 श्वान ४
7096 °वर्कः १; °कद्रु १
7097 शुनी २, शुनिपय
7098 शुनिंधय १
7099 शौव १, शुन्य ३

स्यात्पारिपन्थिकः कन्नूः कुम्भिलः शङ्कितोऽपि सः ।
सुरङ्गादिचरः स्तेनः स्तेनश्चोभौ न योषिति ॥ ५६ ॥
तद्भावे चौरिका चौर्यं स्तेयं स्तैन्यं च चौरिकम् ।
लोप्त्रं त्वपहृतं द्रव्यं चौरी चोरी च तत्स्त्रियाम् ॥ ५७ ॥
पानध्वजी पानवणिक् शौण्डिको मण्डहारकः ।
पानध्वजो वारिवास-कल्यपालासुतीवलाः ॥ ५८ ॥
सुराजीवोऽपि मद्यं तु कश्यं स्यात्कापिशायनम् ।
मधु कल्यं न ना हाला वारुणी च हलिप्रिया ॥ ५९ ॥
मदयित्नुश्च मदना मदिष्ठा मदिरा इरा ।
परिस्रुता कामसखी परिस्रुद्देवनिर्मिता ॥ ६० ॥
गन्धोत्तमा स्वादुरसा प्रसन्नाम्भोधिजा न ना ।
कादम्बरी द्वयोः शुण्डानुतर्षे मण्डमस्त्रियाम् ।
द्राक्षाकृते तु मद्ये स्याद्धारहूरं च कापिशम् ॥ ६१ ॥
मार्द्वीकं चाथ न स्त्री स्यात्सीधु मैरेयमासवम् ॥ ४३ ॥
पक्वशीतरसौ सीधू पक्वमेक्षुरसौ क्रमात् ॥ [147b] ६२ ॥
शार्करो माधवो गौडः सितो मधुगुडादियुक् ।
जगलो मेदको मद्यपङ्कः किण्वं तु नग्नहूः ॥ ६३ ॥
नग्नहुश्च पुमांसौ द्वौ मद्यबीजं नपुंसके ।
श्वासुतिर्मद्यसंधा ※ [न]मासवोऽभिषवः समौ ॥ ६४ ॥
कारोत्तमः सुरामण्डो व्यापानं पानगोष्ठिका ।
स्त्रियामरिष्टः क्वथितैर्यन्मद्यं भेषजैः कृतम् ॥ ६५ ॥
सरकश्चषकश्चाबी गल्वर्कोऽप्यनुतर्षणम् ।
शुण्डापानं मदस्थानं मधुवारा मधुक्रमाः ॥ ६६ ॥
उपदंशावदंशौ द्वौ चक्षणं मद्यपाशनम् ।
सुरापः स्यान्मद्यपिचो मत्तस्तूत्कट-शौण्डकौ ॥ ६७ ॥

---

7104 सोषिती १७
7106 लोप्त्रं १; चोरी ३
7109 °जीवो ९
7111 मदता for °ना, मदिच्छा for °ष्ठा
7112 परीस्रु for परिस्रुद्
7117 °रसो १
7118 शार्करो १; गौड १
7119 °पङ्क ३
7120 °बीजं ४
7121 °पव ४
7122 °मंडो २; °गोष्टिका २
7123 °मरिष्टो १३; भेषजे
7124 °तर्पणं ४
7125 =AK, AC 906 *cd*, मदस्थानं ३; °क्रमा ३
7126 °पानं ४
7127 °पिबे २

क्षीवध्यामी विशेष्यज्ञा मद्यरोगो मदात्ययः ।
पणो ना स्यादक्षवती कैतवं च दुरोदरम् ।
दुरोदरं द्यूतमली * * * * * * * * ॥ ६८ ॥
दुरोदरं च न स्त्री स्यात्पाशक-प्रासकौ पुनः ।
आकर्ष-देवनाक्षाश्च तत्पणस्तु ग्लहो नरि ॥ ६९ ॥
बिन्दुत्रिकद्वये तु स्यादक्षाणां दुन्दुभिः स्त्रियाम् ।
आकर्षो ना शारिफलाष्टापदे च न योषिति ।
शारिः[148a]पुमान्द्वयोः शारा खेलन्यासा समन्ततः ॥ ७० ॥
नयने परिणायः स्यात्प्राणिद्यूतं समाह्वयः ।
वञ्चुली तु स्त्रियां द्यूतक्रीडा स्यादभ्रिकास्त्रिभिः ॥ ७१ ॥
धूर्तोऽक्षदेवी कितवोऽक्षधूर्तो-
ऽक्षद्यूश्च देवा च तथाक्षकूरसः ।
स्याद् द्यूतकारी सभिकोऽथ भेद्य-
लिङ्गा मता योगभवा हि शब्दाः ॥ ७२ ॥

इति शूद्रवर्गः ।

कोषकल्पतरावस्मिन्विश्वनाथकवेः कृतौ ।
द्वैतीयीको धराकाण्डो वर्गैर्दशभिरीरितः ॥ ७३ ॥

इति श्रीविश्वनाथरचिते कोषकल्पतरौ द्वितीयो भूकाण्डः समाप्तः ॥ श्री ॥

---

7128 क्षीव ४; °त्यय २
7131 दुरोदर ५
7132 °नाक्षा ५ ध, ग्लहो २
7136 परिणाय १; °ह्वय १
7137 वंचुली १, °स्त्रिभि २
7140 सभिको १

इति शूद्रवर्गः

योे लोकपाता पाताले वबन्ध भवबन्धहृत् ।
बलिं वलिष्ठं स श्रेयोधाम नो वामनोऽवतु ॥ १ ॥
पातालनारकातङ्कैर्वर्गैः सगतिशालिभिः ।
नामालिविलसत्स्कन्ध. (?) पातालस्कन्ध उच्यते ॥ २ ॥
पातालं वलिसद्माधोभुवनं वाडवोऽस्त्रियाम् ।
रसातलं नागलोकोऽधोलोकोऽप्यव्ययं त्वधः ॥ ३ ॥
छिद्रं तु कुहरं रोकं रन्ध्र[148b]निर्व्यथनं बिलम् ।
निम्नं रोपं च विवरं भूक श्वभ्रं तथान्तरम् ॥ ४ ॥
शुपिरं सुपिरं चाली पुंसगाधो वपा-शुपी ।
द्वयोर्गर्ता दरस्त्रय्यामवटो सुजि भूबिले ॥ ५ ॥
श्वभ्रं क्लीबे चाथ रन्ध्रयुक्ते स्यात्सुपिरं त्रिपु ।
भावे सौपिर्यमच्छिद्रे नीरन्ध्र क्लीबमव्ययम् ॥ ६ ॥
तमो निशाचर्म खचर्म वृत्रो-
पकुध्वक स्यात्तमस तमं च ।
वृत्रोऽत्र ना ना न तमिस्रमुर्वी-
छाया पडस्त्री तिमिरान्धकारौ ॥ ७ ॥
स्यान्नीलपङ्कं दिनकेसरान्ध-
ध्वान्तानि तत्संतमसं प्रसारि ।
गादेऽन्धपूर्वं तमस विहीने
त्वत्रावपूर्वं तमस प्रदिष्टम् ॥ ८ ॥
अनन्धेऽन्धे भवत्यन्धंभावुकोऽन्धभविष्णुवत् ।
अनन्धमन्धं कुर्वाणे स्यादन्धकरणं त्रिपु ॥ ९ ॥
पातालौको दानव पूर्वदेवो
दैतेय स्यादासुरश्चासुरश्च ।
दैत्यो देवद्वेपणः शुक्रशिष्य-
स्तुज शक्रद्वेपण स्याद्दितीजः ॥ १० ॥

---

7147 °सद्मप
7150 रो
7151 रोे for रोपं
7152 °शुपी १७
7153 शुपिले for भूबिले
7154 छिद्रे ५, शुपिरं १
7155 सौबीर्यं १ म°
7161 °ध्वांतानि १५ तत्संतमसं १
7162 तमसं १
7164 °भविष्णु २ म्र.
7165 °करं १
7166 °लौका

हिरण्यकशिपुर्दैत्यराजो वैरोचनो बलिः ।
शिशुपालश्चे[149a]दिपतिः कंसो भोजपतिर्भवेत् ॥ ११ ॥
द्वैमातुरो जरासंधो मगधाधिपतिश्च सः ।
भौमस्तु नरको दैत्यभेदा बाणादयः परे ॥ १२ ॥
काद्रवेयाः पुनर्नागास्तेषां भोगवती पुरी ।
शेषो नागाधिपोऽनन्त-आलुकौ द्विसहस्रदृक् ॥ १३ ॥
सितपङ्कजचिह्नश्च सर्पराजस्तु वासुकिः ।
श्वेतो नीलसरोजाङ्को लोहिताङ्गस्तु तक्षकः ॥ १४ ॥
स्वस्तिकाङ्कितमौलिश्च महापद्मोऽतिशुक्लकः ।
दशबिन्दुकमौलिश्च शङ्खः स्यात्पीतवर्णकः ॥ १५ ॥
इन्दुरेखाङ्कितगलो ज्वालाधूमसमप्रभः ।
कुलिकोऽर्द्धेन्दुमौलिः स्यान्नागभेदास्तु कम्बलः ॥ १६ ॥
बलाहकोऽश्वतरको धृतराष्ट्रादयः परे ।
कालीयः स्यात्कालियको गोनासस्तु तिलित्सकः ॥ १७ ॥
गोनसो घोणसो चो(व्या?)डो मण्डली वाहसः पुनः ।
शयुस्तनजोऽजगरः शीवा शीरः शयानकः ॥ १८ ॥
शयुनः शयथश्चक्रमण्डल्यन्ते शयालु च ।
पारीन्द्रो राजसर्पस्तु भवेत्पन्नगभोजनः[149b] ॥ १९ ॥
कुकुट्यहिः कुकुटाभो राजिलो डुण्डुभः समौ ।
अलगर्दोऽलगर्दश्च जलव्यालो द्वितुण्डकः ॥ २० ॥
ब्रह्मसर्पोऽश्वलाला स्यान्मालुधानस्तु मातुलः ।
सुरकस्तु सुरावर्णो दन्दशूको निगद्यते ॥ २१ ॥
निर्मुक्तश्च निर्लयनिर्मेघवन्मुक्त*[कञ्]चुकः ।

---

7170 °राजो २
7171 °पति २, केशे for कंसो, °पति २
7172 °पति ३ थ
7173 नरको २
7174 भोगवती १
7175 आलकौ
7177 °जाको ३ लोहितीगस्तु
7178 °मौलि ३ थ
7179 °मौलि ३ थ
7180 °गलो ३ ज्वालाधूमसप्रभ
7181 °मौलि ३
7182 °हको १ श्वतरको १ धृतराष्ट्रा १ दय
7183 °यको २
7184 गोभसो for गोनसो, मंडली ५
7185 शयुन for शयुन
7186 शयालु for शयालु
7188 कुकुटाभो २, डुंडुभ २
7189 अलगर्दालगर्दश्च, द्वितुंडक ४
7190 °लाला २
7192 °श्चानिर्लयति, मुकचुक ३ (corrupt)

सविषा निर्विषा वापि सर्पा दृग्विषनामकाः ॥ २२ ॥
वृश्चिकाद्या लूमविषा व्याघ्राद्या लोमसद्विषाः ।
लालाविषास्तु लूताद्या कालान्तरविषाः पुनः ॥ २३ ॥
मूषिकाद्या नराद्यास्तु नखक्ष्वेडाः प्रकीर्तिताः ॥ २४ ॥
सर्पः पृदाकुर्भुजगो भुजंगो
भुजंगमाशीविष-गूढपादाः ।
दर्वीकरः स्यादुरगश्च भोगी
चक्षुःश्रवश्चक्रि-सरीसृपाश्च ॥ २५ ॥
फणी कुण्डली मण्डली दन्दशूको
द्विजिह्वस्तथा जिह्मगः पन्नगश्च ।
भवेद्भेकभुकञ्चुकी दीर्घपृष्ठ-
स्तथा दीर्घजिह्वः स काकोदरश्च ॥ २६ ॥
व्यालानिलाशन-विषायुध-लेलिहाना
द्वंद्वे त्वहिर्विषधरो रसनाविषश्च ।
कुम्भीनसोऽपि स्वदरश्च विलेशय[150a]श्च
गोकर्ण-नागक-फणायुध-काद्रवेयाः ॥ २७ ॥
त्रिष्वाहेयं तदङ्गादि भोगस्तु व्यालविग्रहः ।
निर्मोकः कञ्चुकस्त्वस्त्री*[स्त्रि]यां निर्ल्वयनी तथा ॥ २८ ॥
भोगो दर्वी द्वयोस्तु स्युः फण-स्फट-फट-स्फुटाः ।
कफेलुः स्त्री च दाढा स्यादाशीरास्यहिर्दंष्ट्रिका ॥ २९ ॥
सर्पक्षतं तु दंशः स्यात्सर्पाण्डे पुनरीरितौ ।
समौ सुनार-साण्डौ न तु स्त्री गरलं विषम् ॥ ३० ॥
हालाहलं हाळहलं काकोलं च हलाहलम् ।
कालकूटं रसत्तीक्ष्णं क्लीबे मधुरकं च तत् ॥ ३१ ॥
कृत्रिमं तु विषं*[घो]रं गरश्चोपविषं समम् ।
दूषीविषं त्ववीर्यं तदौषधादिप्रभावतः ॥ ३२ ॥

---

7194 °सद्विपाः १
7195 =AC. 1319 ab. °विपास्तु; कालीतर°
7196 °क्ष्वेडाः १
7198 °पादः
7209 °हेयं १
7210 °निल्यनी २
7212 °लुः स्त्री ७; °रास्यहि°
7213 दंशः १ स्या°; सर्पंडि
7214 °रंडौ २
7215 हलाहकं
7216 मधुरकं ८
7217 °पविषं ५

आदीपनौ दारदश्च मकरश्च परे पुनः ।
अहिच्छत्रो मेषशृङ्गो कुष्ठ-वालुक-नन्दनाः ॥ ३४ ॥
कैराटिको हैमवतो मर्कटः करवीरकः ।
सर्षपो मूलको गारार्द्रकः सक्तुक-कर्दमौ ॥ ३५ ॥
अङ्कोलसारः कालिङ्गः शृङ्गिको मधुसिक्थकः ।
विस्फुलिङ्गः पिङ्गले[150b]न्द्रो सगरं लाङ्गलिकाद[य]ः ॥ ३६ ॥
स्थावरा विषभेदाः स्युर्हयचालाहि फेनकः ।
विषशास्त्रं जाङ्गलं स्याच्चकाटो विषशास्त्रवित् ॥ ३७ ॥
कथाप्रसङ्गश्च मतो भवेज्जाङ्गलिकान्ययत् ।
व्यालग्राही जीवकः स्यादाहितुण्डिक इत्यपि ॥ ३८ ॥
अहितुण्डिक उक्तोऽथ विषादो विषभक्षकः ।
विष्यो विषेण वध्यो यो व्यालग्राह्यादयस्त्रिषु ॥ ३९ ॥

इति पातालवर्गः ।

स्यान्नारकस्तु नरकः परेत-प्रेत-यातिनः ।
स्यादातिवाहिकोऽथ स्यान्नरको नारकोऽपि च ॥ १ ॥
निरयो दुर्गतिः स्त्री स्याद्धिष्टिस्त्वाजूः स्त्रियामुभे ।
कारणा यातना तीव्रवेदना च समा इमाः ॥ २ ॥
तपनः स्यादवीचिस्तु द्वंद्वे संहार-रौरवौ ।
स्यान्महारौरवः कालसूत्रं तामिस्रमित्यपि ॥ ३ ॥
कुम्भीपाकान्धतामिस्रासिपत्रविपिनादयः ।
बहवो नारका भेदा गदिताः पापकर्मणाम् ॥ ४ ॥
सिन्धुर्वैतरणी प्रोक्ता तत्रालक्ष्मीस्तु निर्ऋतिः ।
सीमन्तकाद्या बौद्धादि [151a] शास्त्रे नरकवासिनः ॥

इति नारकवर्गः ।

---

7219 आदियनौ १ दारद १ थ मकर १ थ
7220 °छत्रो १ मेषभृंगा १; °नंदनः १
7221 हैमवतो १ मर्कटः १ करवीरकः १
7222 सर्पपो १ मुलको १ गारार्द्रकः १ सत्तुक १ वर्द्दमौ १
7223 °सारः १ कालिंगः १ भृंगिको १; °सकियकः
7224 विस्फूलिंगः १ पिंगले १ द्रो १; °लिका १ दः
7225 °फेनकः २
7226 जांगलं २
7227 °लिको ४ न्ययत्
7229 °तुंडिक ४
7230 विष्यो १

इति पातालवर्गः ।

7232 °वाहिको ५
7233 दुर्गतिः ४; °स्त्वाजू २
7235 तपनः १ स्यादवीचि १ स्तु ^ संहार १ रौरवौ १
7236 °सूत्रं १ तामित्र १ मि°
7237 °पाका १ धतामिस्र १; °विपिना १
7239 °वैतरणी १
7240 °काद्या

इति नारकवर्गः ।

आतङ्क-तङ्कावस्कीकावम आम-गदामयाः ।
क्षयीचिरुपतापश्चामन-रोगौ च रुग्रुजे ॥ १ ॥
पाप्माबाधो विकारश्च यक्ष्मा यक्ष्मश्च जन्म(क्ष्म?)वत् ।
व्याधिर्ना दुःखमाकल्पं मान्द्यं खिद्रोऽप्यपाटवम् ॥ २ ॥
प्रतीकार्यस्तु साध्योऽसौ याप्यस्त्वाजीवितस्थितिः ।
असाध्यः क्षेत्रिया दोषा वात-पित्त-कफास्त्रयः ॥ ३ ॥
शारीरा मनसस्तु स्याद्वौ दोषौ हि रजस्तमः ।
संसर्गः संनिपातश्च तद्द्वित्रिक्षयकोपतः ।
रसाद्याः समला दूष्याश्चयो वृद्धिः स्वधाम्नि या ॥ ४ ॥
पक्वाशयाद्या वातस्य स्थानं नाभ्यादयः पुनः ।
पित्तस्य श्लेष्मणस्तु स्यादुरःप्रभृतिकं स्थलम् ॥ ५ ॥
उन्मार्गगामिता कोपः परस्थानगतिः पुनः ।
प्रसरः स्थानसंस्थानं व्याप्तिर्या परवेश्मनाम् ॥ ६ ॥
व्यक्तिस्तु रोगप्राकट्यं भेदेन सहिता इमे ।
चयादयो दोषगति[ः]र्निमित्तं तु निदानकम्[151b] ॥ ७ ॥
उत्थानायतने हेतुः प्रत्ययश्च निगद्यते ।
प्राग्रूपं भाविरोगस्य ज्ञापकं लक्षणं हि यत् ॥ ८ ॥
संस्थानं व्यञ्जनं लिङ्गं लक्षणं रूपमित्यपि ।
आकृतिः स्यादुपशयो व्याधेर्यः शमकारकः ॥ ९ ॥
पोषकर्तानुपशयः संप्राप्तिर्जातिरागतिः ।
दोषाणां समवेतानां विकल्पोऽशांशकल्पना ॥ १० ॥
व्याधिना जनितो रोग उपद्रव इति स्मृतः ।
शाखा त्वगसृगाद्यं स्याद्बहिर्मार्गश्च सा स्मृता ॥ ११ ॥

---

7241 आम ५ गदामयाः
7242 °श्चामतरोगो
7244 °प्यपाटवं २४
7245 साध्यो २ सौ; याप्य १ स्त्वाजीविता स्थितिः
7246 क्षेनिया १ दोषा १ वात १ पित्त १ कफा १
7247 °रामनयस्तु
7248 = Aṣṭāṅga, Sūtrasthāna, adhy. 1. śl 17 ससर्गः १ संनिपात १ श्च
7249 दूष्या १ श्चयो
7252 कोपः १
7253 प्रसरः १ स्थानसंस्थानं १
7254 व्यक्ति १ स्तु रोगप्राकट्यं २
7255 दोषगति १ निमित्तं १
7256 प्रत्यय ६ श्च निगद्यते ॥ ८
7257 प्राग्रूपं १
7259 आकृतिः ६; °शयो १
7260 °नुपशय १; °रागतिः ३
7261 = *Mādhavanidāna* Pañcanidānalakṣaṇa st. 12 ab.
7262 उपद्रव १
7263 बहिर्मार्ग २ श्च

कोष्ठाद्यमन्तर्मार्गः स्यात्संधयस्तु शिरोमुखाः ।
रुजादिवृद्धिः संरम्भोऽथोपद्रवविहीनता ॥ १२ ॥
अल्पवेगः स्त्रियां तूषा भवेच्चिमिचिमायनम् ।
उत्क्लेशः पाकतो मन्दा दोषाणां स्वाशयाच्च्युतिः ॥ १३ ॥
हृल्लासो हृदयादीषद्व्यथः पट्वम्बुनिर्गमः ।
तृप्त्यैवान्नास्पृहातृप्तिररुचिः स्यादरोचकः ।
अश्रद्धान्नारोचकोऽथाविपाकोऽन्नापचिः स्त्रियाम् ।
ज्वरो रोगपतिर्दक्षाध्वरध्वंसी तथान्तकः ।
ओजोशनस्तथा क्रोधो रुद्रोर्ध्वनयनोद्भवः ॥ १५ ॥
[152a]संतापकः स्त्री जूर्जूर्तिर्वातिकस्तु स वातजः ।
पैत्तिकः पित्तजन्मासौ श्लैष्मिकस्तु बलासजः ॥ १७ ॥
ज्वरः स्यात्प्रकृतिसमसमवेतः स्वहेतुना ।
तुल्यो विकृतिविषमसमवेतोऽन्यथा भवेत् ॥ १८ ॥
नित्यज्वरः स श्वयथुर्भवेद्वातबलासकी ।
सांसर्गिको द्वंद्वजः स्यात्त्रिचयोस्थस्त्रिदोषजः ।
स्यात्सांनिपातिकश्चाथ संधिगाधा हि तद्भिदः ॥ १८ ॥
नृणां ज्वरो[ज्वरा]द्दः स्यात्पाकलः करिणामसौ ।
हयानामभितापः स्यादुष्ट्राणामलसो मतः ॥ १९ ॥
महिषाणां हरिद्रोऽसावीश्वरोऽनडुहामयम् ।
रासभानां खोरकः स्यान्मृगाणां तु मृगामयः ॥ २० ॥
शुनामलर्कोऽजाव्योस्तु स प्रलेपकनामकः ।
उष्णीषसंज्ञः सर्पाणामन्नानां चूर्णको मतः ॥ २१ ॥
कुङ्कुमाह्वस्तु गोधूमे भूमौ तूपाभिधो मतः

---

7264 °मार्गः १ स्यात्संधय १ स्तु
7265 संरंभो १
7266 अल्पवेगः २ स्वयानूषा १; °मायनं २
7267 उत्क्लेशः १
7268 हृल्लासो १
7269 तृप्ति १ ररुचि°; °चकः २
7270 अश्रद्धा १
7273 जूर्जूर्ति°; वातजः २
7274 पैत्तिकः पित्तजन्मा २
7276 °समवेतो १
7277 °स्त्री १
7278 द्वंद्वजः २
7279 °पातिका ३ श्चाथ संधिगाधा १
7280 द्दः १ स्यात्पाकलः १
7281 °मलसो १
7282 हरिद्रो १ सावीश्वरो १
7283 खोरकः १; मृगाणां तु is repeated
7284 °मलर्को १; प्रलेपक १
7285 उष्णीष १; चूर्णको १
7286 कुङ्कुमाह्व १ स्तु

यथर्तु वृद्धदोषोत्थः प्राकृतो वैकृतः परः ।
अपक्वदोषः सामोऽसौ निरामस्तु ततोऽन्यथा ॥ १९ ॥
संततो नि[152b]त्यवृत्तिः स्याद्विषमः सततादिक[ः] ।
सततोऽह्नि द्विरावृत्त्याथान्येद्युष्को दिने सकृत् ॥ २० ॥
स्यात्स्यात्यहिकनामाथ तृतीयेऽह्नि तृतीयकः ।
चतुर्थकश्चतुर्थेऽह्नि द्याहिक-त्र्याहिकौ पुनः ॥ २१ ॥
क्रमाद्विपर्ययौ प्रोक्तौ तृतीयकचतुर्थयोः ।
शीतकस्तु स शीतादिरुष्णकस्तूष्णपूर्वकः ॥ २२ ॥
विशिष्टस्तु स शीतादिः शुद्धः शीतादिवर्जितः ।
अन्तर्दाहतृषायुक्तो ज्वरो गम्भीर उच्यते ॥ २३ ॥
ज्वरितो ज्वरवाञ्जूर्णो ज्वरी च परलिङ्गकः ।
दाहः सर्वाङ्गसंताप ओपस्त्वरतिधर्मवान् ।
प्लोषोऽर्चिषेव दग्धाङ्गे विदाहः संधिपाणिषु ॥ २४ ॥
रक्तपित्तं पित्तरक्तदोषो नासादिभिः स्रवन् ।
तदूर्ध्वगाम्यपानादिस्राव्यधोगं प्रकीर्तितम् ॥ २५ ॥
काशस्तु कासः क्षवथुः पीनसः स्यादपीनसः ।
प्रतिश्यायः प्रतिश्या स्त्री क्षुत्क्षवः क्षुतमन्तिमे ॥ २६ ॥
उपेक्षितः प्रतिश्यायो दुष्टपी[153a]नस उच्यते ।
नस्या रोगाः पूतिनास-नासानाहादयः परे ॥ २७ ॥
कफोपरुद्धगमनः पवनः श्वास उच्यते ।
श्वासभेदाः क्षुद्रकः स्याच्छिन्नश्च तमकस्तथा ॥ २८ ॥
महानूर्ध्वः प्रतमको द्विधा हिक्का च हिक्कितम् ।
भेदाः क्षुद्रा च यमला गम्भीरा महतीति च ॥ २९ ॥

---

7287 प्राकृतो १; पदः ( for परः )
7288 सामो १ सौ निराम १ स्तु ततोन्यथा १
7289 निलवृत्तिः २ स्याद्विषमः १
7290 सततो १ ह्वि
7291 °ह्कि २ नामाथ
7292 च्चतुर्थक १; द्याहिक १ न्याहिकौ १ पुन.
7294 शीतक १ स्तु °रुष्णक १ स्तुष्ण°
7295 विशिष्ट १ स्तु; शुद्धः १
7296 गंभीर १
7298 °संताप २ ओप १ स्त्व°
7299 प्रोषोऽ१र्चिषवदग्धंगे विदाहः १
7300 रक्तपित्तं १
7301 °स्राव्यधोगं १
7302 क्षवथुः ३
7303 प्रतिस्या ४
7305 पूतितिनास १
7306 कपोपरुद्ध°; °श्वास १
7307 क्षुद्रक १ स्याच्छिन्नं १ श्च
7308 महा १ नूर्ध्वप्रतमक १; हैक्कितं ३
7309 क्षुद्रा १ च यमला १; महती १

यमला वेगिनी प्रोक्ता परिणामवती सगा ।
रोगराजो राजयक्ष्मा यक्ष्मा जक्ष्मा च यक्ष्मवत् ॥ ३० ॥
क्षयः शोषश्चाथ भवेत्स्वरभेदः स्वरक्षयः ।
प्रच्छर्दिका वमिश्छर्दिः स्त्रियां छर्दिस्तु पुंसि न ॥ ३१ ॥
वमथुर्वमतिश्चाथापक्वाहारे त्वजीर्णकम् ।
आमं कफाद्विदग्धं तु पित्तात्स्यादम्लपित्तकम् ॥ ३२ ॥
अम्लकस्त्वम्ल उद्गारः सान्तर्दाहः सतृड्व्यथः ।
धूमायनं शिरोग्रीवाकण्ठतालुषु धूमकः ॥ ३३ ॥
विष्टब्धाख्यं तदनिलदुर्गत्योः शूलमस्त्रियाम् ।
आध्मा आध्मानमानाह उदरापूर इत्यपि ॥ ३४ ॥
उदावर्तस्तु वाता[153b]दिस्रोतोरोधः प्रकीर्त्यते ॥
उद्गारः स्यादूर्ध्ववात आटोपस्त्वत्र निस्वनः ॥ ३५ ॥
विष्टम्भी स्यादलसको विसूची तु मलव्यथा ।
अजीर्णभेदोऽन्नविषं स्त्रियामुक्ता विलम्बिका ॥ ३६ ॥
जाठरोऽग्निः समः प्रोक्तो यो भुक्तं भेषजं तथा ।
चतुर्भिः पचति द्वाभ्यां प्रहराभ्यामनुक्रमम् ॥ ३७ ॥
स तीक्ष्णः शीघ्रपाकी स्यान्मन्दस्तु चिरपाचकः ।
अथानियतपाकोऽग्निर्विषमः परिकीर्तितः ॥ ३८ ॥
मिश्रं पथ्यमपथ्यं च भुक्तं समशनं मतम् ।
विद्यादध्यशनं भूयो भुक्तस्योपरि भोजनम् ॥ ३८ ॥
विरुद्धमशनं तस्माद्विरुद्धद्रव्यभोजनम् ।
संकीर्णानां गृहे भुक्तिः संकीर्णाशनमुच्यते ॥ ३९ ॥

---

7310 परिणामवती ३
7312 क्षयसोप ७ था°; स्वरक्षयः २
7313 वमिर्छर्दिः स्त्रियां छर्दि तु पुंलिनः
7314 °हारे २ स्वजीर्णकं २
7315 आमं १; °पित्तकं २
7316 अम्लक १; सतृड्व्यथेः
7317 धूमकः १
7318 विष्टब्धाख्ये १; दल ३
7319 °रापूर ४
7320 उदावर्त १ स्तु
7321 °वात २ आटोप १
7322 °भगो २; मलव्यथा २
7323 °भिं १.
7324 समः १
7325 तीक्ष्णः १ शीघ्रपाकी ३
7327 विषमः १
7328 = Aṣṭāṅga, Sūtra, adhy. 8, ś1. 33. समशनं १
7329 °ध्यशनं १
7330 विरुद्ध १
7331 °नम् १

हृद्रोगः पुंसि हृद्रुक्स्त्री संन्यासो मद्यपानजः ।
गुदाङ्कुरोऽर्शमर्शश्च तद्वांस्त्वर्शसः स्मृतः ॥ ४० ॥
विबन्धो वातविड्रोधो ग्रहणी रुक्प्रवाहिका ।
चर्मकीलं चर्मशङ्कुरतीसारस्तु विद्स्रुतिः ॥ ४१ ॥
स्यादतीसारकी मेचलिङ्गोऽतीसारपीडितः ।
मूत्राघा[154a]तो मूत्रकृच्छ्रमश्मरी-शर्करे समौ ॥ ४२ ॥
वाताष्ठीला-वातकुण्डलिकाद्या मूत्रजा गदाः ।
मेहः प्रमेहो याप्योऽसौ मधुमेहः प्रकीर्तितः ॥ ४३ ॥
शराविका कच्छपिका जालिनी विनताल्जी ।
मसूरिका सर्षपिका पुत्रिणी च विदारिका ॥ ४४ ॥
द्वंद्वे विद्रधिरेताः स्युः पिटिका दशमेहिनाम् ।
करण्डो वर्ध्मो वृद्धिः स्त्री गुल्मोऽस्त्री जठरोपलः ॥ ४५ ॥
पक्वाशयादधःशूले तून्यन्या तु प्रतूनिका ।
कुक्षिरोगः स्यादुदरं तत्तु वै जलतां गतम् ॥ ४६ ॥
दकोदरं परिस्रावि तच्च रन्ध्रोदरं तदा ।
पाण्डुस्तु गद्गदोऽथ स्याद्धारिद्रः कामला द्वयोः ॥ ४७ ॥
स्यात्कुम्भकामला सैव यदि शोफसमन्विता ।
हलीमकः स्यादलसः श्वयथुः शोथ-शोफकौ ॥ ४८ ॥
त्रिपु शूनः शोफयुतो विसर्पी तु विसर्पवत् ।
तद्भेदास्त्वग्निनीसर्प-ग्रन्थिनीसर्पकादयः ॥ ४९ ॥
कुष्ठोऽस्त्री त्वग्गदोऽथ स्यात्किलासं श्वि[154b]त्रदारुणे ।
अपरिस्रावि तद्भेदाः कापालं मण्डलादि च ॥ ५० ॥

---

7332 हृद्रुक् २; °पानज. २
7333 °मर्शश्च २; °श्वर्शसः १
7334 °पिप्राघो २; °हिका २ ,
7335 °शङ्कु २; विदुस्रुति· २ corrupt
7337 °कृच्छ्र २; °शर्करे २
7338 °ष्ठीला १; °लिका १
7339 प्रमेहो २; मधुमेहः १
7340 शराविका १ कच्छपिका १ जालिनी १ विनता१ल्जी
7341 मसूरिका १ सर्षपिका १ पुत्रिणी १ च विदारिका १
7342 विद्रधि १ रेताः
7343 वृद्धि· ३ स्त्री, °रोपलः २
7344 तून्य १; प्रतूनिका १
7345 °दुदरं २; वे for वै
7346 रन्ध्रोदरं ३
7347 गद्गदो २; कामला २
7348 °कामला १
7349 °दलस २; °शोफकौ ३
7350 °युतो २, विसर्पवत् २
7351 °वीसर्प २
7352 त्वग्गदो २
7353 तद्भेदाः ३ कापालं १

त्वक्पुष्प-सिध्मनी सिध्मं पादस्फोटो विपादिका ।
विपादिकालस्तु विपादिकायुक्तो विशेष्यवत् ।
पाम-पामे स्त्रियौ कच्छूः खसो ना स्त्री विचर्चिका ॥ ५१ ॥
खर्जूस्तु कण्डूः कण्डूया क्लीबे कण्डूयनं तथा ।
दर्दूर्दद्रुस्तथा दद्रूर्दद्रुरुच्छूनमण्डला ॥ ५२ ॥
पामनः पामरः पामायुतः कच्छुर इत्यपि ।
दद्रुणो दद्रुरोगी स्यात्पामनाद्या विशेष्यवत् ॥ ५३ ॥
शतारुषी शतारुः स्यादपतानोऽपतन्त्रकः ।
बाह्यायामो धनुःस्तम्भो वेगी च स निगद्यते ॥ ५४ ॥
एकायामोऽर्दितं क्लीबे भवेत्पक्षवधः पुनः ।
एकाङ्गरोगः सर्वाङ्गरोगः सर्वाङ्गवातजः ॥ ५५ ॥
विश्वाची गृध्रसी चोक्ता खल्ली तीव्ररुजान्विता ।
वातरोगविशेषाः स्त्री विश्वाची चाववाहुकम् ॥ ५६ ॥
गृध्रसीक्रोष्टुशीर्षश्च पादहर्षादयः परे ।
ऊरुस्तम्भस्त्वाढ्यवातो[155a]वातकी वातरुग्युतः ॥ ५७ ॥
खुडं वातबलासाख्यरोगौ स्तो वातशोणितम् ॥
विस्फोटकः स्फोटकः स्याद्गण्डोऽपि पिटकस्त्रिषु ॥ ५८ ॥
क्षणनुर्नी व्रणोऽस्त्री स्यात्क्षतं दुष्क(त्वक)ण्डुरोऽपि च ।
ईर्मर्मणी अर्वरुषी शुष्के त्वत्र कचः पुमान् ॥ ५९ ॥
व्रणसंमार्जनं झाटः खाटिः शुष्कव्रणस्थलम् ।
किणो रूढव्रणपदमथ नाडीव्रणः पुमान् ॥ ६० ॥
गतिर्नाडिश्च नालिः स्त्री दुष्टग्रन्थिः पुनर्गडुः ।
उपपायु तु सीवन्यां यो व्रणः स भगंदरः ॥ ६१ ॥

---

7354 सीध्मं ३ ( for सिध्मं ); विपादिका २
7355 °काल १ स्तु
7356 विचर्चिका ५
7357 कण्डूयनं ४
7358 दर्दूर्दर्दूस्तथादद्रूर्दद्रुरुच्छूनमंडला ५
7359 मामतः for पामनः, कर्च्छुर ३
7360 दर्दूरोगी २
7361 शतारुपि शतारुः २; °तन्त्रकः २
7362 धनुस्तंभोवेगी ३
7363 एकायामोर्दितं ३
7364 °रोगः २
7365 खली १
7366 विश्वाची १
7367 गृध्रसी १
7368 °वातो २
7369 °शोणितं ४
7370 स्फोटकः is repeated (with स्तो)
7371 दुष्कंडुरो
7372 कचः १ पुमान्
7373 झाटः १, °स्थलं २
7374 किणे १; नाडीव्रणः १

भगंदरविशेषाः स्युः शतपोनादयः परे ।
श्लीपदं पादवल्मीकमस्त्रियां पादगण्डिरः ॥ ६२ ॥
अर्बुदोऽस्त्री महाग्रन्थिर्गण्डमालापची च सा ।
युवगण्डो वरण्डः स्यात्स्त्रियां तु मुखदूषिका ॥ ६३ ॥
हनुसंधिसमुद्भूतः शोफः पाषाणगर्द्दभः ।
जडुल्यः कालकः पिप्लु***[तिलक]स्तिलकालकः ॥ ६४ ॥
क्षुद्ररोगविशेषाः स्युर्मसूरी चाजगल्लि[155b]का ।
इन्द्रविद्धा मण्डला च कक्षा लूताग्निरोहिणी ॥ ६५ ॥
नीलिका स्याज्जतुमणिर्भवेत्कोटस्तु मण्डलम् ।
बालरोगोऽलयः क्षीरालसकं च नपुंसके ॥ ६६ ॥
बालग्रहाः स्कन्दमुखा आविष्टस्त्रिषु तद्ग्रहः ।
तथोन्मादयुगुन्मत्तोऽथोन्मदिष्णुस्तु सोन्मदः ॥ ६७ ॥
स्मृत्यपायस्त्वपस्मारोऽपस्मारी त्रिषु तद्युतः ।
कृच्छ्रोन्मीलः पक्ष्मशातः पक्ष्मरोगाः परेऽपि च ॥ ६८ ॥
नेत्रपुष्पं तु शुक्रं स्यात्तिमिरं दृगपाटवम् ।
लिङ्गनाशो दृगान्ध्यं स्याद्दिवान्धाद्यास्तु दृग्गदाः ॥ ६९ ॥
आभिष्यन्दोऽक्षिकोपः स्यादधिमन्थः स वृद्धिमान् ।
सर्वाक्षिरोगाः शुष्काक्षिपाककाम्लोषिताद्यः ॥ ७० ॥
शीतादो दालनोऽथाधिदन्तो वर्द्धन इत्यपि ।
अधिजिह्वोपजिह्वौ तु जिह्वारोगौ प्रकीर्तितौ ॥ ७१ ॥
गलाङ्कुरो रोहिणी स्याच्छालूकस्तु गलर्गलः ।
शताङ्कुरा शतघ्नी स्याद्गलगण्डो गलार्बुदम्[156a] ॥ ७१ ॥

7378 °गंडिरः ३
7379 °ग्रंथि २ (repeated), °पची २
7380 °दूषिका ३
7381 °गर्दभः १
7382 जडुल्यः; °कालक ५
7383 मसूरी १ चाजगल्लिका १
7384 इद्रविद्धा १; नक्षा for लूता, °रोहिणी २
7385 नीलिको १; भवन् for भवेन्
7386 °लसकं ३
7387 १ बालग्रहाः १; आविष्ट १
7388 उन्मत्तो १; सोन्मदः २
7389 स्मारो २ पस्मारी १
7390 °न्मील. १ पक्ष्मशातः १
7391 शुक्रं २; दगपाटवं २
7392 दृगान्ध्यं १ स्याद्दिवाधा १ याद्य
7393 °कोपः २ स्यादधिमन्थ १
7395 शीतास्या दालनो २; वर्द्धन १
7396 °जिह्वो १ पजिह्वौ १
7397 रोहिणी २; °गलः २
7398 शतघ्नी २; °गंडा गलार्बुदं २

मुखदौर्गन्ध्यकर्तोर्घ्वेगुद उक्तो मुखामयः ।
अर्धावभेदकस्त्वर्धशिरोरोग उदीरितः ॥ ७२ ॥
शिरःकम्पः शिरस्तापः सूर्यावर्तादयोऽपरे ।
केशघ्नं त्विन्द्रलुप्तं स्यात्खलतिः क्रमकेशहृत् ॥ ७३ ॥
उपदंशो गुह्यरोगोऽथावमन्थः कफास्रजः ।
अन्तर्मुखी सूचिमुखीत्याद्या योनिगदाः पृथक् ।
ग्लान-ग्लास्नू त्वामयावी विकृतो व्याधितोऽपटुः ।
आतुरोऽभ्यमितोऽभ्यान्तो रुग्ण ******* ॥ ७५ ॥
मूर्छितो मूर्त-मूर्छालौ यूकालो बहुयूकक: ।
वार्तो निरामयः कल्य उल्लाघो निर्गदश्च सः ॥ ७६ ॥
दोषज्ञस्तु भिषग्वैद्य आयुर्वेदी चिकित्सकः ।
स्यादायुर्वेदिकः प्राणाचार्यः प्राणद इत्यपि ।
रोगहार्यगदंकारो ग्लानाद्याः स्युर्विशेष्यवत् ॥ ७७ ॥
अष्टाङ्ग आयुर्वेदः स्यादब्जो धन्वन्तरिः स्मृतः ।
वैद्यनाथश्चाथ भवेच्चिकित्सा स्त्री चिकित्सितम् ॥ ७८ ॥
उपचर्योपचारोऽथ भे(भै)षज्यं भेषजं स[156b]मे ।
तत्रं जीवन्त-जायू नागद औषधमस्त्रियाम् ॥ ७९ ॥
प्रवाहिकातस्तु भवेदव्ययं तच्चिकित्सने ।
संतर्पणं बृंहणं स्याल्लङ्घनं त्वपतर्पणम् ।
शोधनं दोषनिर्हारि शमनं दोषशान्तिकृत् ॥ ८० ॥
कोष्ठशुद्धिर्विरेकः स्याच्छिरोरेकस्तु नावनम् ।
स्नेहनस्यो ह्रस्वमात्रो मर्षोऽन्यः प्रतिमर्षकः ॥ ८१ ॥

---

7399 °र्ध्वेगुद १
7400 °रोरोग २
7401 °स्तापः १
7402 °लुप्तं २; °हृत् २
7403 °रोगे: स्थावमंथः कफास्र(स repeated )जः
7404 °मुखी १ सूचिमुखी १
7405 = var. A. K. l. 1189
7406 The last portion is corrupt.
7407 °मूर्छालौ ३; °यूकक: २
7408 निर्गद ५ ख=var. A. K. l. 1188
7409=A. C. 472 ab
7410 प्राणाद
7411 °कारो १
7412 आयुर्वेदः २
7413 वैद्यनाथ ३
7414 °र्योपचरो
7415 औषध ५
7416 प्रवाहिकात १ स्तु
7417 बृहणं २
7418 °निर्हारि २
7419 °विरेक २; नावनं २
7420 मर्षौ १ न्यप्रतिमर्षकः १

कल्काद्यैरवपीडः स्याद् ध्मानश्चूर्णैर्विरेचनैः ।
प्रदेशिन्यङ्गुलीपर्वद्वयान्मग्नसमुद्धृतात् ॥ ८२ ॥
यावत्पतत्यसौ बिन्दुरथ पर्येति दक्षिणम् ।
जानु यावत्कराग्रं स्वं तावन्मात्रा प्रकीर्तिता ॥
आस्थापनं निरूहः स्याद्बस्तिकर्म च संमतम् ।
फलवर्तिर्गुदे क्षेप्या वर्चिर्मलविशोधिनी ॥ ८४ ॥
अन्वासनं स्नेहवस्तिरनुवासोऽनुवासनम् ।
ह्रस्वमात्रा स्नेहवस्तिर्मात्रावस्तिः प्रकीर्तितः ॥ ८५ ॥
मूत्रस्रोतः प्रयोज्योऽसौ भवेदुत्तरवस्तिकः ।
निरूहान्वासयोरर्हौ निरूह्यान्वास्यकौ त्रिषु ॥ ८६ ॥
पञ्चकर्म वमी रे[157a]को निरूहोऽन्वासनावने ।
संसर्जनं तु संसर्गी प्रोक्तः पेयादिकक्रमः ॥ ८७ ॥
षडङ्गं शृतशीताम्बु घनाद्यैस्तृप्यति ज्वरः ।
वचाकिण्वादिभिस्तूर्णैरुपनाहोऽनुलेपनम् ॥ ८८ ॥
संस्तरः प्रस्तरस्वेदो नाम्रा(ड्या ?)ल्यो धूम ※ कृतः ।
पिण्डस्वेदः संकराख्यो भेदास्ते त्रय ऊष्मणः ॥ ८९ ॥
प्रतिसारणमङ्गुल्या घर्षणं वदनादिषु ।
पिण्डो रसक्रिया चूर्णस्तिस्रोऽञ्जनविकल्पनाः ॥ ९० ॥
बिडालको बहिर्लेपो नेत्रे पक्ष्मविवर्जिते ।
प्रत्यञ्जनं तीक्ष्णतमे चूर्णे नेत्रप्रसादनः ॥ ९१ ॥
रसक्रियावलेहः स्यात्पिण्डस्तु गुटिका मता ।
आश्च्योतनं त्वक्षिसेकस्तस्य कालो निशा मता ॥ ९२ ॥

---

7421 °पीडः १ स्याद् ध्मानः १
7422 = Astāṅga, Sūtrasthāna, adhy. 20. s'l. 9
7423 बिदु १
7424 °न्माना १
7426 फलवर्ति १
7427 °वासनं ४
7428 °मात्रावस्ति: १
7429 °रवस्तिकः १
7430 °स्यकौ १
7431 पञ्चकर्म १; निरुहो १ न्वासनावने १
7433 षडङ्गं १; ज्वरो
7434 उपनाहो १
7435 सस्तरः १; नामाख्यो १
7436 सकराख्यो १
7437 प्रतिसारण १
7438 पिंडो १ रसक्रिया १ चूर्णं १ स्तिस्रो
7439 बिडालको १
7440 प्रत्यंजनं १
7441 रसः क्रिया १; गुटिका २
7442 °सेक २; नेशा १

पाण्डुकं नवकं तुल्यलोहचूर्णं नवायसम् ।
रसस्तु स्वरसोऽथासौ स्थितो रात्रिदि( द्र )वे हिमः ॥ ९३ ॥
कल्को विनीयो वाःपिष्टश्चूर्णः पिष्टः शिलादिभिः । 7445
[157b]यत्र कल्कः सिद्धतैले क्षेप्यः कल्कोऽतिगन्धवान् ॥ ९० ॥
शृतः क्वाथः पादशेषोऽथानायासकृतो हि यः ।
फाण्टोऽभिपुत*[ पू ]तो स्त्री गुटी तु वटिका द्वयोः ॥ ९५ ॥
रसः कल्कः शृतः शीतः फाण्टश्चेति कषायकाः ॥ ९६ ॥
कषाययोनयः पञ्च रसा लवणवर्जिताः । 7450
वाजीकरं वृषहितं वयःस्थायि रसायनम् ॥ ९७ ॥
कुटीप्रावेशिकं तत्स्याद्वातातपनिषेधयुक् ।
वातातपसहं वातातपिकं च विशेष्यवत् ॥ ९८ ॥
चन्द्रोदयस्तु मकरध्वजनामा रसः स्मृतः ।
स्वास्थ्यं स्वनामयं वार्तमारोग्यं सद्यमित्यपि ॥ ९९ ॥ 7455
भिषक्सहाय-भेषजामयाविनश्चतुर्गुणाः ।
चिकित्सितस्य पादकाश्चिकित्सकैर्निरूपिताः ॥ १०० ॥
श्रीविश्वनाथरचिते कोपकल्पतराविह ।
पातालादित्रिवर्ग्यायं पातालस्कन्ध ईरितः ॥ १०१ ॥

श्री । इति श्रीविश्वनाथकृते कोषकल्पतरौ
पातालकाण्डस्तृतीयः ॥ ३ ॥

*

7443 नवायसं १
7444 स्वरसो २; हिमः १
7445 विनीयो २; चूर्ण- १
7446 कल्कः १
7447 पादशेषो ३
7448 वटिका २
7449 कषायकाः १
7450 °योनयः १
7451 वृषहित १; °यर्न २
7453 °तपिकं २
7454 °ध्वजं २ नामा
7455 सद्य ५